महावीरस्तवप्रकरणे—

## ॥ तृतीयो विभागः ॥



यदीयास्संयुक्ताः प्रवरनवखण्डा अपि कलौ, नयन्ते द्रष्टॄन् नॄन् वरशममुदाश्चर्यपदवाम् ।
सद्दृष्टिज्ञानाख्याऽप्रतिहतशिखाभ्यां त्रिभुवन--प्रकाशिभ्यां नित्यासमसमुदयाभ्यां च नितराम् ॥१॥
यदीयश्चिद्दीपो हृदयभवनस्थोऽपि सुतराम् ।
पराभूतानित्योदयरवितमिस्रापतिमहो, स गोघेशः पार्श्वो जयति नवखण्डेति भगवान् ॥२॥
अहो चित्रं कीदृक् प्रकटयति सर्वार्थनिकरम्,

यदाकारं ज्ञानं तेन तत्सिद्धिरिति घटाद्याकारेण विज्ञानेन सिद्धस्य बाह्यस्य घटादेरहमाकारेण चालयविज्ञानेन च सिद्धस्याभ्यन्तरस्यात्मनस्सद्रूपत्वात्क्षणिकत्वमित्यभ्युपगच्छतस्सौत्रान्तिकस्य बौद्धविशेषस्य मतं निरस्य यच्चेतसि प्रतीयते तच्चिद्रूपमेव प्रतीयते

तत्तद्वस्तुनो नित्यानित्यत्वादिधर्मविचारे तत्तद्वस्तुगतासाधारणधर्मेण यस्यैव सम्भवस्तस्यैव प्रथममुपस्थितिरिति वस्तुस्थितेराश्रयणे वीतरागजन्मादर्शनन्यायादिनाऽऽत्मत्वेनाऽऽत्मनो नित्यतयैव सिद्धेस्तद्रूपेण तत्र प्रथमतो नित्यत्वस्यैव स्फूर्त्तिरिति नित्यत्वमेव प्रधानतयाऽऽत्मनो धर्मः, एवं घटादेर्मृदादिरूपेण नित्यत्वेपि घटत्वेन घट उत्पद्यते विनश्यतीत्यादिप्रत्यक्षादिप्रमाणेन घटत्वेन घटस्योत्पत्तिमत्तयैवोपलब्धेः प्रथमतोऽनित्यत्वस्यैव स्फूर्त्तिरित्यनित्यत्वमेव प्रधानधर्म इत्यभिप्रेत्याह–पुरः स्फूर्त्तिकतयेति, अत एवेति, नित्यत्वं गगनस्येव घटस्यापि अनित्यत्वञ्च घटस्येव गगनस्यापि धर्मस्तथापि घटे घटत्वेन मुख्यधर्मेण नित्यत्वस्यासत्त्वादनुपस्थितिरनित्यत्वस्य च सत्त्वादुपस्थितिः, गगने च गगनत्वेन मुख्यधर्मेणानित्यत्वस्यासत्त्वादनुपस्थितिः नित्यत्वस्य च सत्त्वादुपस्थितिरित्युपस्थितानुपस्थितयोर्मध्ये उपस्थितस्यैव ग्रहणमिति न्यायेन घटेऽनित्यत्वमेव गगने च नित्यत्वमेव मुख्यधर्म इत्यत इत्यर्थः, एतदेव विशदयति–आदीपेत्यादिना, आदीपमाव्योम समस्वभावं, स्याद्वादमुद्रानतिभेदि वस्तु ॥ तन्नित्यमेवैकमनित्यमन्य-दिति त्वदाज्ञाद्विषतां प्रलापाः ॥ १ ॥ इतिसंपूर्णः श्लोकः । एकैकव्यवहारेति, गगनत्वेन गगनं नित्यमेव घटत्वेन घटोऽनित्य एवेति व्यवहारेत्यर्थः;

इत्थमेव भजनायामपि भजनोपपत्तेः, विधिनियमभङ्गवृत्तिव्यतिरिक्तस्य च स्वसमयत्वानुपपत्तेर्नयचक्रवालादौ प्रदर्शितत्वात्, एवं च गगनमनित्यं घटो नित्य इत्यादेः केवलप्रयोगस्याप्रामाण्यम्, नित्यत्वानित्यत्वादिविशिष्टवाचकपदसमभिव्याहृतधर्मिवाचकपदस्य स्वप्रवृत्तिनिमित्तावच्छेदेन तदभेदबोधन एव साकाङ्क्षत्वात्, यथास्थितस्यादर्थबाधात्, सप्तभङ्ग्यां तु तात्पर्यगर्भाकाङ्क्षामादाय नानुपपत्तिरिति स्मर्त्तव्यम् । तदेवमात्मनो मुख्यतया नित्यत्वात् न क्षणभङ्गवादेन नैरात्म्यसिद्धिः, न च बाह्यार्थभङ्गादेव विज्ञान-

पू. श्रीमलयगिरि महाराजे पोतानी टीकामां मूलकारनी टीकानो उल्लेख करतां जे प्रमाणो नोंध्यां छे ते साक्षि ग्रन्थोनुं परिशिष्ट नंबर १ जोवाथी वांचकोने स्वयं मालुम पडी जशे.

बीजी टीका पू. आचार्यदेव मलयगिरि महाराजनी छे. ते समजवा माटे प्रत्येक गाथानी टीकाना प्रारंभमां कौंसमां 'मलय०'संकेत राखेलो छे. आ टीका ग्रन्थनी समाप्ति पछी आ टीकाकार महाराजे पण आपेली प्रशस्तिनो एक श्लोक जोई लेवो अत्रे सुघटित ज छे—

"बह्वर्थमल्पशब्दं प्रकरणमेतद्विवृण्वता मखिलम् । यदवापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः"

॥३॥ (प्रशस्तिः, द्वि. भा. पृ. ३४३।२)

स्वोपज्ञ टीकानुं संपूर्ण श्लोक प्रमाण ९००० नुं छे, श्रीमलयगिरि टीकानुं श्लोक प्रमाण १८८५० छे. श्री सप्ततिका गाथा ७५ तेमज तेनी वृत्ति श्लोक २३०० प्रमाण आज ग्रन्थकार महर्षिनां बनावेलां मोजुद छे.

श्री मूलकार महाराजनी रचेली टीका संक्षेपमां छतां तेनी केटलीक विशेषताओ लाक्षणिक रीते जे जुदी तरी आवे छे ते चित्ताकर्षक अवश्य छे. टीका गद्यमां छतां ते केटलेक ठेकाणे पद्यमां निरुपण करे छे. क्यांक प्रश्न तो क्यांक प्रश्न अने उत्तर उभय पद्यमां आपे छे. आने माटे बीजा द्वारनी गाथा ८३, त्रीजा द्वारनी गाथा ९, ३६ विगेरेनी टीका जोवाथी मालुम पडशे. भाषा संस्कृत छतां उपसंहार अने अवतरणिका क्यांक क्यांक प्राकृत भाषामां पण मुकी दीधेलां छे. आ माटे पण पांचमा द्वारमां द्रष्टि नाखवाथी तुरत देखाइ आवशे.

वस्तुने विशद करवामां श्रीमलयगिरि महाराजनी टीकानो नंबर पहेलो छे, एम तो सौ कोइने कहेवुं पडे तेम छे. आ टीकानो अने स्वोपज्ञ टीकानो एक शैलीभेद आपणे ए ध्यानमां राखवानो छे के श्री स्वोपज्ञ टीकाकार एक वस्तुनुं स्वरुप ज्यारे गाथानुसारे आपे छे त्यारे श्रीमलयगिरि महाराज ते स्वरुप प्रसंगे करीने आगळथी पण कही दे छे. जेमके स्वोपज्ञकारे त्रीजाद्वारनी गाथा ९ मां गत्यादिनुं स्वरुप आलेख्युं छे, श्रीमलयगिरि महाराजे ते स्वरुप गाथा ६ नी टीकामां वर्णव्युं छे.

ऽनेकान्तबोधकस्य स्यात्पदस्यानेकान्तरूपोऽर्थस्तस्य बाधात् एकान्तरूपार्थावबोधने बाधप्रसङ्गादित्यर्थो बोध्यः । नित्यत्वेत्यादिनिय-
मस्तु सप्तभङ्गीबहिर्भूतवाक्यस्थल एव, अन्यथा घटस्स्यान्नित्य इत्यादिभङ्गघटिता सप्तभङ्गी चतुरस्रा न स्यात्, तत्राद्यभङ्गे मृद्द्रव्येण घटे
नित्याभेदबोधनात्, सप्तभङ्गीस्थले तु प्रतिपाद्यपुरुषीयाकाङ्क्षामाश्रित्य तत्तन्नयतात्पर्यविषयीभूतनिमित्ततत्तद्द्रव्याद्यवच्छेदेन
घटादौ नित्यादेरभेदान्वय इत्याह—सप्तभङ्ग्यां त्विति ॥ ३५ ॥

तथाहि—इष्टस्त्वया नु परमार्थसतोरभेदोऽ-भिन्नैकजात्यमुत वेद्यविधेर्मृषात्वम् ॥

इत्थं विचारपदवीं भवदुक्तिबाह्यो, नीतो न हेतुबलमाश्रयितुं समर्थः ॥ ३६ ॥

बाह्य एव नास्ति कुत आत्मेति वदंस्तावदित्थं प्रष्टव्यः, नु इति वितर्के, किं त्वया ग्राह्यग्राहकयोर-
भेदो विवक्षितः, उताभिन्नैकजात्यम्, अभिन्नजातीयत्वमित्यर्थः, उताहो वेद्यविधेर्मृषात्वं, ग्राह्यांशस्यालीक-
त्वमित्यर्थः, विप्रतिपत्तिस्त्वत्र ज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं न वेत्याकारा, अलीकस्य ग्राह्यत्वे-
ऽपि न प्रमेयत्वम्, तद्ग्राहिकाया असत्ख्यातेः स्वप्रकाशनये स्वांशे प्रमात्वेऽपि तदंशेऽतत्त्वात्, तज्ज्ञानभि-
न्नविषयत्वस्यैव प्रमेयत्वस्य लाभादिति सम्प्रदायः ॥

बाह्य एव नास्तीति, शरीरं सभोक्तृकं भोग्यत्वात् ओदनवत् इन्द्रियं कर्तृप्रेरितं सत् कार्यकारि करणत्वात् वास्यादि-
वदित्याद्यनुमानसिद्ध आत्मा तदैव स्यात् यदि शरीरेन्द्रियाद्योदनवास्यादिबाह्यपदार्थः प्रमाणमुद्रामुद्रितस्स्यात्, अन्यथा हेतुरेवाश्र-

नुमितेरसद्भावेन तां प्रति तस्याऽप्रतिबन्धकत्वादिति भावः । यदि निषेधकोटिस्सामानाधिकरण्येन विज्ञानवादिमतेनाभ्युपगता
स्यात् तदा वस्तुत्वसामानाधिकरण्येनैव ज्ञानाऽभेदानुमितिस्स्यात् सा च यत्किञ्चिद्वस्तुनि ज्ञानाभेदसिद्धौ चरितार्थेति वस्तुमात्रे
ज्ञानाऽभेदसाधनमभिलषितं न स्यादिति तन्मतेऽर्थान्तरम्, बाह्यवादिमते वस्तुत्ववति ज्ञानात्मके वस्तुनि ज्ञानाभेदसिद्धौ सिद्धसाध-
नमत आह– अवच्छेदकावच्छेदेन निषेधकोटिरिति । उत्तरार्द्धं विवृणोति– इत्थमिति, भवता नीलतत्संविदोरभेदसा-
धने त्रयो हेतव उपादीयन्ते तद्यथा यदि नीलतत्संविदोरभेदो न स्यात्तर्हि नियमेन सहोपलम्भो न स्यादिति व्यभिचारशङ्कानिव-
र्तकतर्कबलवलिष्ठोऽभेदसाधकः सहोपलम्भनियमो हेतुराद्यः. यदि नीलसंविदो नीलं भिन्नमपि ग्राह्यं स्यात्तदन्यत्सर्वमपि ग्राह्यं
स्यादिति विपक्षबाधकतर्कसहकृतो नीलादिग्राह्यस्य स्वग्राहकाभेदसाधको ग्राह्यत्वहेतुर्द्वितीयः, ग्राहकस्य स्वग्राह्याभेदसाधकः
प्रकाशमानत्वादिति तृतीयो हेतुरिति, न च स एकोऽपि हेतुस्साध्यसाधनप्रत्यलः आभासरूपत्वादित्याशयेनाह–तथाहीति,
तद्भिन्नाभिन्नस्य तदभिन्नत्वनियमेन परामर्शाभिन्नसाध्यपक्षाभिन्नत्वादनुमितेः परामर्शाभिन्नत्वेन कार्यकारणभावः पक्षसाध्यहे
तुभावश्च न स्यात् पक्षादीनामप्यैक्यादित्याह हेतोः पक्षधर्मतयेति ।

अनुमितेरपि पक्षसाध्यविषयत्वात् परामर्शहेतुपक्षसाध्यानुमितीनामभेदे हेतुहेतुमद्भावस्य दूरापास्त-
त्वात् । अपि च भिन्नस्य ग्राह्यत्वे सर्वज्ञानानां सर्वविषयत्वापत्तिरित्याद्यतिप्रसङ्गो यदि न गृहीतो, नं
तर्हि व्याप्तिसिद्धिः, विपक्षे बाधकाभावात् । गृहीतश्चेत्, न कथमन्येनान्यग्रहणम्, अस्यैवार्थस्यानेकपदार्थ-
घटितस्यैकेन ग्रहणादिति ।

आ ग्रन्थना संशोधन कार्य माटे साहित्यरसिक विद्वान् मुनिवर्य श्री पुण्यविजयजी महाराज तरफथी हस्तलिखित प्रतो अमोने जे मळी छे ते बदल तेओश्रीनो अमो आ स्थळे खास आभार मानीए छीए.

आ ग्रन्थमां यन्त्रो पण ठामठाम आपवामां आव्यां छे आथी वांचकोने वांचेलो विषय समजवो अने याद राखवो घणो सहेलो थाय छे. समयना अभावे बीजुं केटलुंक उपयोगी कार्य थइ शक्युं नथी ते वांचको दरगुजर करशे. आवा सूक्ष्म विषयना ग्रन्थमां गमे तेटलुं ध्यान राखवा छतां भूलो विगेरे न ज रहे ते बनवुं अशक्य छे. जो के आ साथे शुद्धिपत्रक आपेलुं छे, तथापि तेवी छापवा विगेरेनी जे कांइ भूलो रही गयेली द्रष्टि गोचर थाय ते वांचकोने सुधारी लेवा विनंति छे.

अमे आशा राखीए छीए के आवा अमूल्य प्रकाशननो लाभ उठाववामां जनता पाछीपानी करशे नहि. आवां प्रकाशनो वारंवार करातां नथी, ज्यारे थयुं छे त्यारे तक जती करवो नहि. बस, सुज्ञोने आटलुं जणावी ग्रन्थमां उतरवानी विनंति करवा पूर्वक अमारु आ नम्र प्राक् कथन अमो अहीं पुरुं करीए छीए. शुभं भवतु।

प्रकाशक

कात्रभिन्नौ नियमेनैकज्ञानविषयत्वात्तद्विषयकज्ञानाविषयत्वाद्वेति प्रयोगः नासिद्धिरित्यन्तेन पर्यवसितः, ज्ञेयस्येत्यादिनैकैकस्य पक्षत्वं प्रत्येकघटिताभेदस्य साध्यत्वमिति ग्राह्यं ग्राहकाभिन्नं ग्राह्यत्वाज्ज्ञानं ज्ञेयाभिन्नं प्रकाशमानत्वादित्येवमनुमानप्रयोगः । ग्राह्यग्राहकयोरभेदखण्डनप्रकारमाह–नीलधवलेत्यादिना, कथमेकस्येति, नीलधवलाद्याकारं समूहालम्बनज्ञानमनुभूयते तत्र यदि ज्ञानाद्ग्राह्यस्याभेदस्स्यात्तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमेन नीलाभिन्नज्ञानाभिन्नस्य धवलस्य निलाभिन्नत्वं धवलाभिन्नज्ञानाभिन्नस्य नीलस्य धवलाभिन्नत्वं च प्रसज्येतेत्येवं नीलधवलयोरभेदस्स्यादिति तद्वयान्नीलाकारत्वधवलाकारत्वयोर्विरोधस्यावश्यमभ्युपगन्तव्यत्वेन कथं विरुद्धानेकाकारमेकं ज्ञानं स्यादित्यर्थः । यदि नानाकारसमूहालम्बनज्ञानं स्यात्तदा तदेकमेव न स्यात् विरुद्धधर्माध्यस्तत्वादस्ति चैकमिति तदन्यथानुपपत्त्यानुभूयमानस्यापि नानाकारस्यापलापे तदुल्लेख्येव तन्न स्यात्, तथा च चित्रत्वस्वरूपमेव जह्यादित्याह–एकत्वान्यथेत्यादि, न च कस्याप्याकारस्य ज्ञानस्वरूपानतिरेकात्स्वसंवेदनपक्षेऽनुल्लिखितत्वं युक्तमित्याह–न चेति, चित्रज्ञानस्यानेकाकारत्वेप्येकत्वे पूर्वोक्तनियमेन नीलधवलयोरभेदापत्त्या नीलेन यत्क्रियते तद्धवलादपि यच्च धवलेन क्रियते तन्नीलादप्युत्पद्येत तथा नीलार्थी धवलं धवलार्थी नीलमप्युपाददीतेत्याह–तथात्वेऽपीति, नीलाकाराऽग्रहणेऽपि पीताकारग्रहणमिदं पीतमिति ज्ञाने पीताकाराऽग्रहणेऽपि नीलाकारग्रहणमिदं नीलमिति ज्ञाने समूहालम्बने च नीलाकारपीताकारयोस्सद्भानमिति वस्तुस्थितिः तत्र यदि ज्ञानस्य नीलपीताभ्यां सहाभेद एव स्यात्तदाऽऽकारयोरप्यभेदप्रसक्त्यैकाकारतयैव भानं स्यान्नोभयाकारत्वेनेत्याह–भेदज्ञानेति, अथवा यदि ग्राह्यस्य ग्राहकाभेदस्स्यात्तर्हि ग्राहकमेव स्यात्, ग्राहकस्य च ग्राह्याभेदो यदि स्यात्तर्हि ग्राह्यमेव स्यात्, न चास्तु तथेति वाच्यं, तथा सति नीलस्य प्रकाश इति भेदप्रतीत्यनुपपत्तिस्स्यात्, यतो

| | | | |
|---|---|---|---|
| जीवाभिगमसूत्रम् | ,, | ,, | ७६।१ ९२।२, ९८।२ २२४।१, २२७।२ |
| पन्नवणामूलटीका, | ,, | ,, | ११४।१ |
| कर्मस्तवः, | ,, | ,, | १२०।२, १९५।१ |
| कर्मप्रकृतिचूर्णिः, | ,, | ,, | २२५।१ |
| कर्मप्रकृतिः, | ,, | ,, | २२७।१, २५४।१, २५६।२ |

## (२) तथाविधसंप्रदायाद्यभावेनानवगतान्यपि संमानितानि वस्तूनि ।

(१) ननु मा भूदपर्याप्तावस्थालभ्यं देवनारकसंभवि वैक्रियमिश्रं, यत्पुनः पर्याप्तानां मनुष्यतिरश्चां वैक्रियलब्धिमतां सम्यग्मिथ्यादृशां सतां वैक्रियकरणं संभवेत् तदारम्भकाले वैक्रियमिश्रं भवति तत्कस्मादिह नोक्तम्? उच्यते–तेषां वैक्रियाकरणभावतोऽन्यतो वा कुतश्चित्कारणादाचार्येणान्यैश्च तन्नाभ्युपगम्यते, तन्न सम्यगवगच्छामस्तथाविधसंप्रदायाभावात् । (मलय०) पृ० ३३।२

(२) यत्तु (मिथ्यादृष्ट्यादौ) अवधिदर्शनं तत्कुतश्चिदभिप्रायाद्विशिष्टश्रुतविदो नेच्छन्ति तन्न सम्यगवगच्छामः, अथ च सूत्रे मिथ्यादृष्ट्यादीनामवधिदर्शनं प्रतिपाद्यते । (मलय०) पृ० ३४।२

(३) एतच्च ( निरन्तरभावमाश्रित्य क्षपकश्रेणेरेकजीवाश्रितादन्तर्मुहूर्त्तान्नानाजीवापेक्षयान्तर्मुहूर्त्तस्य सप्तभिः समयैरभ्यधिकत्वं) सूत्रकारवचनप्रामाण्यात्प्रत्येयं, न पुनरत्र कामपि युक्तिमव्याहतां वयं पश्यामः, न च ग्रन्थान्तरसंवादमिति । (मलय०) पृ० ८६।१

विवेचनाभावः, अर्थज्ञानयोर्भेदग्रहाभावः। सारङ्गी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं, मार्जारी हंसबालं प्रणयपरवशा केकिकान्ता भुजङ्गम्। वैराण्याजन्म जातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति, श्रित्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥ १ ॥ इति पारमर्षवचनाद्यथा समभावभावितात्मानुपप्लुतचित्तपरिणतिमहायोगिसमलङ्कृताश्रमपदमासाद्य व्यालनकुलादेः शाश्वतिकवैरत्यागस्तत्फलत्यागो वा तथा किं विज्ञानमासाद्य नीलधवलादेरपि तथात्वमिति पृच्छति-तत्किमत्रेति, । प्रकृते शाश्वतिकवैरत्यागस्तत्फलत्यागो वेति विकल्पद्वयस्य पर्यवसितार्थमाह—नीलधवलादीनामिति, तस्मिन् विरोधे।

परस्परनिषेधविधिनान्तरीयकविधिनिषेधयोरविरोधे जगति विरोधोच्छेदप्रसङ्गात्। यद्यपि नीलादीनामेकतरनिषेधध्रौव्येऽपि नैकनिषेध इतरविधिध्रौव्यम् तृतीयप्रकारस्यापि सम्भवात्, तथापि परस्पराभावव्याप्यत्वे तात्पर्यम्। परस्पराभावव्याप्ययोरपि चाविरोधे गवाश्वादीनामपि भेदो न सिद्ध्येत्, तन्मूलविरुद्धधर्माध्यासनिरासादित्यर्थः। तत्सिद्धिरेव च भेदसिद्धिरतो न द्वितीयोऽपि। यस्तु बाह्ये विरोधपालनाय विशेषो दर्शितः स तेषामेवास्तु, यदि हि विरुद्धधर्माध्यासस्य भेदसाधकत्वं प्रति समाश्वासः, किमर्थक्रियाप्रतिनियमोपन्यासेन, न चेत्, तथापि किं तेन, सोऽपि ह्यर्थक्रिययोर्विरुद्धधर्माध्यासेन भेदे सति स्यादिति तस्यैवोपजीव्यत्वात्, अन्यथार्थक्रियानियमेऽर्थक्रियान्तरानुसरणे अनवस्थानादनवस्थितार्थक्रियासन्तानस्य चासर्वज्ञपुरुषावेद्यत्वात्।



आ० श्रीविजयप्रेमसूरीश्वरजी महाराज



आ० श्रीविजयदानसूरीश्वरजी महाराज



उ० श्रीजंबूविजयजी महाराज

भिन्ना न स्युस्तर्हि प्रतिनियतार्थक्रियाकारिणो न स्युरित्येवं यथा व्यभिचारशङ्कानिवर्तकतर्कसद्भावबलेन प्रमाणतामास्कन्दति न तथा ज्ञाने नीलपीताद्याकारयोर्भेदसाधकानुमानं, विपक्षबाधकतर्काभावादित्याशङ्क्ते—

अथ बाह्यानां भेदे साध्येऽर्थक्रियानुपपत्तिरस्ति विपक्षे बाधिका, नतु ज्ञाने किमपीति चेत्, न, यथा बाह्ये भेदाभावेऽर्थक्रियाप्रतिनियमो न स्यादिति दण्डस्तथा ज्ञानेऽपि प्रतिभासनियमो न स्यादिति दण्डस्य दुर्निवारत्वात्। अथ प्रतिभासस्य निर्भास्यनियमोऽसाङ्कर्यं सहानुपलम्भाख्यं, तच्च स्वरूपतोऽसिद्धं, नीलपीतावगाहिनो ज्ञानस्य नीलपीताकारयोस्तेनैव प्रतिभासनात् इति चेत्, न, प्रकारतस्तस्य विवक्षितत्वात्, तस्य च सत्त्वात्, नहि सहानुपलम्भमात्रमभेदे बाधकमिति ब्रूमः, किन्तु नीलाकारस्य ज्ञानस्य पीताकारत्वेन पीताकारस्य नीलाकारत्वेनानुपलम्भस्तयोरभेदे बाधक इति, तयोरभेदे ह्येकैकाकारस्यापि ज्ञानस्योभयाकारतायामुभयाकारत्वेनोपलम्भप्रसङ्गात् ॥ न चोपलम्भानुपलम्भयो रूपभेदानिवेशे उपलभ्यमानत्वानुपलभ्यमानत्वव्यवस्था स्यात्, अनुपलभ्यमानत्वेनाभिमतस्योपलभ्यमानताया उपलभ्यमानत्वेनोपेतस्य चानुपलभ्यमानतायाः सुवचत्वात्, यथाहि गौर्गोत्वेनोपलभ्यते नाश्वत्वेनाश्वश्चाश्वत्वेन न तु गोत्वेनेति न तयोरभेदस्तथैकज्ञानगोचरावपि नीलपीताकारौ नीलपीताकारत्वाभ्यामुपलभ्येते न पीतनीलाकारत्वाभ्यामिति तयोरपि नाभेदः। न चैकं ज्ञानं भिन्नोभयाकारं भवितुमर्हति, तदाकाराकारिणोरभेदादिति फलितार्थः।

अथ बाह्यानामिति,। विज्ञानवादी पुनः शङ्क्ते—अथ प्रतिभासस्येति,। तेनैव, एकेनैव ज्ञानेन। आशयो-

## (४) टीकान्त आलेखितानि स्वरूपाधिकानि।

यावदित्याह—अन्यथेति, तयोरपि, गवाश्वयोरपि, विवेचनाभावश्चात्र परमो निर्वाह इति यदुक्तं तन्निरस्यति—एतेनेति, ।
एतेनेत्यतिदिष्टं हेतुमाह—आकारयोरसंभेदेनेति, यथाकाराकारिणोरभेद एव स्यात्तदा तदभिन्नाभिन्नस्य तदभिन्नत्वमिति
नियमादाकारद्वयस्याप्येकरूपत्वापत्त्यैकाकारतयैव भानं स्यान्नोभयाकारतयेत्याकारयोर्नीलाकारत्वेन पीताकारत्वेन च पृथक्स्वरूपेण
वेदनलक्षणमेव विवेचनं तयोर्भेदं व्यवस्थापयतीति भावः । एकस्याग्रहणं तदपरस्य च ग्रहणमित्येवं ग्रहणाग्रहणलक्षणमेव विवेचनम्,
तत एव च भेदः, न चोक्तविवेचनं चित्रज्ञानगतयोर्नीलाकारपीताकारयोः संभवति, स्वसंवेदनेन चित्रज्ञानग्रहणे तदभिन्नयोस्त-
योरपि ग्रहणादिति न ते भिन्ने, नीलमिति पीतमिति च प्रत्येकाकारज्ञानगतयोस्तु नीलपीताकारयोस्तत्संभवत्येव, नीलग्राहिणा
ज्ञानेन पीताग्रहणात् पीतग्राहिणा च ज्ञानेन नीलाग्रहणादिति तयोर्भेद एव, ज्ञानभेदे तदभिन्नाकारभेदस्यावश्यंभावादित्याशङ्कते
विज्ञानवादी—अर्थकाग्रहण इति, । स्थिरत्वपक्षे तु कालान्तरे तस्या एव नीलव्यक्तेः पीतव्यक्तेरग्रहणेऽपि ग्रहणसंभवेन विवेचन-
स्यैव सत्त्वेन नीलपीतयोर्भेदः संभवतीत्यत आह—क्षणिकतायामिति, सति सप्तमी । तेन पुंसाऽविवेचनादिति, तथा च
सौत्रान्तिकमताभ्युपगतयोर्बाह्ययोरपि नीलपीतयोरभेदः स्यादिति भावः । बाह्यपक्षे नीलपीतयोरेकेन पुंसा चित्रज्ञानेन ग्रहणेऽन्येन
तत्काल एव तयोरेकतरस्यैव ग्रहणं भवत्येवेत्यत्र नियामकाभावेन विवेचनस्य संदेहान्निश्चितविवेचनस्याभावस्तत्रास्ति न त्वभेद इति
व्यभिचारस्तद्वारणाय संदिग्धविवेचनमप्यादाय तत्र विवेचनाभावो नास्तीत्युच्यते तदा ज्ञानाकारयोरपि विवेचनसंदेहात् स नास्ती-
ति विवेचनाभावहेतुः स्वरूपासिद्ध इति नातोऽभेदसिद्धिरित्याह—न तत्र द्वितीय इति। नीलादेः चित्रज्ञानग्राह्यस्य बाह्यनीलपीतादेः,
एतेन तेनैव पुंसा कालान्तरे बाह्यस्य स्मरणादिलक्षणं विवेचनं प्रत्युक्तं वेदितव्यम्। अथान्येनान्यस्या-

## (६) सिद्धयः।

(१) जीवानामकृत्रिमतासिद्धिर्यथाधर्मसङ्ग्रहणीटीकायाम्।
(मलय०) पृ० ४४।१

(२) देशोनपूर्वकोटिरित्यत्र देशोनत्वेनाष्टवर्षाणां सिद्धिः।
(मलय०) पृ० ७७।२, ७८।२, ७९।१

(३) संसारे सुखाभावस्य सिद्धौ च परमार्थसुखस्य सिद्धिः।
(स्वो०) पृ० १११–२

(४) कपित्थादिवृक्षाणां मूलादिषु प्रत्येकमसंख्येयानामपि जीवानां परस्परं विभिन्नशरीरवत्त्वस्य सिद्धिः।
(मलय०) पृ० ११६।२

(५) अनन्तजीवानामेकशरीरस्य सिद्धिः ,, ,, ११७।१

(६) असंज्ञिनामविरतत्वेन बन्धसिद्धिः (स्वो०) ,, १७८।१

(७) भावितीर्थकृतां "सदैव" परार्थव्यसनित्वादिनिदर्शनम्। (मलय०) ,, १८७।२

(८) अभविनामन्तःकोटाकोट्या अन्यूनबन्धनियमनम्।
गा० ४५ पृ० २२४।२

---

## (७) दर्शितानि द्रष्टान्तानि।

(१) नीचैःकुलोत्पन्नत्वेन दानलाभान्तरायाद्युदये अन्त्यजाः।
(मलय०) पृ० १०८।२

(२) स्त्यानर्द्ध्युदये क्षुल्लकः। मलय० पृ० ११०।२

(३) उच्चैर्गोत्रोदये क्षत्रियपुत्रोऽयं श्रेष्ठिसुतोऽयं, नीचैर्गोत्रोदये वेश्यासुतोऽयं श्वपाकोऽयम्। (मलय०) पृ० १३१।१

मभिन्नं वा, भिन्नं चेत्, न तर्हि ग्राह्यग्राहकभावः, अभिन्नं चेत्, पर्यवसितं तर्हि पञ्चानामभेदेन, तदभिन्नाभिन्नस्य तदभिन्नत्वात्, एवं च सहोपलम्भनियमे नियमांशो व्यर्थः, एकज्ञानविषयत्वस्यैव तन्मते तद्व्याप्यत्वात् इति ध्येयम्। पञ्चानामिति प्रत्येकविषयकस्य ग्राहकद्वयस्य ग्राह्यद्वयस्य चैकविषयकस्य च ग्राहकस्येत्यर्थः। प्रसङ्गोऽयं स्वमतावष्टम्भेन, गवाश्वगोचरसमूहालम्बनेऽपि परैश्चित्रतायाः स्वीकारादिति गुणानन्दः।

सहोपलब्धयोः चित्रज्ञानविषययोः। तदपि नीलपीतादिप्रत्येकग्राहिज्ञानमपि। ततः नीलपीतादिरूपात् स्वविषयात्। ययोर्युगपदुपलम्भे सत्यपि पृथगुपलम्भोऽस्ति तयोः सहोपलम्भो वर्तते न त्वभेद इति व्यभिचारवारणाय सहोपलम्भनियम इति हेतुर्नियमघटितः कृतः परन्त्वाकाराकारिणोरभेदवादे या व्यक्तिरेकत्र ज्ञाने भासते तस्या व्यक्तेस्तज्ज्ञानाभिन्नत्वात्तदन्यज्ञानाभिन्नत्वाभावेन तदन्यज्ञाने भानासंभवात् ययोः सहोपलम्भस्तयोः पृथगुपलम्भस्याभावादेव व्यभिचाराप्रसक्त्या नियमांशस्य व्यावर्त्याभावाद्व्यर्थत्वेन तद्रूपव्यर्थविशेषणघटितत्वाद्ग्राह्यग्राहकयोरभेदसाधकोऽयं हेतुर्व्याप्यत्वासिद्ध इत्याह—एवं च सहोपलम्भनियम इति। तद्व्याप्यत्वात् अभेदव्याप्यत्वात्। ग्राहकद्वयस्येति नीलज्ञानपीतज्ञानोभयस्येत्यर्थः। ग्राह्यद्वयस्य नीलस्य पीतस्य च। एकविषयकस्य च ग्राहकस्य नीलपीतोभयाकारचित्रज्ञानस्य, तस्य चैकविषयकत्वमाकारयोरभेदानुसन्धानादिति ध्येयम्। विज्ञानवादिमते चित्ररूपवत् समूहालम्बनज्ञानमपि चित्रात्मकं विलक्षणमेव, न तु नीलपीतोभयाकारं येनोक्तदोषस्स्यादित्यत आह—प्रसङ्गोऽयमिति, स्वमतावष्टम्भेनेति न्यायमतावलम्बनेनेत्यर्थः। प्रकारान्तरेण विज्ञानवादिमतं खण्डयन्नाह—

अपि च विवेचनाभावज्ञानं विवेचनं गृह्णाति नवा, गृह्णाति चेत्, सिद्धं तर्हि भिन्नस्यापि ग्राह्यत्वम्,

(६) "ननु स (सम्यक्त्वजीवपरिणाम-विशेषः)किं सहेतुक उताहेतुकः ?" (मलय०) पृ०१२।२

(७) "ननु यदि मतिज्ञानादीनि स्वस्वावरणक्षयोपशमेऽपि प्रादुस्सन्ति तर्हि सकलस्वस्वावरणक्षये सुतरां भवेयुश्चारित्रपरिणामवत्, तत्कथं केवलज्ञानदर्शनभावे मतिज्ञानाद्यभावः ?" (मलय०) पृ० १८।१

(८) "ननु यदि मिथ्यादृष्टिस्तस्य कथं गुणस्थानसंभवः ?" ,, ,, १९।१

(९) "ननु सकलप्रवचनार्थाभिरोचनात्तद्गतकतिपयार्थानां चारोचनादेप (मिथ्यादृष्टिः) न्यायतः सम्यग्मिथ्यादृष्टिरेव भवितुमर्हति, कथं मिथ्यादृष्टिः ?" (मलय०) पृ० १९।१

(१०) "ननु क्षयोपशमोप्युदिते कर्मांशे क्षीणे अनुदिते चोपशान्ते भवति,उपशमोऽपि चेत्थम्भूत एव,ततः कोऽनयोः प्रतिविशेषः ?" (मलय०) पृ० २४।२

(११) "ननु यदि सत्यपि क्षयोपशमेऽनन्तानुबन्ध्यादिकषाय-मिथ्यात्वानां प्रदेशतोऽनुभवोऽस्ति तर्हि कथं न सम्यक्त्वादिगुणविघातो भवति ?" (मलय०) पृ० २४।२

(१२) "ननु यदि दर्शनत्रिकमपि क्षयमुपगतं तर्हि किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टि ?" (मलय०) पृ० २५।२

(१३) "ननु प्रभूतस्थितिकस्य वेदनीयादेरायुषा सह समीकरणार्थं समुद्घातारम्भ इति न युक्त्युपपन्नं, कृतनाशादिदोषप्रसङ्गात् ?" (मलय०) २९।१

(१४) "ननु कुतो नियमो यद्वेदनीयाद्येवायुषः सकाशादधिकस्थितिकं भवति न तु कदाचिदपि वेदनीयादेरायुरिति ?" (मलय०) २९।२

(१५) "यदि स्वावरणस्य देशक्षयोपशमेऽपि ज्ञानावरणदर्श

ज्ञानानात्मनोऽपि ग्राह्यत्वसिद्धेः, न तृतीयः, उष्ट्रलगुडकन्यायापातात्, यथोष्ट्रगृहीतेनैव लगुडेन स्वविरुद्धस्वशिरोभङ्गः, तथा नीलधवलादीनां परस्परानात्मसंवेदनेनैव स्वविरुद्ध एव विरुद्धधर्माध्यास आपतितस्ततश्च भेदोऽपीति।

एवमिति। तद्यदीत्यत्र तच्छब्देन परेण परस्यावेदनमित्यस्य परामर्शः। कुतः साध्यसिद्धिरिति प्राचां मते ज्ञातलिङ्गस्य नव्यमते लिङ्गज्ञानस्यानुमितिकरणत्वात् परेण परस्यावेदनस्य हेतोर्ज्ञानमेव न जातं तर्ह्यविवेचनस्य साध्यस्यानुमितिर्न स्यादिति भावः। असौ विवेचनाभावस्तस्यां व्यक्तौ तज्जातीये सर्वत्र वेति विकल्पान्तर्गतद्वितीयविकल्पं निरस्यति—द्वितीयपक्षे त्विति। घटतत्सजातीयघटान्तरयोः पृथक्तयोपलम्भाद्विवेचनवदेकज्ञानतत्सजातीयज्ञानान्तरयोरपि पृथक्तयोपलम्भाद्विवेचनमेवेत्यर्थः। विरुद्धधर्माध्यासात्संविद्भेदः साध्य इति नीलपीते इति समूहालम्बनज्ञानं ज्ञानान्तराद्भिन्नं ततो विरुद्धधर्माध्यासादित्यनुमानेन नैयायिकैस्संविद्भेदः साध्य इत्यर्थः। तत्रोक्तहेतुरेव स्वरूपासिद्ध इत्याह—स एव त्विति। इति वदतः एवं ब्रुवतो विज्ञानवादिन इत्यर्थः। तद्वत्त्वं नीलत्वादिमत्त्वं, नास्तीत्यनुषञ्जनीयम्, एवमग्रेऽपि। विरोधस्य साधितत्वादिति नीलत्वादीनां पीतत्वाद्यभावव्याप्यत्वेन विरोधस्य प्रागेव साधितत्वादित्यर्थः। बाह्यस्यैव नीलत्वादिधर्मवत्त्वेन ज्ञाने नीलत्वपीतत्वे न स्तः, तथा च भिन्नमेव नीलपीतादिकं ज्ञाने चकास्तीति भिन्नस्यापि ग्राह्यत्वसिद्ध्या नः समीहितसिद्धिरित्याशयेन द्वितीयपक्षं निराकरोति—न द्वितीय इति। नीलधवलाद्याकारव्यतिरिक्तं चित्राकारमभ्युपगच्छन् विज्ञानवादी शङ्कते—

अथ यथा भवतां नीलपीताद्यारब्धेऽवयविनि एकत्रानेकरूपसमवायायोगादतिरिक्तं चित्ररूपं, तथास्माकमप्येकत्र विज्ञानेऽनेकाकारासम्भवादतिरिक्त एव चित्राकारः किं न स्यात्, स्यादेव यदीदं चित्रमित्येवं ज्ञायेत,

(२५) "कात्र युक्तिर्वनस्पतिकायिकानां (पर्याप्तप्रत्येकबादराणां) स्तोकत्वे इतराणां (भूकायिकोदककायिकानां) त्वधिकत्वे ?" (स्वो०) पृ० ५२।१

(२६) "कुत एतत् (उपशमश्रेणिकालं प्रतीत्योत्पद्यमानाः शतसंख्याका न सहस्रा न वा लक्षाः) अवसीयते?" (स्वो०) पृ० ६२।१

(२७) "नन्वन्तर्मुहूर्त्तप्रमाणेऽप्युपशमश्रेणिकाले असंख्येया समयाः प्राप्यन्ते, तत्र यदि प्रतिसमयमेकैकः प्रविशति तथापि सकलं श्रेणिकालमधिकृत्याऽसंख्येया प्राप्नुवन्ति, किं पुनर्द्वित्र्यादेराभ्योत्कर्षतश्चतुः पञ्चाशतः प्रवेशने ?" (मलय०) पृ० ६२।१

(२८) "अथैतद् (सकलश्रेणि समयेषु प्रवेशो न भवतीति) अपि कथमवसीयते ?" (मलय०) पृ० ६२।२

(२९) "सूक्ष्माः सप्रभेदाः सर्वे प्रत्येकं सर्वलोकापन्नाः शेषा बादराः सप्रभेदाः प्रत्येकं लोकस्यासंख्येयभागापन्नाः, एवमञ्जसैवाभीष्टेऽर्थे सिद्धे कस्मादेवं व्याख्यायते सूत्रे चानर्थकमपर्याप्तद्वयग्रहणं क्रियते ?" (स्वो०) पृ० ६३।२

(३०) "सूक्ष्माः सर्वेऽपि पृथिव्यादयः पर्याप्तादिभेदभिन्नाः प्रत्येकं सर्वलोकव्यापिन इत्यञ्जसैवाभीष्टार्थः सिद्धः, ततः किमर्थमिह मुख्यया वृत्याऽपर्याप्तग्रहणं कृतमपिशब्दात्तु पर्याप्तग्रहणमिति ?" (मलय) ६३।२

(३१) "आह परः--परभवायुःप्रथमसमयोदये शरीरशातः--शरीरत्यागो जीवस्य भवति, अतो देवायुरुदये शरीरं परित्यजतां कथं स्पर्शना तद्गुणा (उपशामकादिगुणा) भवति ? (स्वो०) पृ० ६९-१

(३२) "ननु मनुष्यभवायुषः क्षये परभवायुष उदये परलोक गमनं, तदानीं चाविरतता, नोपशमकत्वादि, तत्कथ-

पलम्भादयः, उभयथापीति प्रकाशमानस्य ज्ञानानात्मनो नीलाद्याकारस्य पारमार्थिकत्वे काल्पनिकत्वे चेत्यर्थः।

स्यादेतदिति, काल्पनिकपारमार्थिकयोरभेदासंभवात्काल्पनिकस्याकारस्य वास्तविकज्ञानस्वरूपत्वाभावान्निराकारमेव ज्ञानं स्यादिति समाधत्ते–एवं तर्हीति, यद्वाऽऽकारस्य काल्पनिकत्वे आकारिणश्च पारमार्थिकत्वे आकाराकारिभाव एव न स्यादिति निराकारमेव ज्ञानं स्यादिति समाधत्ते–एवं तर्हीति, उभयथाऽपीति आकारस्य पारमार्थिकत्वे एकस्य चित्रज्ञानस्यानेकाकाराभेदासंभवाद्भिन्नस्यैवाकारस्य विषयत्वं, काल्पनिकत्वे तु काल्पनिकाकारपारमार्थिकज्ञानयोरभेदासंभवाद्भिन्नस्यैवाकारस्य चित्रज्ञानविषयत्वमित्युभयथाऽपि सहोपलम्भादिहेतुकाभेदसाध्यकानुमाने बाध इत्याशयः। उभयथाऽपीत्येतत्पदं विवृणोति–उभयथाऽपीतीति, पीतस्य ज्ञानमित्याकारके पीताद्भिन्नं ज्ञानमित्याकारके च ज्ञाने ग्राह्यग्राहकभेदो यश्च नीलपीते मिथो भिन्ने इत्याकारके ग्राह्यनीलपीतादिभेदः प्रतिभासते स यदि सत्यस्तदाऽभेदसाधकसहोपलम्भग्राह्यत्वप्रकाशमानत्वहेतूनां बाधः, यद्यसत्यस्तदा सत्यासत्ययोरभेदायोगात्सत्येन ज्ञानेन सहाऽभेदाभाववानपि स ज्ञाने भासत इति तत्र विपक्षे सहोपलम्भनियमादेर्वृत्तित्वाद्व्यभिचारित्वमित्याह–

अपि चास्तां तावद्विरुद्धधर्माध्यासचिन्ता, योऽयं ग्राह्यग्राहकभेदो ग्राह्यनीलपीतादिभेदो वा चकास्ति स किं सत्यो वाऽसत्यो वा, सत्यत्वे स एव बाधो दोषो हेतूनाम्, असत्यत्वे नायमात्मा विज्ञानस्येत्यनात्मन्यपि सहोपलम्भनियमादयो गता इत्यनेकान्तः, भेदो न प्रथत एवेति चेत्, अस्तु तावत् सर्वजनीनप्रतीतिविरोधः स्ववाग्विरोधो वा, असिद्धास्तर्हि हेतवः,

अपि चेति, व्यभिचारपरिहारमाशङ्कते–भेदो नेति, स्ववाग्विरोध इति भेदो न प्रथत इत्याकारके ज्ञाने नञ्पदवाच्याभाव

(४३) "यद्येवं (पूज्यत्वमुच्चैर्गोत्रमित्यादि) ततः सङ्गमकादिभिरप्रशंसाद्यपमानैः क्रियमाणैरपि वर्द्धमानतीर्थाधिपतेः कथं नीचैर्गोत्रोदयो न भवति ?" (स्वो०) ११२।१

(४४) "ननु यदि प्रत्येकनाम्न उदयः कपित्थादिवृक्षादीनामिष्यते तर्हि तेषां जीवं जीवं प्रति भिन्नं शरीरं भवेत्, न च तद्भवति,....ततः कथं ते प्रत्येकशरीरिणः ?" (मलय०) ११६।२

(४५) "ननु कथमनन्तानां जीवानामेकं शरीरमुत्पद्यते ?" (मलय०) पृ० ११७।१

(४६) "विकलेन्द्रियाणां संहननोदयोऽस्थ्यभावेऽपि कथं भवति ?" (स्वो०) पृ० ११८।१

(४७) "पञ्चानां शरीराणां द्विकादिषड्विंशतिसंयोगा भवन्ति, तत्तुल्यबन्धनानि च कस्मान्न भवन्ति?" (स्वो०) १२१।१

(४८) "यदि पञ्चदश बन्धनानि भवन्ति अतोऽनेनैव क्रमेण संघाता अपि कस्मान्नाभिधियन्ते ? (स्वो०)" १२१।१

(४९) "ननु ये पञ्चदश बन्धनानि मन्यन्ते तन्मतेन...संघातनामान्यपि पञ्चदश प्राप्नुवन्ति, तत्कथं न तेषां पूर्वापरव्याहतिः ?" (मलय०) १२२।२

(५०) "ननु भवविपाकादयोऽपि प्रकृतयः परमार्थतश्चिन्त्यमाना जीवविपाका एव,...ततः सर्वापि जीवविपाकाः ?" (मलय०) पृ० १२९।१

(५१) "क्षायोपशमिको भावः कर्मणामुदये सति भवत्यनुदये वा...?" (मलय०) पृ० १३२।१

(५२) "ननु प्रदेशोदयेऽपि कथं क्षायोपशमिकभावसम्भवः?" (मलय०) पृ० १३२।२

(५३) "सर्वघातिप्रदेशोदये मोहनीयस्य कथं क्षायोपशमिको भावः ?" (स्वो०) पृ० १३३।१

भेदविषयिकैव साहित्यप्रतीतिस्तथा व्याप्तेर्भेदघटितत्वेनाभेदव्याप्यताद्दशहेतुमन्तौ ग्राह्यग्राहकाविति परामर्शोऽपि भेदविषयक एवेति भेदाभासने सोऽपि न स्यादित्याशयेनाह—तेन नेति । सहोपलम्भनियमस्य हेतोर्भेदाचकासनेऽसंभवं प्रदर्श्योक्तहेतूपलक्षितयोर्ग्राह्यत्वप्रकाशमानत्वयोर्हेत्वोरपि भेदाभासनेऽसंभवमाह—ग्राह्यग्राहकभावस्येति । प्रकाशाभेद इति ग्राह्यस्येति शेषः । न हि पक्षसाध्यहेतुदृष्टान्तानां परस्परभिन्नतया ज्ञानाभावे अयं पक्षः अयं साध्य इत्यादिप्रविभक्तव्यवहारो युक्तः, न वा संशयविपर्ययान्दोलितचित्तोऽयमहं तु न तथेति स प्रतिबोध्यः अहं तु प्रतिबोधक इति प्रतिबोध्यप्रतिबोधकभावेन भेदग्रहस्याभावे विज्ञानवादिनो भवतस्तत्प्रतिबोधानुकूला प्रवृत्तिरपि युक्ता, वादे ह्येकस्य जयोऽन्यस्य च पराजयः, जयपराजयभावश्च भेदगर्भ इति भेदाऽप्रथने तज्ज्ञानमपि न स्यादिति कस्य जयः कस्य च पराजयः स्यादिति जयादिप्रयोजनाभावादपि कथात्मकवादे प्रवृत्तिर्न युक्तेत्याशयेनाह—

भेदमात्रास्फुरणे पक्षादिप्रविभागोऽपि कथं, कं च बोधयितुं प्रवृत्तोऽसि, किमर्थं च, अन्वयव्यतिरेकाप्रवृत्तौ किं च हेतोर्बलं, कुतश्च विप्रतिपत्तिः, कीदृशी चेति, सोऽयं विचारमारभते भेदं तु सांवृतमपि न पश्यतीति व्यक्तमुन्मत्तोऽप्यनेन जितः। अस्तु तर्हि सांवृत एव भेदः, विकल्पारूढस्य तस्य व्यवहाराङ्गत्वान्नानुभवारूढ इति चेत्, सोऽपि सत्योऽसत्यो वेति विकल्पान् नातिवर्त्तते, अभासने केवलस्य वा भासने विचारानारम्भात्, प्रतियोग्यादिमिलितस्य च सतोऽसतो वा भेदस्य नैकसंविज्ञानतादात्म्यमिति कथं ग्राह्यत्वमिति ॥

भेदमात्राऽस्फुरण इति,अन्वयव्यतिरेकाप्रवृत्ताविति अन्वयव्यतिरेकाप्रतीतावित्यपि पाठः,अन्वयः पक्षसत्त्वं सपक्षसत्त्वं च, व्यतिरेको विपक्षासत्त्वमित्येवंरूपत्रयज्ञानाभावे इत्यर्थः। अन्वयोऽन्वयव्याप्तिः व्यतिरेको व्यतिरेकव्याप्तिस्ताभ्यां च पक्षधर्मत्वस्याप्युप-

(६३) "अनन्तानुबन्ध्युदयाभावोऽपि मिथ्यादृष्टेः कथं सम्भवेत् ?" (मलय०) १६०।१

(६४) "अविरतेर्द्वादशमभेदस्य मनोऽभिधानस्य मिथ्यादृष्ट्यादिषु प्राग्बन्धहेतुतामुक्त्वा किमिति युगपत् बन्धहेतुषु न दर्शिता ?" (स्वो०) पृ० १७१।२

(६५) "स्त्रीणां चतुर्दशपूर्वाधिगमसम्भवाभावादाहारकद्विकासम्भवः, चतुर्दशपूर्वाधिगमोऽपि कस्मान्न भवति ?" (मलय०) पृ० १७५।२

(६६) "ननु सासादनभावेऽपि शेषपर्याप्तिभिरपर्याप्तानां शरीरपर्याप्त्या पर्याप्तानामौदारिककाययोगो लभ्यते इति...सासादनगुणस्थानके त्रयो योगाः किं न प्रोच्यन्ते ?" (मलय०) पृ० १७९।१

(६७) "यद्येवं (तीर्थंकरनामगोत्रस्य) क्षायिकौपशमिके अपि हेतू स्तस्ततः सर्वसिद्धानां तीर्थंकरत्वपूर्वकं सिद्धत्वं तद्बन्धश्च मुक्तानामपि प्रसज्यते ?" (स्वो०) (मलय०) पृ० १८६।२

(६८) "संयमोऽपि यद्याहारकद्विकस्य बन्धहेतुरुद्घुष्यते तर्हि क्षीणमोहादावपि तद्बन्धः प्रसक्तः ?" (मलय०) पृ० १८७।१

(६९) "अथ ब्रूयादाचेलक्यमुक्तप्रकारेण (श्रुतोपदेशेनान्यथा वस्त्रधारणं) तावदौपचारिकं, ततस्तथारूपाचेलक्यासेवनपरीषहसहनमप्यौपचारिकमेव स्यात्, तथा च सति कुतो मोक्षावाप्तिः ?" (मलय०) पृ० १९०।१

(७०) "अथ प्रतिपातकाले एकस्याः प्रकृतेर्बन्धमाधायैकत्रिंशत्प्रकृतिबन्धमपि गच्छति...इति (नाम्नः) सप्त भूयस्काराः प्राप्नुवन्ति, (कथं षडेव) ?" (मलय०) पृ० २००।२

(७१) "अथ मिथ्यादृष्टेः सप्तकोदये सत्यपान्तरालगतौ

ज्ञानरूपश्चेत्, कथं नियामकं विना तद्विषयः । स्वकारणसामग्रीसामर्थ्यात् इति चेत्, सोऽयं व्यवहृतिरूपज्ञा-नालीकभेदयोर्नियामकान्तराभावेऽपि कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति न त्वनुभवानुभाव्ययोरिति क्षीरं विहाय सौवीरे रतिररोचकग्रस्तस्य ।

असन्नेवं चास्फुरन्नध्यवसीयते इतीयमाशङ्का । विवरणार्हमेतत् इति समाधानम् । बौद्धाधिकारे तु असन्नेवास्फुरन्नेवाध्यवसीयतं इति चेत्, अध्यवसीयत इति विवरणाऽर्हमेतत्, तद्विषयव्यवहारजननमध्यवसायार्थ इति चेत् व्यवहारोपीत्यात्रैव पाठः । बौद्ध उक्तमेव विवृण्वन् शङ्कते–अस्फुरन्नित्यादि । ननु विषयतासंसर्गेण व्यवहारं प्रति विषयतासंसर्गेण विकल्पस्य कारणत्वेन स्वाविषये कथं विकल्पो व्यवहारमुत्पादयेत् ? अन्यथा कोऽप्येक एव विकल्पः सर्वत्र प्रवर्त्तयेदिति नैयायिको यद्यन्तराशङ्केत तदा बौद्धस्तदुत्तरमाह–स्वकारणेति । कथमसन्निति विज्ञानवादिनो मते ज्ञानातिरिक्तस्यासत्त्वेनाभ्युपगमादिति भावः । भेदो हि सांवृतोऽभ्युपगतः, ज्ञानरूपव्यवहारश्च पारमार्थिकः, सांवृतपारमार्थिकयोश्च तयोर्नाभेद इति विषयत्वे भवदभ्युपगतस्याभेदस्य नियामकस्यात्राभावेन कथं सांवृतभेदविषयको ज्ञानरूपव्यवहार इति समाधत्ते–कथं नियामकं विनेति । ननु स्वकारणसामग्रीबलेनैव स्वसाद्भिन्नोऽपि भेदो व्यवहृतिरूपज्ञानविषय इत्याशङ्कते–स्वकारणसामग्रीति । नियामकान्तराभावेऽपि तादात्म्याभावेऽपि । अनुभाव्येति पारमार्थिकस्वलक्षणेत्यर्थः ।

एतेनास्फुरन्निर्विकल्पकाविषयः, तत्रैवानात्मभानस्य निषिद्धत्वात्, अध्यवसीयते साक्षाद्विकल्पविषयीक्रियते, तथा च निर्विकल्पकतद्विषययोरेव ग्राह्यग्राहकाभ्यामभेदः साधनीयः, सहोपलम्भादौ चोपलम्भः

(८२) "असंज्ञिषु मध्ये (देवद्विकवैक्रियद्विकयोः) सर्वजघन्यः प्रदेशबन्धः कस्मान्न प्राप्यते ?" (मलय०) पृ०२५७।१

(८३) "अथ...कथं दलिकं (गुणश्रेणिषु) यथोत्तरमसंख्येयगुणं प्राप्यते ?" (मलय०) पृ० २६८।२

(८४) "अथोच्येत कथं स्थितिघातरसघातबन्धोदयोदीरणाव्यवच्छेदानन्तरसमये समयद्वयोनावलिकाद्विकबद्धमेव सदस्ति, न शेषमिति ज्ञायते ?" (मलय०) पृ० ३०५।१

## (९) अनाक्षेप्याणि प्रावचनिकसूरीणां मतान्तराणि

(१) केवलज्ञानकेवलदर्शनरूपकेवलद्विकेन सह मतिज्ञानादिछाद्मस्थिकोपयोगा न भवन्ति।

अन्ये पुनराहुः—"सन्त्येव सयोगिकेवल्यादावपि मतिज्ञानादीनि केवलं न विवक्ष्यन्ते, यथा सूर्योदये नक्षत्रादीनि"। (मलय०) पृ० १८।१।२

(२) उपमश्रेणिप्रस्थापकोऽप्रमत्तसंयत एव।

अन्ये पुनराहुः—"अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमोऽनन्तानुबन्धिनः कषायानुपशमयति, दर्शनत्रिकादिकं तु संयमे एव वर्त्तमानः।" (मलय०) पृ० २३।२

(३) कार्मग्रन्थिकाभिप्रायः—"उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन्भवे क्षपकश्रेण्यभावः, यः पुनरेकवारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपि।"

सैद्धान्तिकाभिप्रायेण"त्वेकस्मिन्भवे एकामेव श्रेणिं

नीलाद्यनेकाकारत्वं वा, नीलपीताद्यतिरिक्ताकारशालित्वं वा, नाद्यो, विज्ञानस्यापि यावदाकारं नानात्वे एकत्र चित्राकारसंवेदनानुपपत्तेः, न द्वितीयो, नीलाद्यतिरिक्तैकाकारशालित्वेऽपि नीलपीताद्यनुल्लेखे तद्भेदोल्लेखानुपपत्तेः। भवतां नीलपीतादिविलक्षणचित्ररूपवदस्माकं नीलाद्याकारविलक्षणो विज्ञानस्य चित्र आकारः, तस्य चैकत्वेऽप्यनीलाकाराद्यनेकव्यावृत्तिनिबन्धनस्तत्रानेकत्वोल्लेख इति चेत्,

स्यादेतदिति, ततः विकल्पतः। अद्वयदर्शि उभयानवगाहि। त्रीणि ज्ञानानि नीलज्ञानपीतज्ञानभेदज्ञानरूपाणि। तद्भेदोल्लेखानुपपत्तेरिति यदाकारं ज्ञानं तत्तदुल्लेख्येव भवतीति नीलपीतादिप्रतियोग्यनुयोग्यनुल्लेखे नीलाद्भिन्नं पीतं पीताद्वा भिन्नं नीलं नीलपीते मिथो भिन्ने इत्येवं वा ज्ञानं न स्यादित्यर्थः। अनेकत्वोल्लेखः नीलपीताद्याकारभेदोल्लेखः।

ता अपि व्यावृत्तयो विज्ञानाद्भिन्ना न वा, भिन्नाश्चेत्, कथं विज्ञानेन तद्ग्रहः, अगृहीतानां च तासां न भेदाध्यवसायनिमित्तत्वम्, अभिन्नाश्चेत्, कथमेकज्ञानाभिन्नानां तासामनेकत्वम्, एकत्वे च कथं तत्कृतो भेदाध्यवसाय इति। स्यादेतत् माभूदनीलाद्यनेकव्यावृत्तिनिबन्धनोऽनेकत्वाध्यवसायः, स्वकारणसामर्थ्यायातस्तु स्यात्, तत्रानेकत्वं काल्पनिकमिति न वास्तवीं विकल्पैकतां विरुणद्धीति चेत्, तदनेकत्वं ज्ञानादभिन्नं भिन्नं वा, आद्येऽनेकस्वरूपमेकमिति कोऽन्यो वदेदस्वस्थात्, द्वितीयपक्षस्त्विष्यत एवास्माभिः, किन्तु त्वयेष्यतां ज्ञानेन त्वभिन्नानेकत्वप्रकाशः। विकल्पस्य भ्रमत्वात् तत्रासत्प्रकाशो न विरुध्यते, असत्प्रकाशनस्वभावत्वात् भ्रान्तेः, विरुध्यते तु निर्विकल्पके, तस्य सन्मात्रप्रकाशनशीलत्वात् इति चेत्, न, विकल्पेनान्यस्यासत इव निर्विक-

(९) सम्यग्मिथ्यादृष्टिवदविरतसम्यग्दृष्टेरप्यष्टरज्जुस्पर्शना। मतान्तरेण द्वादशरज्जुस्पर्शना नवरज्जुस्पर्शना चापि प्रोक्ता। (स्वो०) (मलय०) पृ० ६७–२, ६८–१

(१०) उत्कर्षतः स्त्रीवेदावस्थानचिन्तायां पुनर्भगवताऽऽर्यश्यामेन पूर्वपूर्वतनसूरिमतभेदमुपदर्शयता पञ्चादेशाः प्रज्ञप्ताः, तद्यथा—

[१] दशोत्तरं पल्योपमशतं पूर्वकोटिपृथक्त्वाभ्यधिकम्,
[२] अष्टादश पल्योपमानि पूर्वकोटिपृथक्त्वं च,
[३] चतुर्दश पल्योपमानि पूर्वकोटिपृथक्त्वाभ्यधिकानि,
[४] पल्योपमशतं पूर्वकोटिपृथक्त्वाभ्यधिकम्,
[५] पल्योपमपृथक्त्वं पूर्वकोटिपृथक्त्वाभ्यधिकम्।

(मलय०) पृ० ८१–१

(११) अत्र ५९ गाथायामाईशानादन्तर्मुहूर्त्तमासहस्रारान्नव दिनान्याच्युतान्नव मासान्यापराजितान्नव वर्षाणि ततः आगतस्य जीवस्य तत्र पुनरुपपातेऽन्तरं प्रोक्तम्। जीवाभिगमे तु भवनवासिन आरभ्यासहस्राराज्जघन्यमन्तरमन्तर्मुहूर्त्तमानतकल्पादारभ्यासर्वार्थसिद्धमहाविमानवर्जशेषविजयादिविमानचतुष्टयाद्वर्षपृथक्त्वम्।

(मलय०) पृ० ९२–२

(१२) *वामनं चतुर्थं संस्थानं, कुब्जं पञ्चमम्। केचिद्वामनसंस्थानं पञ्चमस्थानेऽभिदधति।

(स्वो०) पृ० ११८–२

(१३) सर्वसंख्यया प्रकृतीनामष्टचत्वारिंशं शतं भवति। गर्गर्षिशिवशर्मप्रभृत्याचार्यान्तरमतेनाष्टपञ्चाशदधिकं प्रकृतिशतं सत्तायामधिक्रियते। (मलय०) पृ० १२०–२

(१४) स्वमतेन (पञ्चसङ्ग्रहमतेन) निद्राप्रचलयोरुदीरणोपशा-

---

* मूलकृट्टीकाकृद्भिर्नेष्टमिदम्, पृ० २२०–१–२ गा० ३५ पञ्चमद्वारम्।

सर्वेषां स्वसाद्भिन्नत्वाविशेषेऽपि सविकल्पज्ञानस्य नियतविषयकत्वं स्वकारणसामर्थ्यादेव भवतीति चेत्, तर्हि स्वसाद्भिन्नावगाहके निर्विकल्पज्ञानेऽपि तत एव तथात्वमस्त्वित्याह—कारणसामर्थ्येनेति। ग्रहविशेषणत्वमपीति विरुध्यत इत्यनेनान्वयः। सर्वस्य सर्वत्रेति, घटादिज्ञाने कूर्मरोम्णोऽपि विशेषणत्वं स्यादिति भावः। अत एवातत्त्वत्तयेति, अत्र "स्यादेतत् यथाऽतत्त्वतया परिस्फुरदपि न वस्तुगत्या तदेव, तथा तदप्यतत्तया परिस्फुरदपि नातदेव, ततः स्वरूपस्यातत्तया प्रथनेऽपि न काचिद्ग्राह्यलक्षणक्षतिरितिचेत्, यद्यतत्ताऽपि विस्फुरन्ती स्वरूपमेवास्य स्यात्, स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः, अस्वरूपस्य कथं प्रकाश इति यद्यपि तथा वक्ष्यामः तथाप्यतत्ता कथं तस्य स्वरूपमितीतोऽपि दीयतां दृष्टिः" इति बौद्धाधिकारे पाठः॥ भिन्नस्य ग्राह्यत्वे को दोष इति विज्ञानवादिनं नैयायिकः पृच्छति—

कश्चास्वरूपस्फुरणे दोषः। नह्ययं विषयविषयिभावः कार्यकारणभावनिबन्धनः, ग्रहणेन्द्रिययोरपि प्रसङ्गात्, नापि व्यापारनिबन्धनो, ज्ञानेनातीतानागतयोरर्थयोस्ताभ्यां वा ज्ञाने व्यापाराधानायोगात्,

कश्चेति। विज्ञानवादी उत्तरयति—न हीति। भिन्नस्य ग्राह्यग्राहकभावे न तावत्कार्यकारणभावो नियामकः, तथा सति प्रत्यक्षस्य ग्राह्यमिन्द्रियं स्यात्तयोरपि कार्यकारणभावादिति भावः। अत्र न स्याच्च कार्यकारणभावाभावेनानुमित्यादिग्राह्यत्वं साध्यादीनामित्यपि द्रष्टव्यम्। नापि ज्ञाने नीलाद्यर्थेन ज्ञानेन नीलाद्यर्थे वा व्यापारो जन्यत इति तन्निबन्धनो नीलाद्यर्थतज्ज्ञानयोर्विषयविषयिभाव इत्यपि सम्भवति, श्यामताविशेषलिङ्गेनानुमितधूमलिङ्गेन भूतवह्न्यनुमानं यत्र यत्र च कृत्तिकोदयलिङ्गेन भविष्यच्छकटोदयानुमानं तत्रातीतानागतविषयकशाब्दबोधस्मरणादिस्थले चातीतानागतार्थयोरसत्त्वेन तत्र ज्ञानेन ताभ्यां ज्ञाने वा व्यापाराधाना-

(१०) टीकान्तो दर्शिता न्यायाः।

(१) काकाक्षिगोलकन्यायः, (मलय०) पृ० २४७-२

(२) व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणता, (मलय०) पृ० २५८।१

# पञ्चसंग्रहद्वितीयविभागस्य परिशिष्टानि

## (१) कर्मप्रकृतिविभागे समाहितानि चार्चिकानि।

(१) "किमित्यमून्यप्रस्तुतानि बन्धनादीनि करणान्युच्यन्ते" ? (मलय०) पृ० २।१

(२) "ननु जीवानामनन्तत्वात्प्रतिजीवं च योगस्थानस्य प्राप्यमाणत्वादनन्तानि योगस्थानानि प्राप्नुवन्ति, कथमुच्यते श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि" ? (मलय०) पृ० ५।२

(३) "यद्येवं ततः कार्मणशरीरस्य बन्धाभावे हास्यरतिभयजुगुप्सापुरुषवेदसञ्ज्वलनज्ञानान्तरायदशकदर्शनचतुष्कयशःकीर्त्तिसातोच्चैर्गोत्राणां प्रादुर्भावो न घटते, बीजविनाशेऽङ्कुरस्येव"। (स्वो०) पृ० १५।१

विषयकत्वापत्तिर्घटद्विषयकत्वापत्तिर्वा, न च ज्ञानगतमेव किमपि वैजात्यमस्ति, येन नियतविषयकमेव ज्ञानं भवतीति वाच्यम्, आश्रययोग्यत्वे तद्गतजात्याऽपि योग्यत्वेनैव भाव्यं, येनैवेन्द्रियेण यद्वस्तु गृह्यते तेनैव तद्गता जातिस्तदभावश्च गृह्यत इति नियमात्, तथा चोपलम्भः स्यात्, न चोपलभ्यत इत्यनुपलम्भेन तदभावात्, न चोक्तनियमे मानाभावेनायोग्यमेव वैजात्यमस्त्विति वाच्यम्, पटविषयकज्ञानवैजात्याभाववति घटविषयकज्ञाने घटविषयकज्ञानवैजात्यस्य तदभाववति पटज्ञाने पटज्ञानवैजात्यस्य तयोः सामानाधिकरण्यस्य च घटपटादिविषयकसमूहालम्बनज्ञाने सत्त्वेन साङ्कर्यस्य जातिबाधकस्य सत्त्वेन तस्याप्यभावादित्याशयेनाह— पटत्वादेर्नियामकत्व इत्यादि। भिन्नानां ग्राह्यत्वानुपपत्तिमुक्त्वा स्वस्यापि स्वसंवेदनपक्षे योगाचारो ग्राह्यत्वानुपपत्तिमुपदर्शयितुं पराशङ्कामाह—

अथ जात्यैव सर्वं विज्ञानं स्वविषयकमिति चेत्, किमिदं स्वं नाम, यद्येकविज्ञानव्यक्तिः, तदा सर्वेषां विज्ञानानां तद्विषयत्वापत्तिः, अथ विज्ञानमात्रं, सर्वेषां सर्वविज्ञानविज्ञतापत्तिरिति स्वस्य संवेदनमित्येवार्थो नोपपगत इति न तत् कस्यचित्, किन्तु वेदनमात्रम्। तदुक्तम्। 'विज्ञानं जडरूपेभ्यो, व्यावृत्तमुपजायते॥ इयमेवात्मसंवित्ति-रस्य याऽजडरूपता॥१॥' इति, मैवम्, तथापि स्वात्मनि अजडवत्परत्राप्यजडं स्यात्, परस्मिन्नन्धवत् स्वस्मिन्नप्यन्धं प्रसज्येत।

अथेति। जात्यैव ज्ञानत्वेनैव, तद्विषयत्वापत्तिरिति एकज्ञानव्यक्तिविषयकत्वं स्यादित्यर्थः, ज्ञानमात्रे स्वविषयकत्वमपि न स्यादित्यपि बोध्यम्। न तत् कस्यचिदिति तद् विज्ञानं न कस्यचित्संवेदनमित्यर्थः, न ज्ञानं किमपि विषयकमिति

करणं न भवति ?" (मलय०) उप० पृ० १६८।१

(१२) "ननु मिथ्यादृष्टेरवश्यमनन्तानुबन्धिनामुदयः संभवति, तत्कथमिह मिथ्यादृष्टिः सप्तोदये अष्टोदये वा कस्मिंश्चिदनन्तानुबन्ध्युदयरहितः प्राप्यते" ? (मलय०) सप्त० पृ० २३६।२

(१३) "ननु कथं बन्धावलिकातिक्रमेऽप्युदयः संभवति, यतोऽबाधाकालक्षये सत्युदयः, अबाधाकालश्चानन्तानुबन्धिनां जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतश्चत्वारि वर्षसहस्राणि ?" (मलय०) सप्त. पृ० २३६।२

(१४) "आह–तेषां (अनन्तानुबन्धिनां) असद्भूतानामपि कथं भूयोऽपि सत्ताप्रादुर्भावो भवति"? (स्वो०, एवं मलय० अपि) सप्त० पृ० २४६।१

(१५) "अथ मनुष्यः क्षायिकसम्यक्त्वमुत्पाद्य यदा तिर्यक्षूत्पद्यते तदा तिरश्चोऽप्येकविंशतिः प्राप्यते एव, तत्कथमुच्यते न संभवन्तीति ?(मलय०) सप्त० पृ० २४९।२

(१६) "आह–एवं उभयगुणस्थस्यैतत्कालप्राप्तिर्भवत्येवं हि सप्तविंशतिसत्स्थाने (सप्तदशबन्धस्थाने) जघन्यस्थितेरभावः"? (स्वो०) सप्त० पृ० २५३।१

(१७) "नन्वाहारकद्विकबन्धः संयमप्रत्ययः...संयमश्च प्रमत्तसंयतेऽपि विद्यते, ततः...त्रिंशदपि बन्धस्थानं कस्मान्न भवति" ? (मलय०) सप्त० पृ० २६०।२

(१८) "आह (उत्तरवैक्रिययतीनां) दुःस्वराप्रशस्तविहायोगतिभेदात् कथं चतुर्दश २ न भवन्ति (भङ्गाः)" (स्वो०) सप्त० पृ० २८४।१

(१९) "आह–ध्रुवोदयानां सतीनामपि नामप्रकृतीनामयोगिनः कस्मादुदयो न भवति ?" (स्वो०) सप्त० पृ० २९०।२

धिकं तथापि तस्य बाधितत्वादेव भङ्ग इत्याशङ्कते—बाधकादिति। समाधत्ते—बाधकमिति, स्वविषयमपीति । अपिना स्वाविषयस्योपग्रहः। तदा विज्ञानमपीति, स्वसंवेदनपक्षे बाधकज्ञानस्वरूपमपि बाधकज्ञानस्य विषय इति तदपि तेन बाधितं स्यात्, तथा च बाधकविज्ञानस्यापि बाधितत्वाद्भङ्ग एवेति भावः। ननु बाधकज्ञानं स्वात्मविषयं न बाधते येन बाधकज्ञानस्वरूपमपि बाधितं स्यात्, किन्तु तद्भिन्नविषयमेवेति चेत्,तर्ह्यनायासेनैव भिन्नस्यापि संवेदनं संजातमेव, यतो बाधकज्ञानं प्रतियोगिविधया बाध्यविषयमेव, अन्यथा बाध्यबाधकभाव एव न स्यात्, बाध्यस्य च भिन्नत्वेनैवाभ्युपगमात्, तथा च भिन्नेऽपि ग्राह्यत्वहेतोर्वृत्ते र्व्यभिचारस्स्पष्ट इत्याशयेनाह—स्वाविषयमेवेति, चेतो भेदे ज्ञानाद्विषयस्य भेदे, अथवा चेत इति प्रथमान्तं पूर्वान्वयि, भेद इत्यारभ्यैव हेतुः। अभेद इति ग्राह्यग्राहकयोरिति शेषः। चित्रत्वानुपपत्तेरिति, अभेदे नीलपीताद्यनेकाकारत्वानुपपत्त्या चित्रत्वानुपपत्तेरित्यर्थः। विरुद्धविधिवदिति, विरुद्धद्वयविधिवदित्यपि पाठः। सोऽपि विरुद्धद्वयविधिरपि, निमित्तभेदापेक्षयेति शेषः। तूष्णींभूय स्थितमिति, स्याद्वादावतारे इत्यादेर्व्याख्या न कृता, अनेन तस्य तदपरिज्ञानं सूचितम्। शिरोमणिमुपहसन् तत्कृतव्याख्यामुपदर्शयति—

शिरोमणिस्तु निपुणंमन्यः प्राह—स्यादिति तिङन्तप्रतिरूपको निपातोऽनेकान्तवाची, दिगम्बरा वस्तूनां सत्त्वासत्त्वानिर्वचनीयत्वानि अनिर्धारितानि प्रतिजानते, तथा हि सप्तभङ्गीनामकं नयमाचक्षते, स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यः, स्यादस्ति नास्ति च, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति नास्ति चावक्तव्यश्चेति, वस्तु सत्त्वाश्रय इत्यनिर्द्धारितम्, तथाऽसत्त्वाश्रय इत्यनिर्वचनीयत्वाश्रय इति सत्त्वासत्त्वा-

(३) "इह कर्मस्तवकारादयः क्षपकक्षीणमोहयोरपि निद्राद्विकस्योदयमिच्छन्ति, उदये च सत्यवश्यमुदीरणा, ततस्तन्मतेनोक्तं क्षीणरागमन्तावलिकामात्रकालभाविनं मुक्त्वेति"।

"सत्कर्माभिधग्रन्थकारादयः क्षपकक्षीणमोहान् व्यतिरिच्य शेषाणामेव निद्राद्विकस्योदयमिच्छन्ति...तन्मतेनोदीरणापि निद्राद्विकस्य क्षपकक्षीणमोहान्व्यतिरिच्य शेषाणामेव वेदितव्या।"

(मलय०) उदी० पृ० ११६।१

(४) "स्त्रीवेदादीनां नवानां नोकषायाणामतिजघन्यानुभागस्पर्द्धकादारभ्य क्रमेणानन्ततमो भागो देशविरतानां सर्वविरतानां च उदीरणायोग्यो गुणपरिणामकृतः"।

"कर्मप्रकृतौ त्वेतेषामसंख्येयो भागो उदीरणायोग्यो गुणपरिणामकृत उक्तः।" (मलय०) उदी० पृ० १३४।२

(५) पञ्चसंग्रहे चारित्रमोहनीयस्य सर्वोपशमनायामनन्तानुबन्धिनां विसंयोजना करणीयत्वेनोक्ता।

"केचनाचार्या अनन्तानुबन्धिनामुपशमनामपि मन्यन्ते।" (मलय०) उप० पृ० १७०।१

(६) कार्मग्रन्थिका एकस्मिन्भवे द्वे श्रेणी मन्यन्ते।

"आगमाभिप्रायेण त्वेकस्मिन्भवे एकैव श्रेणिर्न तु द्वे अपि"। (मलय०) उप० पृ० २०५।१

(७) सप्ततिकारमतेन दर्शनावरणे भङ्गाः ११।

कर्मस्तवकारमतेन त्रयोदश। (स्वो० मलय०)

सप्त० पृ० २२७–८–२।२

(८) मोहनीयस्य पञ्चविधबन्धकाले एकस्य क्रोधादेरेकस्य च वेदस्योदयः।

केचिदाचार्याश्चतुर्विधबन्धकस्याप्याद्यविभागे वेदो-

मम परं निपुणं विभाव्य, भावावबोधविहितो न दुनोति दोषः ॥१॥ इति संपूर्णश्लोकः। प्रकृतमनुसरन् विज्ञानवादिपूर्वपक्षमुपन्यस्यति

अस्तु तर्हि चतुश्शिखरीशून्यमेव चित्रमाश्चर्यरूपत्वात्, चत्वारि शिखराणि कोटयो भेदाभेदौ तद्व्यतिरेकौ च, अभेदस्तादात्म्यं, तेन न भेदस्याभेदविरहरूपत्वात् त्रिशिखरीपर्यवसानापत्तिरिति गुणानन्दः। एकानेकत्वविरहेऽपि सत्त्वमित्याश्चर्यार्थो हि चित्रशब्द इति चेत्, अथ चतुःशिखरीशेखरमेव किं न स्यात्, आश्चर्यरूपतायुक्तेस्तुल्यत्वात्, चित्रं ज्ञानमिति प्रयोगे चित्रपदस्याश्चर्यार्थताव्याख्यानानुरोधादेव चेत् विरुद्धधर्मसंसर्गवत्त्वमुपेयते, तद्वरं प्रथमोपस्थितत्वात् लाघवात् चतुःशिखरीशालित्वमेवाभ्युपेयमिति भावः। यदि च तत्तत्पक्षानुपपत्त्याऽवश्यं तत्तदभावैर्भवितव्यमिति विभाव्यते, तदा परस्परनिषेधविधिनान्तरीयकविधिनिषेधयोरेकनिषेधेऽपरविधिरप्यावश्यक इत्यपि विभावयितुं कः परिश्रमः। अपि चोक्तकोटिचतुष्टयाभाववत्तया चित्रज्ञानं गृह्यते, न वा, न चेत्, न चित्रत्वसिद्धिः, स्ववचनविरोधश्च, गृह्यते चेत्, कोटिचतुष्टयभानमावश्यकम् ॥

अस्तु, तर्हीति अभेदस्य तादात्म्यमित्यर्थकरणे फलमाह—तेनेति, अभेदस्य तादात्म्यरूपत्वेन तद्विरहो न भेदरूप इत्यभेदविरहरूपचतुर्थकोटेर्न भेदरूपप्रथमकोट्यन्तर्गतत्वमिति न त्रिशिखरीपर्यवसानापत्तिरित्यर्थः। यदेकमनेकं वा तत्सद्रूपं लोके व्यवह्रियते, अत्र तु तदुभयविरहरूपमपि सद्रूपमित्यलौकिकस्वभावास्पदत्वादाश्चर्यरूपमित्याह—एकानेकत्वविरहेऽपीति। प्रथमोपस्थितत्वादिति अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वाच्चतुःशिखरीशून्यत्वज्ञानात्पूर्वं चतुःशिखरीरूपप्रतियोगिन उपस्थितेरावश्य-

वैकोटिकृततीव्रसंयमस्य..." (संक्र०) पृ० ९०।१

(२) "उपशान्तगुणस्थानादुपशान्ताद्धाक्षयेण विलोमतो यथारोहं प्रतिपतति...यावदप्रमत्तम्।" उप०पृ० २००।२

(२) "...स च तावत्प्रतिपतति यावत्प्रमत्तगुणस्थानकम्।" उप० पृ० २०१।१

---

## (४) कर्मप्रकृतिविभागान्तर्गतानि तथाविधसंप्रदायाद्यभावेनानवगतादीन्यपि संमानितानि वस्तूनि।

(१) "इह (उत्कृष्टप्रदेशसंक्रमस्वामित्वाधिकारे) एवमेव स्त्रीवेदस्योत्कृष्टमापूरणमुत्कृष्टश्च प्रदेशसंक्रमः केवलज्ञानेनोपलब्धो नान्यथेत्येवैव युक्तिरनुसर्त्तव्या, न युक्त्यन्तराणि।" (मलय०) सं० पृ० ८३।१

(२) "वैक्रियमिश्रकाययोगो भवान्तरे उत्पद्यमानस्य यदुच्यते तद्बाहुल्यापेक्षया, अन्यथा तिर्यग्मनुष्याणामपि वैक्रियकारिणां वैक्रियमिश्रमवाप्यते, परं तत्सप्ततिकाचूर्णिकारेण न विवक्षितमित्यस्माभिरपि न विवक्ष्यते।" (मलय०) सप्त० पृ० ३११।१

---

ग्राह्यलक्षणक्षतावपि न क्षीयते, न प्रकाशसम्बन्धो, नियमानुपपत्तेरित्युक्तम्, न प्रकाशतादात्म्यं, चित्रत्वानुपपत्तेरित्युक्तम्। तस्मात् नीलादीनां प्रकाशमानत्वं परिपालयता ग्राह्यलक्षणे यत्नः कर्तव्यः, परिहर्त्तव्यं वा प्रकाशमानत्वम्, अन्यथा तपनीयमपनीय वाससि ग्रन्थिकर्त्तारमुपहससि, स्वयं च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषीति। तपनीयमपनीय वस्त्रग्रन्थिबन्धः प्रकाशमानतामपोह्य बाह्यस्वीकारः, तदनात्मकस्यापि बाह्यस्य सम्भवात्, तदुपादाय च गगनग्रन्थिबन्धः प्रकाशमानत्वमभ्यन्तरीकृत्य बाह्यस्वीकारः, चतुःशिखरीशून्ये तत्र तदाधारत्वानुपपत्तेरिति नारायणः। सेयं सर्वप्रकारमसिद्धिः, सर्वप्रकारं चानैकान्तिकत्वम्। अस्यार्थः—यदि क्वचित् भेदेऽपि ग्राह्यत्वम्, यदि वा न क्वापि भेदेऽपि ग्राह्यत्वम्, उभयथापि विपक्षे बाधकाभावात् न व्याप्तिसिद्धिः;

अथ नीलादीनामिति। तेषां नीलादीनाम्। नीलपीतादीनां प्रकाशतादात्म्यं यदि स्यात्तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमात्तेषामप्यैक्यं स्यात्, तथा च चित्रत्वानुपपत्तिस्स्यादित्याशयेनाह—चित्रत्वानुपपत्तेरिति, उक्तमिति अभेदे चित्रत्वानुपपत्तेरिति ग्रन्थेनोक्तमित्यर्थः। प्रकाशमानतामपोह्य प्रकाशतादात्म्यमनभ्युपगम्य। बाह्यस्वीकारः नैयायिकादीनामिति द्रष्टव्यम्। तदनात्मकस्यापि प्रकाशानात्मकस्यापि। तदुपादाय तपनीयं गृहीत्वा। तत्र प्रकाशे। तदाधारत्वेति बाह्याधारत्वेत्यर्थः। उपसंहारमाह—सेयमिति, उभयथाऽपि भेदे ग्राह्यत्वेऽग्राह्यत्वे वेत्युभयपक्षेऽपि। बाधकाभावादिति अभेदो माऽस्तु ग्राह्यत्वमस्त्वित्याकारकव्यभिचारशङ्कानिवर्त्तकतर्काभावादित्यर्थः। व्याप्त्यसिद्धौ हेत्वन्तरमाह—

व्याप्तेर्नानापदार्थघटिततयैकज्ञानात्मकत्वानुपपत्तेश्च। एवं भेदे ग्राह्यत्वे ग्राह्यत्वादेर्विपक्षवृत्तित्वं, भेदे चाग्रा-

(५) "मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु क्षपणाय.." (मलय०) सं० पृ० ९०।१

(६) "ततो वर्षाष्टकानन्तरमुत्कृष्टं कालं देशोनपूर्वकोटिप्रमाणं संयमं परिपाल्य" (मलय०) उदी० पृ० १३०।१

(७) "मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वरूपं (दर्शनं) तस्य क्षपणा, तस्या अर्हो...व्यतीताष्टवर्षः"। (स्वो०–मलय० अपि) उप० पृ० १७०।१–२

(८) "कश्चिन्मनुष्यो वर्षाष्टकस्योपरि वर्त्तमानो वेदकसम्यग्दृष्टिः सन्क्षपणायाभ्युद्यतः, " (मलय०) सप्त० पृ० २४८।१

## (७) कर्मप्रकृतिविभागे साक्षितयोद्धृता ग्रन्थाः।

शतकचूर्णिः, (मलय०) पृ० १७।२

शतकबृहच्चूर्णिः, " " १८।२, १६५।१ (उप०), २४९।२ (सप्त०)

कर्मप्रकृतिः, " " १९।१, ११६।१ (उप०), ३०३।२ (सप्त०)

अनुयोगद्वारचूर्णिः " " २३।२

कर्मप्रकृतिचूर्णिः, " " ३४।१, ४६।१ (सं०)

मूलटीका (पं० सं० स्वो०) " ८४।२, ९०।२ (सं०), ९२–२ (सं०), २४३।१ (सप्त०), २५३।२ (सप्त०)

साध्ये नीलावृत्तिधर्मशून्यत्वस्योपाधित्वाच्चोक्तहेतूनां व्याप्यत्वासिद्धिरित्याह—

विपक्षे बाधकाभावात् तदवृत्तिधर्मशून्यत्वस्योपाधित्वाच्च सर्वेषां व्याप्यत्वासिद्धिः। एवं सर्वेषां पक्षत्वेऽनुसंहार्यत्वं, विशिष्य पक्षत्वे तज्ज्ञानाभेदे साध्ये ग्राह्यत्वस्य साधारण्यम्, तज्ज्ञानग्राह्यत्वस्य च स्वप्रकाशत्वनिषेधात् असाधारण्यमपि, विचित्रज्ञानवेद्येऽलीके भेद इति। केचित्तु प्रकारो विचारस्येत्याहुः, सेयं सर्वप्रकारमसिद्धिरित्यनेन न हि भेदाप्रथन इत्यादेरुपसंहारः। सर्वप्रकारं चानैकान्तिकत्वमित्यनेनानात्मन्यपि सहोपलम्भादयो गता इत्यस्य, उपलक्षणात् कालात्ययापदेशदोषस्याप्युक्तत्वात् तदुपसंहारोऽप्यत्र द्रष्टव्य इति न न्यूनत्वमिति नारायणः। एतेनाभिन्नजातीयत्वं साध्यमिति द्वितीयपक्षोऽपि प्रत्युक्तः, नहि सजातीयत्वेन ग्राह्यलक्षणमुत्सार्यते, अतिप्रसङ्गस्य तादवस्थ्यात्, साजात्यस्य नियामकत्वे सर्वज्ञानानां सर्वज्ञानग्राह्यत्वापातात्।

विपक्ष इति। नीलपीतादीनां सर्वेषां पक्षत्वे ज्ञानाभेदे साध्ये ग्राह्यत्वस्य हेतोरनुपसंहार्यत्वं पक्षातिरिक्ताभावेनान्वयव्यतिरेकदृष्टान्ताभावात्, नीलादेरेकैकस्य पक्षत्वे तज्ज्ञानाभेदे साध्ये ग्राह्यत्वस्य हेतुत्वे साधारण्यं, तज्ज्ञानाभेदाभाववति ज्ञानान्तरग्राह्येऽपि ग्राह्यत्वसामान्यस्य सत्त्वात्, तज्ज्ञानग्राह्यत्वस्य हेतुत्वे चासाधारण्यमपि, तज्ज्ञानाभेदवत्तया निश्चिते तज्ज्ञानस्वरूपेऽपि स्वप्रकाशत्वनिषेधात् तज्ज्ञानग्राह्यत्वस्य व्यावृत्तेरित्याह—एवं सर्वेषां पक्षत्व इति। असाधारण्यमपीति अपिना साधारण्यं परिगृह्यते, तदुपपादनायाह—विचित्रेति। चित्रज्ञाने यो ह्याकाराणां भेदः प्रतिभासते स भवन्मते मिथ्येति तत्र तज्ज्ञानग्राह्यत्वमस्ति, तज्ज्ञानाभेदश्च नास्तीति साधारणानैकान्तिकत्वमिति भावः। नीलज्ञानयोः साजात्ये न ग्राह्यत्वं प्रयोजकं येन ग्राह्यत्वेन साजात्यं

सप्त० पृ० २७०।१

(८) "यथा पञ्चेन्द्रियस्तदावरणतीव्रोदयादपश्यन्नपि अशृण्वन्नपि न विकलेन्द्रियः, पञ्चेन्द्रिय एव" (स्वो०) सप्त० पृ० २९१।१

(९) "तेन मल्लीस्वामिन्यादिभिर्न व्यभिचारः।" (मलय०) सप्त० पृ० ३११।२

(१०) "स्थूलभद्रविष्णुकुमारादीनामिव न सर्वेषां..." (स्वो०) सप्त० पृ० ३१७।२

## (९) कर्मप्रकृतिविभागे न्यायाः ।

(१) घुणाक्षरन्यायः, (स्वो०) उप० पृ० १६७।१

(२) ,, (मलय०) ,, ,, १६७।२

(३) कज्जमाणे कडे, (स्वो०) सप्त ,, २५३।१

(४) लाघवोपजीवनम्, (मलय०) ,, ,, २९३।२

(५) प्रसक्तानुप्रसक्तम्, ,, ,, ,, ३४२।२

अथ प्रकाशकत्वमिति। ज्ञानजातीयमपि किञ्चिदेव किञ्चिद्गृह्णाति न सर्वं सर्वमिति नियतविषयकमेव ज्ञानं जायत इत्यत्र ग्राह्य-ग्राहकयोर्यद्यभेदो नियामकस्तर्हि भिन्नस्यापि ज्ञानजातीयस्यैवान्यज्ञानग्राह्यत्वमित्यस्य सिद्धिर्नस्यात्। अथ कारणसामर्थ्यं, तदा स्व-सामग्रीबलादेव भिन्नत्वाविशेषेऽपि किञ्चिदेव ज्ञानं किञ्चिदेव ग्राह्यं गृह्णातीत्यपि स्यात्, बाधकाभावात्, तथा च ज्ञानजातीयत्वे साध्ये ग्राह्यत्वस्य हेतोर्नीलादिग्राह्ये विपक्षे संदिग्धवृत्तिकत्वात्संदिग्धानैकान्तिकत्वमित्याशयेनाह–अत्र यद्यभेद इति। कारणसाम-र्थ्यमिति लिङ्गविपरिणामेन नियामकमित्यस्यानुषङ्गः, तथात्वे ग्राह्यत्वनियामकत्वे, तथा भवेदिति ग्राह्यत्वनियामकं स्यादित्यर्थः। एकोपादानकत्वं नामेति तथा च ग्राह्ये नियामकस्याभिन्नोपादानकत्वस्याभावेन तन्नियम्यस्य ग्राह्यत्वस्यापि तत्राभाव एवेति न तस्य सत्त्वमिति भावः। कथं नैकोपादानकत्वमित्यत आह–सजातीयकारणस्यैवेति.

ननु स्वस्यैव सहोत्पन्नविज्ञानान्तरस्याप्यविशिष्टं, तेन सहोत्पन्ना नीलपीतादिप्रत्ययाः स्वात्मानं परं च गृह्णन्तो भवन्ति विचित्रप्रत्यया इति चेत्, एवमपि स्वकारणसामर्थ्यात् विज्ञानं नियतज्ञानग्राहकमित्यायातं, तथा च तत एव नियतग्राह्यग्राहकमपि भवेदिति सन्दिग्धानैकान्तिकानतिवृत्तेः, उपादानं यदि क्षणिकं स्यात् स्यादपि तत्सामर्थ्यं नियामकं, न त्वेतदस्ति, स्थैर्यस्य प्रतिसन्धानादिति सामग्रीसामर्थ्यमेव नियामकं वाच्यं, तत्र चोक्तदोषः संलग्नक एव॥

नन्वेकोपादानकत्वञ्च। स्वस्यैव सहोत्पन्नविज्ञानान्तरस्याप्यभिन्नोपादानकत्वाभ्युपगमफलमाह–तेनेति। चित्रज्ञानशब्द-वाच्यं न नीलपीतादिसमूहालम्बनज्ञानं पूर्वोक्तयुक्तेस्तदनुपपत्तेः, किं तु एकस्मिन्नेव क्षणे एकस्मादेवोपादानात् पृथगुत्पन्ना नील-

# विषयानुक्रमः

—(०)—

तद्ग्राह्यत्वनियामकत्वादिपरतया कथञ्चिदुपपाद्यः। एतावानर्थः तत्सामग्र्यजन्यस्य तद्ग्राह्यत्वेऽतिप्रसङ्गादितिरूपः। येन ज्ञानेन, विभाव्यतामिति तथा च न केनाप्येकेनज्ञानेन तत्सामग्र्यऽजन्यस्य तद्ग्राह्यत्वेऽतिप्रसङ्गादितिरूपोऽर्थो विषयीकृतः, तस्यानेकरूपस्यैकज्ञानसामग्र्याऽजन्यत्वादित्यसिद्धं तत्र तज्ज्ञानग्राह्यत्वे तज्ज्ञानसामग्रीजन्यत्वं नियामकमितिसाधयितुमलमितिभावः। एकस्यैवोपादानस्य सहकारिवैचित्र्यात् सामग्रीवैलक्षण्येन कार्यवैचित्र्यं, यथा घटस्य स्थिरस्य रूपप्रागभावादिसामग्रीसंवलितस्य रूपजनकत्वं रसगन्धादिप्रागभावादिसहकारिसहितस्य रसगन्धादिजनकत्वं, न तु पुञ्जात् पुञ्जोत्पत्तिरिति न तद्दृष्टान्तेनैकसामग्रीप्रयोज्यत्वेऽपि चित्राकारत्वं युक्तं, क्षणिकत्वपक्षे यद्यपि पुञ्जात् पुञ्जोत्पत्तिः संभवति तथापि प्रकृते एकसामग्रीजन्यत्वं मास्तु ग्राह्यत्वमस्त्विति व्यभिचारशङ्कानिवर्तकतर्काभावादप्रयोजकत्वम् यद्वा तर्कस्य सद्भावेपि तत्तत्पदार्थघटितत्वेनानेकरूपस्य तस्यैकज्ञानसामग्रीजन्यत्वासम्भवेन ज्ञानं न सम्भवतीत्येतत्सर्वमभिप्रेत्यैतेनेत्यतिदिष्टमाह—

उपादानस्थिरत्वानुभवेन तथा वक्तुमशक्यत्वात्, क्षणिकत्वे विपक्षबाधकाग्रहात्, अत एव वैनाशिकानां तदुपादानोपादेयत्वं नियामकमिति प्रत्युक्तम्। अस्तु तर्हि ग्राह्यांशस्यालीकत्वमिति तृतीयः पक्षः, भिन्नत्वेऽभिन्नत्वे च ग्राह्यलक्षणानुपपत्तेः, तदभावे सामग्रीसामर्थ्यस्याप्याश्रयितुमशक्यत्वात्, विचारसिद्धे हि वस्तुनि कारणचिन्तावसरो न त्वविवेचित इति चेत्,

उपादानेति। अत एव तदुपादानोपादेयत्वं मास्तु तद्ग्राह्यत्वमस्त्वित्यत्र व्यभिचारशङ्कानिवर्तकतर्काग्रहादेव। वैनाशिकानां बौद्धानाम्। नियामकम् तद्ग्राह्यत्वनियामकम्। तदभावे ग्राह्यलक्षणाभावे। नैयायिकस्समाधत्ते—

वेदनोत्पत्तेनैव प्रतिनियत एवासति व्यवहारो जन्यत इति नियमात्तस्यैव वेदनाधीनव्यवहारगोचरत्वमित्याशयेनाशङ्कते—

सामग्रीतस्तथावेदनोत्पत्तेरिति चेत्, तदेतत् सम्भाव्यते सति न त्वसतीति विशेषः। तथा हि व्यवहारो न वेदनान्तरम्, अनवस्थानात्, किन्तु प्रवृत्त्यादिकं, तच्च सति ज्ञानेनाभिलाप्यस्तत इच्छा ततः प्रवृत्तिस्ततः प्राप्तिरिति क्रमेण स्यात्, न त्वसति, तस्य प्राप्तुमशक्यत्वात्, शक्यत्वे वाऽलीकत्वात्, व्यवहारोऽप्ययमलीक इति चेत्, तर्हि सुतरां लक्षणाभावस्तद्द्वारस्याप्यभावादसतोऽजन्यत्वात्, यदि वाऽसतोऽपि प्रवृत्त्यादेर्जन्यत्वमुपेयते, तदा सत एव तद्गोचरत्वमस्त्विति न ततोऽसत्त्वसिद्धिरिति।

सामग्रीत इति, ज्ञानेनाभिलाप्यस्तत इच्छा ततः प्रवृत्तिरिति अत्र ज्ञानेनाभिलाषस्तेन यत्नस्तेन प्रवृत्तिस्तया तत्प्राप्तिरिति पाठः सम्यक्, बौद्धाधिकारे तथादर्शनात्। असतः प्राप्तुं शक्यत्वे वाऽलीकत्वप्रसङ्गः स्यात्, न हि कदाचित्कश्चित्कूर्मरोमादिकं प्राप्यत इत्याह—शक्यत्वे वेति। व्यवहाररूपस्य ग्राह्यलक्षणघटकस्यालीकत्वेन वेदनजन्यत्वाभावेन तद्घटितस्य ग्राह्यलक्षणस्यासंभव इत्याह—तर्हि सुतरामिति। प्रसङ्गसङ्गत्या विश्वस्य विचारासहत्वमित्यभ्युपगच्छतां योगाचारमाध्यमिकमतावलम्बिनां मतमपाकर्तुं प्रथमं तानजन्मनेनाशङ्कते—

अथ ग्राह्यस्य सत्त्वेऽसत्त्वे च ग्राह्यलक्षणानुपपत्तेरस्तु सत्त्वासत्त्वाभ्यां विचारासहत्वमेव विश्वस्येति चेत्, तत्किमिदानीं तत्त्वोपप्लव एव काष्ठा, शून्यतायां वा, उपप्लवो दोषवत्त्वम्, अनध्यवसाय इत्यन्ये। काष्ठा विश्रामः, नीलादिप्रपञ्चस्य केनापि रूपेणानिरूप्यत्वमेव साध्यतेऽनिरूप्यत्वादेव प्रपञ्चस्य शून्यता वेति द्वयार्थ इति नारा-

# शुद्धिपत्रकम्

| पंक्तिः | पत्रं | पृष्ठं | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १४ | २ | १ | (न) | ० |
| ६ | २ | २ | केन | कर्तुं न |
| ७ | ४ | १ | ना(चर्ल्ये) | नाह |
| ४ | ६ | १ | भणंमि | भणंति |
| १० | ७ | १ | -चनासनुारी | -चनानुसारी |
| ३ | ८ | २ | -र्मनोग्य- | -र्मनोयोग्य |
| ७ | ९ | २ | वैक्रियो | वैक्रियो मिश्रको |
| १० | ९ | २ | तेषां | पतत्प्रयोजनं, अपिशब्दादन्तरालगतौ सप्तानामप्यपर्याप्तकानां कार्मणकाययोगो भवति, |
| ३ | ११ | २ | चेत्वरिमपि | चेत्वरिकमपि |
| १ | १३ | १ | -शुद्ध- | -शुद्धे- |
| १ | १५ | १ | तत् | तत्रैव तत् |
| २ | ,, | ,, | -वक्षया | -चक्षया |
| ७ | १६ | १ | विसणओ | विसेसणओ |
| ४ | ,, | २ | निर- | निरय- |
| १० | १७ | २ | दश्चेह | वेदश्चेह |
| २ | २२ | १ | रस्यापि | रसस्यापि |
| १ | ,, | २ | -नोपब्ध- | -नोपलब्ध- |
| ३ | २५ | २ | भूतो | भूयो |
| ७ | ३१ | १ | स्पर्द्ध- | स्पर्द्धक- |
| ७ | ३४ | १ | -प्रमत्तानां | -प्रमत्ताप्रमत्तानां |
| ३ | ३४ | २ | -विरतौ | -विरते |
| ८ | ३७ | २ | --पर्याक- | -पर्याप्तक- |
| ११ | ४० | १ | 'सुपां सुपोलुक्.' 'पूर्वे सव- | 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः(७-१-३९ |

नाप्यतिनिवृत्तिः, जडीभावमात्रेऽप्युपनिपातिदुःखानिवृत्तेः, न च दुःखमपि विचारासहमित्यहेयमेव, तथाविधस्य विचारेऽप्यनधिकारात्, हेयोपादेयज्ञानशून्यत्वात्, न च पारलौकिकस्य सुखस्य दुःखस्य चापारमार्थिकत्वे तदर्थं श्रमनियमादौ न प्रवृत्तिः, तद्भयाच्च न स्वच्छन्दपानभक्षणादेर्निवृत्तिरिति यथेष्टाचारोऽस्य फलं, विचारात् प्रागपि तस्य पामरादिवदयत्नसिद्धेः, नापि परलोकमात्रानिवृत्तिः, तस्यैहिकतुल्यत्वात्। दृश्यते तावदयं लोक इति चेत्, यदि ज्ञानवचनो दृशिस्तदा परोऽपि तथा ॥

नहि नियममिति, तत्र हेतुमाह—गगनेति। ननु गगनास्वादनमसंभवीति न ततस्तृप्तिफलमिति यदि ब्रूयात्तदाप्याह—त्यागेति। अतिनिवृत्त्या निवृत्तेऽपि कारणान्तरप्रयुक्तदुःखस्यावश्यंभावेन न दुःखाभावः फलमुक्तविचारस्येत्याह—नाप्यतिनिवृत्तिरिति। नन्वपनिपातिदुःखं भवतु, न च तावता काचित्क्षतिः, तस्य विचारासहत्वेनानिष्टत्वाभावेनात्याज्यत्वादित्याशङ्कां निराकरोति—न च दुःखमपीति, तथाविधस्य दुःखमहेयतया जानतः। तत्र हेतुमाह—हेयेति, तदर्थम् सुखार्थम्, तद्भयाच्च दुःखभयात्, अस्य तत्त्वोपप्लवसाधकविचारस्य, तस्य यथेष्टाचारस्य। नापि तत्त्वोपप्लवसाधकविचारस्य परलोकमात्रानिवृत्तिः फलं, यत ऐहिकस्येव परलोकस्यापि प्रमाणगम्यत्वेन तत्त्वभूतत्वमितीष्टसाधनताज्ञानेनैहिके यथा प्रवृत्तिस्तथा परलोकेऽपि सा स्यादेव, यथा वा परलोकान्निवृत्तिस्तथैहलोकादपि सा स्यादेवेत्याह—नापि परलोकेति। नन्विहलोकस्तावत् दृश्यत इति न ततो निवृत्तिर्युक्तेत्याशयेनाशङ्कते—दृश्यत इति। परोऽपि परलोकोऽपि। तथा दृश्यते ज्ञानविषय इति यावत्। नन्विहलोकस्य साक्षात्कारविषयत्वादेव प्रवृत्तिविषयत्वं, न तु परलोकस्य, तथात्वाभावादिति चेत्, तर्हीहलोकेऽप्यनुमानादिना प्रवृत्तिर्न स्यादित्याह—

| पंक्तिः | पत्रं | पृष्ठं | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १२ | ,, | ,, | उभयत्रा— | ऊभयसूत्रा— |
| ७ | ७३ | १ | घन्तः | घनन्तः |
| ४ | ७६ | २ | (मिश्रः) | सम्यग्मिथ्यात्वगुणः |
| ४ | ,, | ,, | मुंहूर्त्तावधिकः | मुंहूर्त्तकालिकौ |
| ९ | ७७ | ,, | शशवे | शैशवे |
| २ | ८० | ३ | जघन्यतः उत्कृष्टतश्च | जघन्यतः |
| ९ | ८१ | १ | पगेणं | पगेणं |
| १२ | ८४ | १ | प | य |
| ४ | ८५ | २ | सूक्ष्मकषाया | सूक्ष्मकषायोपशामका |
| ५ | ८७ | २ | प्रथम(क्षपक) | प्रथमे |
| ८ | ९० | २ | -न्तोर्मुहूर्त्त- | -तोऽन्तर्मुहूर्त्त- |
| ४ | ९२ | २ | -नैवानु- | -नैवोप- |
| ५ | ९३ | १ | -पुञ्जी | -पुञ्जौ |
| २ | १०० | १ | ताभ्यो | तेभ्यो |
| २ | १०४ | १ | जीवाः | जीवा विशेषाधिका |

| पंक्तिः | पत्रं | पृष्टं | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १० | १०५ | २ | अनिवृत्तिवा- द्रो [वा], | अनिवृत्तिर्वादरो वा |
| ५ | १०८ | २ | द्वयष्ठा- | द्वावष्ठा- |
| ५ | ,, | ,, | द्वौ चत्वा- | द्वाचत्वा- |
| २ | १०९ | १ | प्रथम- | ततश्चायमर्थः-प्रथम- |
| ६ | ,, | ,, | क्रियासु | क्रियासु, तद्विषयो यः क्षयोपशमस्तद्वीर्यं शक्तिः सामर्थ्यमिति यावत्, |
| ११ | १११ | २ | कर्तुमारभते, तस्य च तैर्मो द्कादिभिःस्तोके रसनोपकृतं दुःखं प्रभवति, | करोति तैश्च मोदकैः स्तोकैर-रसन्तोपकृतं दुःखं प्रभवति, |
| १ | ११७ | २ | तत्थिरनाम | तत्स्थिरनाम |
| ८ | ११८ | २ | स्वशरीरो- | स्वावयवेन स्वशरीरो- |
| ८ | ११९ | १ | (विसेसोसिं) | विसेसोसिं |

एवं ज्ञातुं निर्वक्तुं वा न शक्यते कीदृशं जगदिति वक्तुर्निर्वचनासामर्थ्योद्भावनमपि पामरदशावन्निष्फलमेव । वक्तुर्निर्वचनासामर्थ्यं वाच्यस्यानिर्वाच्यत्वं सिद्ध्येदिति चेत्, भवेदेवं यदि सर्व एव वक्तारस्तथा भवेयुः, न त्वेतदस्ति, कस्यचिदेव परामर्शपाटवाभावेनानिर्वचनोपपत्तेः, नहि जात्यन्धो नीलं ज्ञातुं निर्वक्तुं वाऽशक्त इत्यज्ञेयानिर्वाच्यमेव तल्लोक इति, सत्त्वासत्त्वबाधादनिर्वाच्यतेति चेत्, न, व्याघातेनोभयबाधासम्भवात्, सत्त्वे बाधकस्य वस्तुतो निराकार्यत्वात्, बाधकस्य चाबाध्यत्वे तस्यैव तात्त्विकत्वात्, बाध्यत्वे च तेनेतरबाधायोगात् ॥

एवं ज्ञातुमिति, अज्ञेयाऽनिर्वाच्यमेव तल्लोक इति, चक्षुर्ग्राह्यनीलादिवस्तु अज्ञेयमेवानिर्वाच्यमेवेत्यर्थः । अभ्युपगम्यापि बाधकं प्रकारान्तरेण समाधत्ते बाधकस्य चेति, हेयोपादेययोस्तत्साधनयोश्च विरहे निषिद्धानुष्ठाने भयस्य विहितानुष्ठाने रागस्य चाभावात् स्वानन्द्यमेव परमा निर्वृतिस्तल्लक्षणं च मोक्ष इत्याशयेनाशङ्कते—

अस्तु तर्हि शून्यतैव परमं निर्वाणमिति माध्यमिकः, परमं निर्वाणं परमा निर्वृतिः, हेयोपादेयतत्साधनविरहे निषिद्धभयरागादिविरहात्, तस्येदं वेदान्तिनयेन निराकरणम्, सा हि यद्यसिद्धा, कथं न तदविशेषमपि विश्वमभिधीयेत, वाङ्मात्रस्य सर्वत्र सुलभत्वात्, असिद्धत्वाविशेषाद्विश्वमेव किं न स्यादित्यर्थः, परमतत्त्वेन, सिद्धः परोऽप्यभ्युपगन्ता, तथा च क्व सर्वशून्यतेति ग्राह्यलक्षणमप्यवर्जनीयम्, स च परो यदि संवृतिरेव, विश्वशून्यतयोर्न कश्चिदपि विशेषः, कथं शून्यत्वमप्यवशिष्यते । असंवृत्तिरूपश्चेत्, परत एव सिद्धावनवस्था, स्वयमसिद्धश्चेत्, कथं शून्यमपि साधयेत्,

| पंक्तिः | पत्रं | पृष्ठं | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १० | १८९ | १ | चिञ्चि- | किञ्चि- |
| ४ | १९१ | १ | मगना- | गमना- |
| १२ | १९६ | २ | -त्रिविधिः | त्रिविधः |
| ४ | २०३ | २ | षष्ठी | षष्ठी (एवं सर्वत्र) |
| २ | २०६ | १ | -त्वस्थायां | -त्वावस्थायां |
| १३ | २०९ | १ | परभायु- | परभवायु- |
| १४ | २११ | २ | सत्तान- | सत्ता- |
| १ | २१४ | २ | -पिणो | -विणो |
| ११ | २३७ | १ | -रातरूपाणां | -रातपरूपाणां |
| २ | २३८ | १ | स्थिर- | स्थितिर- |
| ३ | २३८ | १ | संक्ले- | संक्लेश- |

| पंक्तिः | पत्रं | पृष्ठं | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४ | २४० | २ | पक्षकः | क्षपकः |
| १० | २४४ | १ | सप्रतिक्षाणां | सप्रतिपक्षाणां |
| १४ | २४४ | १ | -बन्धकारी | -भागबन्धकारी |
| ७ | २४२ | १ | बन्धगेव | बन्धमेव |
| ११ | २४८ | १ | 'भीदशे- | -मीदशे- |
| १ | २५५ | १ | मेत्रत् | मेतत् |
| ३ | २६७ | १ | स्थिा- | स्थिरा- |
| १३ | २६९ | १ | -भ्युस्थित- | भ्युत्थित |
| ६ | २८१ | १ | वर्त्तनानः | वर्त्तमानः |
| ७ | २९५ | २ | स्वण्डं | खण्डं |
| १४ | ३०५ | २ | -नावलिया- | -नावलिका |

मपरिमाणत्वेत्रोपपद्यते, शून्यतत्त्वे च तन्नास्तीति भावः। तस्य विचारस्य। विशेषाभावः विरुद्धधर्माध्यासाभावाच्च नानारूपम्। शून्यतत्त्वं ब्रह्मरूपत्वात्पारमार्थिकं प्रपञ्चस्त्वपारमार्थिक इति तयोः प्रतियोग्यनुयोगिभावाभावाच्च प्रपञ्चप्रतियोगिकं शून्यत्वम्, अत एव नाभावरूपं किन्तु विधिरूपमित्याह—

प्रपञ्चस्यापारमार्थिकत्वाच्च निष्प्रतियोगिकमिति विधिरूपम्, अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः। ननु अनुभवमात्रस्य प्रपञ्चेन कः सम्बन्धो येन स बाह्योऽपि प्रकाशते, न तावज्ज्ञानान्तरं, द्वैतप्रसङ्गात्, न स्वेनैव, यथार्थानुभवस्य ब्रह्मणो विषयत्वात् प्रपञ्चस्य पारमार्थिकत्वप्रसङ्गादिति चेत्, वस्तुतः प्रपञ्चः प्रकाशत इत्येव नास्तीति कुतस्तत्सम्बन्धगवेषणा। संवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इवानुभवप्रपञ्चयोर्विषयविषयिभावः, स च यथा नैयायिकैः समर्थ्यते तथैव वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेषः।

प्रपञ्चस्येति, शून्यतत्त्वमविवक्षितविषयविशेषं यदनुभवस्य स्वरूपं तन्मात्ररूपमिति तस्य पारमार्थिकस्य घटपटादिना प्रपञ्चेनाविशकल्पत्वेनापारमार्थिकेन सह विषयविषयिभावलक्षणस्तद्व्यतिरिक्तो वा सम्बन्धो नास्तीति कथं सम्बन्धमृते स प्रपञ्चः प्रकाशते, न च स्वयं स प्रकाशते इत्यपि वक्तुं शक्यं, तस्य त्रिकालाननुरूपतया बाध्यकोटिप्रविष्टत्वेनानुभवरूपत्वाभावादित्याशयेनाशङ्कते—ननु अपीति, नथापि प्रपञ्चशून्यस्यानुभवमात्रस्येति पाठान्तरम्। सः प्रपञ्चः, द्वैतप्रसङ्गादिति संबन्धरूपज्ञानान्तरस्य ब्रह्मव्यतिरिक्तस्याभ्युपगमाद् द्वैतं स्यादित्यर्थः। वस्तुतो घटपटाद्यभावेन तद्विषयकस्य ज्ञानस्यैवाभावान्न प्रपञ्चः प्रकाशत इति तत्सम्बन्धगवेषणनिरा करोतीत्याह—वस्तुतः प्रपञ्च इति, कल्पनादृष्ट्या तु प्रपञ्चस्य प्रकाश इव तत्सम्बन्धोऽप्यस्तीति सदृष्टान्तमुपवर्ण-

ऋषिनी माफक आगम समुद्रनुं पान करी लीधुं. 'विद्वान थनारा बुद्धिमानो तपमां अने गच्छ वैयावच्चना बीजा कामोमां काचा होय छे,' ए कहेवतने तेओए खोटी पाडी. जेवा तेओ प्रखर विद्वान थया, तेवा प्रखर तपस्वी थया, जेवा तेओ प्रखर तपस्वी थया तेवा ज तेओ प्रखर सेवाभावि वैयावच्च गुणवाळा पण थया. साधुजीवनने उपयोगी एवुं कोइ काम नहोतुं जे तेओने आवडतुं न होय के करतां शरमाता होय. मुनिराजोमां तेओनुं विशिष्ट स्थान बीनहरीफ बन्युं.

ज्योतिषना विषयमां तेमनो निर्णय जैनसमाज माटे निःशंकपणे स्वीकार्य मनावा लाग्यो. श्री जीनागमो अने बीजा दार्शनीकादि शास्त्रोना गहन अभ्यासथी तेओश्री शास्त्रोना परम रहस्य वेदी बन्या. अने तेओश्रीना वचनोनो पण एकसरखी रीतीए उंडी असर थवा लागी. विधि विधान जेवा सूक्ष्मविषयोमां पण तेओश्री एटला बधा निष्णात हता के तेमनी सलाह मल्या पछीथी शंकाने स्थान रहेतुं नहि.

त्रिस्तुति मतोत्पादक राजेन्द्रसूरि साथेनो छाणीगाममां थयेलो शास्त्रार्थ अने तेमां तेओश्रीनो विजय थवो, धनारीना श्रीपूज धरणेन्द्रसूरि साथे सिरोही स्टेटमां शास्त्रार्थ थवो अने तेमां पण विजय प्राप्त करवो, वडोदराना राजा सयाजीराव गायकवाडनुं तेओश्रीने ज उपदेश आपवा माटे आमंत्रण मलवुं अने राजमहेलमां पधारी राजसत्कारपूर्वक राजाने धर्मपरिचय कराववामां अनन्य सफलता प्राप्त करवी, तेमज संवत १९८८ मां सुरतमां अष्टमवादीने शास्त्रना विरोधो बतावी मौन पकडाववुं, आवा आवा तो अनेक सुवर्ण प्रसंगो तेमना उज्वल इतिहासनी साक्षी पूरे छे.

आ महापुरुषनो गुरु सेवानो गुण कोइ अजब हतो. तेओ आवा महान् छतां गुरु आगळ लघु बाळक समा थईने उभा रहेता. गुरुना अन्त समये तेमणे बजावेली सेवा तो आखी साधु सृष्टिने दृष्टांत लेवा लायक हती. ए गुरुसेवानो रुडो प्रताप हतो के जेणे आ समर्थ पुरुषने उन्नतिना शिखरे आरुढ कर्या हता.

आ निस्पृह सेवाभावी विद्वान तपोजीवी शासनना प्रतापी पुरुषमां शासन रक्षानी तमन्ना ठांसी ठांसीने भरेली होय ए बे दु चार जेवी तद्दन स्वाभावीक बीना हती. संवत १९६८ ना वडोदरा मुनिसंमेलनमां आवेला दीक्षा प्रतिबंधक ठराव सामे विरोध बतावनारा

अपि च किमिदं शून्यत्वं नाम, अभाव इति चेत्, न अविरोधात्, सार्वदिकोऽभाव इति चेत्, तथाप्यविरोध एव, क्वचित् कस्यचित् तदुपगमात्। सार्वत्रिक इति चेत्, तथापि तथैव, एकेन सम्बन्धेन सतोऽपि सम्बन्धान्तरेणासत्त्वोपगमात्,

अपि चेति, अभावः घटपटादेरभावः। अविरोधादिति घटाभावादेर्नैयायिकेनाभ्युपगमादित्यर्थः। ननु न घटादेरभावः सर्वकालावच्छेदेन विद्यते, यश्चाभावः सर्वकालावच्छेदेन विद्यते तद्रूपैव शून्यताऽभ्युपगम्यत इति चेत्, मैवं, घटाद्यभावस्यापि समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रतियोगिकालावच्छेदेनापि पर्वते वृत्तित्वात्सर्वकालावच्छिन्नवृत्तिताकस्य तस्य शून्यतारूपत्वाभ्युपगमे दोषाभावादिति शङ्कोत्तराभ्यामाह—सार्वदिकोऽभाव इति, ननु घटादिः समवायेन कपालादौ वर्तत एवेति न तत्र तदभाव इत्युक्ताभावस्य सर्वदेशावच्छिन्नवृत्तिमद्रूपत्वाभावान्न शून्यतारूपता, यस्यैवाऽभावस्य तद्रूपता तस्यैव तद्रूपत्वाभ्युपगमादित्याशङ्कते सार्वत्रिक इति चेदिति। तथैवेति अविरोध एवेत्यर्थः। तत्र हेतुमाह एकेनेति, समवायेन कपालादौ सतोऽपि घटादेस्संयोगेन तत्राभावोपगमादित्यर्थः।

सर्वेण सम्बन्धेनेति चेत्, कस्याभाव इति वक्तव्यम्, सर्वेषामिति चेत्, सर्वकालदेशसम्बन्धप्रतियोगिनामुपगमेऽपि शून्यतेति महदाश्चर्यम्, तस्मादिदं नीलमिदं पीतमिमे नीलपीते मिथो भिन्ने इत्याद्यनुभवव्यवस्थयाऽज्ञातमपि स्फुरतीत्यवर्जनीयमेतत्। ग्राह्यग्राहकत्वसिद्धौ च तल्लक्षणं ग्राह्यव्यवहारविशेषनिमित्तमर्थज्ञानयोर्विषयविषयिभावरूपमन्यस्यैव किञ्चित्, तच्च ग्राह्यस्य पारमार्थिकत्वे ज्ञानानित्यतायां तन्निष्ठमुभयनिष्ठं वा,

राधनपुरनी घणी विनंती छतां गुरुजी शंखेश्वरथी विहार करीने शींझुवाडे पधार्या, शींझुवाडा पोतानी जन्मभुमी हती, शरीरनी अशक्ति घधी गइ हती, चालतां छातीमां सतत दुखावो पण रहेतो हतो, हवे आगळ विहार नहि करवा माटे संघनी घणी ज दर्द भरी विनंति पण हती. पण निर्मल अने निरागी शासनना ए स्थंभ पुरुषे तो पाटडीमां प्रतिष्ठाना धर्म कार्य निमित्ते विहार कर्यो. बहोळा समुदायना पोते मालीक हता छतां थोडा मुनिराजो पोतानी साथे राखी मुख्य मुख्य महात्माओने अन्यत्र धर्मोन्नति अर्थे विहार करावी दीधा, तेमनी त्याग दशानी ए अति स्पृहणीय उच्च पराकाष्ठा हती.

श्री भरतेश्वर वृत्तिना द्वितीय विभागमां आ महापुरुषना जीवननो उल्लेख करतां शेठ देवचंद लालभाइ जैन पुस्तकोद्धार फंडना मानार्थ मेनेजिंग ट्रस्टी श्रीयुत जीवणचंद साकरचंद झवेरीए लख्युं छे के—

"पूज्यपाद आचार्यवर्य श्री विजयदानसूरीश्वरजी महाराजाए पोतानी आत्म साधनामां मन, वचन, कायाने समर्पि दीधां हतां. अति वृद्ध वये अने अति क्षीण देहे पण ते महापुरुष महान् तपस्वी हता. छातीनो सतत दुखावो होवा छतां य उग्र विहारी हता, शासनना परम आधारभूत हता."

श्री तपगच्छ श्रमण वंश वृक्षना संपादक श्रीयुत जयंतीलाल छोटालाल शाह पण आ पुण्य प्रभावक गुरु वर्य्यनुं जीवन आलेखतां सत्य ज कहे छे के—

"अपूर्व ज्ञान प्रियता, असाधारण विद्वत्ता, अने कठोर व्रत पालन, आ त्रिवेणी संगमना द्रष्टान्तभूत श्रीमद् विजयदानसूरिजी आधुनिक श्रमणताना इतिहासमां अग्रगण्यमांना एक छे."

आ अग्रगण्य विभूतिनुं मरण तो एवुं समाधिवाळुं थयुं के मुमुक्षु मात्रने तेनी इच्छा थाय. जीवनभरना संयम प्रभावे तेओश्रीने कोइ आश्चर्यजनक समाधि मरण प्राप्त थयुं. पाटडीमां प्रतिष्ठा महोत्सव चाले छे, श्रावकोए अमदावादथी वाजींत्र बोलाव्यां छे. बजाणाथी हाथी आव्यो छे. संवत १९९२ना महा सुद २ ने दिवसे प्रभुजीनो जलयात्रानो वरघोडो चढे छे. महाराज श्री वरघोडामां फरीने उपाश्रये आवे छे. श्रावकोए उपाश्रय आगळ भव्य मंडप बांध्यो छे. ए शासनसूर्य उपाश्रयना ओटले बीराजे छे. एमनी सन्मुख

समर्थनं न्यायः, लक्षणस्तावदत्र विषयविषयिभावः, स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषः, स्वभावत्वादेव च नोपकारान्तरमपेक्षते, तन्मात्रीयत्वादेव च नान्यदीय इति ग्राह्यलक्षणसिद्धिः ॥ तदीयता तत्सम्बन्धित्वं, स्वभावः स्वरूपं, तथा च ज्ञानस्वरूपमेव ज्ञानस्यार्थेन सम्बन्धः, सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय, सर्वत्र स्वरूपसम्बन्धे तथैव कल्पनात्, सामान्यतश्च विषयता ज्ञानस्वरूपं, घटादिविषयता तु घटादिनानुगतास्तत्तज्ज्ञानव्यक्तय एव, ताभिरेवानुगतघटविषयत्वव्यवहारात्,

एवमिति, एकज्ञानरूपत्वेन घटविषयत्वपटविषयत्वयोरेकत्वेन घटविषयत्वेन घटज्ञानस्यानुव्यवसायकाले पटविषयत्वेनाऽनुव्यवसायः स्यादित्यर्थः। युक्तेरेवेति इन्द्रियसन्निकर्षादिसहितस्यैव विषयविषयिभावस्य व्यवहारप्रयोजकत्वेनेन्द्रियसन्निकर्षादिविरहे न व्यवहारापत्तिरिति युक्तेरेवेत्यर्थः। घटतज्ज्ञानयोर्घटसम्बन्धितारूपो विषयविषयिभावो घटज्ञानरूपः, पटतज्ज्ञानयोः पटसम्बन्धितारूपस्तु पटज्ञानरूपो नातिरिक्तस्वभावः येन तदाश्रिता दोषास्स्युः, तत्तज्ज्ञानरूपत्वादेव च तत्तज्ज्ञानसामग्र्यऽतिरिक्तमुपकारान्तरं नापेक्षते, येनानवस्था स्यात्, घटज्ञानस्य घटमात्रविषयकत्वादेव च न पटादिविषयकत्वमिति ग्राह्यलक्षणसिद्धिरित्याशयेनाह स च प्रकाशस्येति। अनत्यं तदीयतापदं स्वभावपदं च विवृणोति–तदीयता तत्सम्बन्धित्वमिति, ग्राह्यसम्बन्धित्वमित्यर्थः।

तासामेव संयोगविशेषाणामिव घटादीनां सम्बन्धत्वात्, व्यवहारनिमित्तं च ज्ञाननिष्ठमर्थसम्बन्धित्वं नार्थज्ञानसम्बन्धित्वम्, अतीतानागतयोरिदानीं ज्ञातो घट इति व्यवहारानुरोधात्, दण्डपुरुषसंयोगा ज्ञानघटविषयता इत्यादिवच्च न विशिष्टव्यवहारादिः, ज्ञानविशेषस्यैव तत्र तन्त्रत्वात्, एकत्र संयोगनिष्ठसंसर्गता-

सविकल्पकं तु तत्तत्प्रकारावच्छिन्नं विषयता, समूहालम्बने प्रमारूपे घटत्वाद्यवच्छिन्नं घटादेः, भ्रमे तु समूहालम्बनतद्भिन्नसाधारणे घटत्वाद्यवच्छिन्नं पटादेरित्यदोषः।

व्यवहारादीत्यादीति, अनिरिक्तविषयतावादिनव्यनैयायिकमतमाह—अत्रेति. पटत्वेन घटावगाहकं पट इति ज्ञानं घटत्वेन पटावगाहकं घट इति ज्ञानं च यथा भ्रमस्तथा घटत्वेन घटस्य पटत्वेन पटस्य चावगाहकं घटपटाविति समूहालम्बनप्रमात्मकज्ञानमपि भ्रमस्स्यात्, पटत्वावच्छिन्नज्ञानात्मकघटविषयतायाः पटत्वावच्छिन्नज्ञानात्मकपटविषयताया एकज्ञानात्मकतयाऽभिन्नत्वेन घटविषयताया अपि पटत्वावच्छिन्नत्वेन पटविषयताया अपि च घटत्वावच्छिन्नत्वेनोक्तभ्रमवदुक्त समूहालम्बनज्ञानेऽपि पटत्वाच्छिन्नघटविषयताया घटत्वाच्छिन्नपटविषयताया अपि सत्त्वादित्याह—यदि ज्ञानस्वरूपमेवेति. ननु संसर्गकोटौ रूपादिवैशिष्ट्यनिवेशस्य किं फलमित्यत आह—जानाविति, विशिष्टासत्त्वात् रूपविशिष्टसमवायाभावात्। अनवच्छिन्नमेव विषयतेति, निर्विकल्पकज्ञाने प्रकारमुद्रया विशेष्यमुद्रयान कस्यचिद्भानाऽभावाद्भ्रमत्वप्रमात्वयोरभावेनापत्त्यनुपपत्त्यभावादिति भावः। अयं घट इति ज्ञाने घटविषयत्वं घटत्वप्रकारकज्ञानम्, अयंपट इति ज्ञाने पटविषयत्वं पटत्वप्रकारकज्ञानम्, समूहालम्बने तु प्रमारूपे घटत्वप्रकारकज्ञानं घटविषयत्वं पटविषयत्वं च पटत्वप्रकारकज्ञानमिति घटविषयत्वस्य पटत्वानवच्छिन्नत्वेन न भ्रमत्वम्, भ्रमस्थलेतु घटविषयत्वं पटत्वावच्छिन्नमिति भ्रमत्वमित्याशयेनाह—सविकल्पकं त्विति। ननु विषयतायां तत्तत्प्रकारावच्छिन्नत्वं यदि ज्ञानरूपमेवेति चेत्, तर्हि समूहालम्बनप्रमात्मकज्ञाने भ्रमत्वापत्तिस्तदवस्थेत्यत आह—

तदवच्छिन्नत्वं तत्प्रकारकत्वम्, तदतिरिक्तमेवेति गुणानन्द इति चेत्, तर्हि घटज्ञानं घटो ज्ञात इत्येव

प्रकटीकृततत्त्वगणं, सुरदैत्यनमस्कृतं भुवननाथम्। सुरशैलमिवाचलितं, प्रबलैरुपसर्गपवनौघैः ॥५॥ भवजलधिपतितनतजन-शिवपद-सुखनगरगमनवरफलकम्। अतिशुपिलविपुलकलिकलुष-गहनदवदहनविजितबलम् ॥६॥ इति जिनवरं नत्वा, वक्ष्येऽहं गुरुमतानुसारेण इह पञ्चसंग्रहाख्यस्य, विवरणं प्रकरणस्य शुभम् ॥७॥ (सप्तभिः कुलकम्)

मङ्गलादिचतुष्टयपूर्वकः शिष्टानां शास्त्रारम्भप्रयासः, यतः शिष्टा हीष्टे वस्तुनि प्रवर्त्तमाना इष्टदेवतानमस्कारपूर्वकं प्रवर्त्तन्ते, मङ्गलाभिधायिशब्देन वा, अतोऽयमपि न हि न शिष्टः, अत इष्टदेवतानमस्कारपूर्वकं प्रवृत्तवान्, अत उच्यते नमस्कारः—

**नमिऊण जिणं वीरं सम्मं दुट्ठट्ठकम्मनिट्ठवगं। वोच्छामि पंचसंगहमेय महत्थं जहत्थं च ॥१॥**

(स्वो०)—मङ्गलं चादिमध्यावसानभेदात् त्रिधा भवति, तत्रादिमङ्गलमिदमेव गाथासूत्रम्, यतो भगवतो नमस्कारोऽशेषकर्म्मक्षयकर्तृत्वान्मङ्गलापादक एव, मध्यमङ्गलन्तु 'नाणंतराय'इत्यादि, यतो ज्ञानस्य सर्वशास्त्रेषु प्रधानभावमङ्गलत्वेन प्रसिद्धत्वात्, अवसानमङ्गलं तु 'सुयदेविपसायाओ' इत्यादि, यतो भगवत्याः श्रुतदेवताया नामोत्कीर्त्तनादेव वक्तृविवक्षितसर्वशास्त्रावबोधो भवति, अतो मङ्गलता स्फुटैव। सर्वमेवेदं शास्त्रं मङ्गलमित्येतावदेवास्तु मङ्गलत्रितयाभ्युपगमस्त्वयुक्तः प्रयोजनाभावात्, इति चेत्, न, प्रयोजनाभावस्यासिद्धत्वात्, तथा च-कथं नु नाम विनेया विवक्षितशास्त्रार्थस्याविघ्नेन पारं गच्छेयुरतोऽर्थमादिमङ्गलोपन्यासः, तथा स एव कथं नु नाम तेषां स्थितः स्यादित्यतो मध्यमङ्गलस्य, स एव कथं नु नाम शिष्यप्रशिष्यादिवंशस्याव्यवच्छित्त्योपकारकः स्यात्, इत्यतोऽर्थं चरममङ्गलस्य, इत्यतो हेतोरसिद्धतेति। तदस्य प्रारम्भ एवालोचितकारिप्रवृत्त्यङ्गत्वात् फलादिविभागः प्रदर्श्यते, उक्तं च-'प्रेक्षावतां

भ्रमं सम्भवति गुरुधर्मे प्रतियोगितावच्छेदकत्वस्याऽस्वीकारेणाभावे घटस्य संसर्गविधया भासमाने प्रतियोगित्वे तृतीयार्थस्य कम्बुग्री-वादिमत्त्वावच्छिन्नत्वस्य विशेषणत्वे तस्य तत्राभावेनाऽप्रामाण्यं स्यादपि, तृतीयार्थस्य संसर्गकोटौ भानानङ्गीकारे च घटादावेव तद-न्वयस्य वक्तव्यत्वेन तस्य तत्राऽबाधिततयाऽप्रामाण्यं न स्यात्, न च तदभाववति तत्प्रकारकत्वस्यैवाऽऽप्रामाण्यरूपत्वात्संसर्गविशे-षणस्य प्रकारत्वाऽभावेन कथं संसर्गांशेऽप्रामाण्यमिति वाच्यम्, तदभाववति तद्विशेषणकत्वस्याप्रामाण्यरूपत्वाङ्गीकारेण तत्राऽपि तद्दूषणेरिति भावः। नव्यास्समादधति—तदापीति, ननु घटत्वेन घटज्ञाने घटविषयतायां घटत्वावच्छिन्नत्वं नातिरिक्तं, येन नामा-न्तरेण विषयतास्वीकारस्स्यात्, किन्तुघटत्वज्ञानोभयमेवेति चेत्, तर्हि तद्घटवद्भूतलमित्यत्र भूतले तद्घटवत्तद्घटावच्छिन्नज्ञानरूपो विषयत्वसम्बन्धः, तत्र ज्ञाने तद्घटावच्छिन्नत्वं तद्घटज्ञानोभयरूपम्, एवं च तद्घटस्यातीतत्वेन तद्रूपसम्बन्धाभावात्तद्विशिष्टव्यवहारो न स्यात्, एवमनागतविशेषणकेऽपि बोध्यमित्याह—अथ तदुभयमेवेति। घटज्ञानमेव घटविषयत्वमिति पक्षमाश्रित्य प्राचीना-नुसारी शङ्कते—अथेति, तत्संबद्धतावच्छेदकं ज्ञाननिरूपिता या घटे संबद्धता तदवच्छेदकम्। घटादिभिस्तज्ज्ञानं स्वरूपेण सम्ब-द्धमिति घटादिज्ञानं घटादिविषयत्वमर्जयति तदा तादात्म्यप्रतियोगिताकालिकादिस्वरूपसम्बन्धविशेषरूपत्वात् स्वरूपसम्बन्धेन ज्ञानं स्वरूपेण भाविना सकालेन न सम्बद्धमिति तेनापि विषयत्वव्यवहारं कुर्यादित्युत्तरयति—तथापि यदीति। एवं ज्ञातोऽभावो ज्ञानाभाव इत्युभयप्रतीतौ विशेष्यीभूतेऽभावे स्वरूपेण ज्ञानस्य प्रकारत्वमिति, तयोरविशेषस्स्यात्, यद्यपि ज्ञातोऽभाव इत्यत्र विष-यत्वं सम्बन्धो ज्ञानस्य, ज्ञानाभावइति प्रतीतौ तु प्रतियोगित्वं सम्बन्ध इति सम्बन्धभेदकृतो भेदस्तयोरस्त्येव, तथापि विषयत्वप्रति-योगित्वयोस्सम्बन्धयोर्ज्ञानरूपत्वेनैवाभ्युपगमात् ज्ञानस्य चैकरूपत्वात्तत्रायं विशेष इत्याशयेनाह—

'जिनं' इति, रागद्वेषकषायपरीपहोपसर्गादिभावारिवर्गजेतृत्वाज्जिनोऽतस्तं, स च श्रुतावधिमनःपर्यायसामान्यकेवल्यपि भवति अतो 'वीरं' भावतीर्थकरदेवं, यतोऽभिहितम्–"विदारयति यत्कर्म, तपसा च विराजते। तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥१॥" तं अद्भुतमाहात्म्यं नत्वेति सर्वत्र क्रिया योज्येति, सम्यक्–त्रिकरणयोगेन दुष्टं च तदष्टकर्म च तस्य 'निष्ठापकः' अशेषकर्मविनाशकः अतस्तम्। 'वोच्छामि' वक्ष्यामि भणामि उत्तरक्रियासम्बन्धः, किं ?–पञ्चसंग्रहाख्यं प्रकरणं, एतच्च 'महार्थं' महानर्थो यस्मिंस्तन्महार्थं 'यथार्थं' च यथैव–आगमाविरोधेन व्यवस्थितोऽर्थस्तथैवार्थो नाऽऽलूनविशीर्णो रथ्यापुरुषप्रलपितवदिति, अयं पदार्थः। पदविग्रहस्तु समास[पद]भाक्पदानां कृत एव। ननु चात्र विघ्नोपशमाय नमस्कारे प्रस्तुते पदेनैकेन नमस्कारः कर्त्तुं युज्यते, पदत्रयोपादानं केन युज्यते, निष्फलत्वादिति, अत्रोच्यते–निष्फलत्वादित्यसिद्धम्, विशेषणानां साफल्यात्, तथाहि–नत्वा जिनं इत्येतावत्युच्यमानेऽन्येऽपि श्रुतावधिजिनादयोऽपि भवन्ति, तद्व्युदासाय वीरमिति विशेषणम्, वीरा अप्यनेके लोके प्रसिद्धाः प्रभूताद्भुतकर्मकारिणः, अतस्तन्निषेधार्थं दुष्टाष्टकर्मनिष्ठापकमिति, असाधारणगुणविशेषणविशिष्टत्वादभिप्रेतदेवताविशेषस्य स्तुतिरापादिता अविचला भवति विशेषणविशेष्यभावेन पदत्रयेणेत्यतो विशेषणसाफल्यता स्फुटैव, इत्यलं प्रसङ्गेन, गमनिकामात्रत्वादिति। अपरस्त्वाह–पञ्चसंग्रहादीनां पदानां वैयर्थ्यं, निष्प्रयोजनत्वाद्, एकेनैव पदेनाभिलषितार्थसिद्धेरिति, अत्रोच्यते–न, अभिप्रायापरिज्ञानात्, तथाहि–पञ्चसंग्रहमित्युक्ते न ज्ञायते कीदृगित्यतो महार्थं–महार्थताविशिष्टं जानीहि, पुनर्विशेषणं यथार्थमिति, महार्थत्वमागमविरोधेनापि स्यात् अतो यथार्थं विशेषणमिति, अतः पञ्चसंग्रहादीनि पदान्येवमेव घटन्ते, नान्यथेति, तस्मात्सर्व्वमेतद् घटमानकमिति गाथार्थः ॥१॥

द्रव्याभावम्, अत एव सर्वसम्बन्धेन भूतलादौ द्रव्याभावसत्त्वेऽपि न सम्बन्धसामान्येन तदभावो भूतला-
दाविति सिद्धान्तः॥ सम्बन्धसामान्यावच्छिन्नप्रतियोगितया तत्र तदभावे मानाभावात्,

सम्बन्धान्येन चानुगम इति, व्यवस्थाऽनापत्तेरिति यथा विशेषत एव तत्तद्दण्डत्वेन कारणत्वे कस्यचिद्दण्डस्याकार-
णत्वं तथा तत्तद्विषयताव्यक्त्यात्मकसम्बन्धेन ज्ञानस्य कारणत्वे कस्यचिज्ज्ञानस्याऽकारणत्वं स्यादित्यर्थः। व्यवस्थाऽनापत्तिमेव
प्रकारान्तरेणाह—एवं हि सत्यपीति, यदि च परामर्शस्यानुगतेन सम्बन्धेन कारणत्वं तदोभयसंप्रतिपन्नानुमितिस्थले यादृशेनानुगतेन
सम्बन्धेन कारणत्वं तादृशसम्बन्धस्य प्रकृतेऽपि सत्त्वेन तादृशसम्बन्धेन न कारणत्वमिति वक्तुमशक्यं प्रतिवादिना, यदि च तत्तत्स-
म्बन्धेन कारणत्वं तदा प्रकृतसम्बन्धविशेषेण कारणत्वस्यान्यत्रादृष्टचरत्वेन विवादस्थलेऽपि न तेन सम्बन्धेन कारणत्वमिति नोक्त-
परामर्शात्प्रकृतानुमितिरिति तर्कं शक्यं प्रतिवादिना, तथा चैतावन्मात्रेणापि विजयोऽधिगतः स्यादिति भावः। अनुगतस्य सम्बन्धस्यानु-
गतप्रतीतिनियामकत्वादेव संयोगेन घटत्वेन घटो नास्तीतिप्रतीतावभावस्य भाने तत्प्रतियोगितावच्छेदकसंसर्गतावच्छेदकतया संयो-
गत्वस्यापि भानं निर्वहतीत्याह—अत एवेति, विषयतायास्स्वरूपात्मकतां निरस्यातिरिक्ततामुपसंहरति—

तस्मादतिरिक्तैव विषयता, तद्विशेषास्तु प्रकारत्वादयः। आदिना संसर्गत्वविशेष्यत्वनिर्विकल्पकीयवि-
षयतापरिग्रहः। निर्विकल्पकीयविषयता विशेष्यताविशेष एवेत्यपि केचित्। एतत्सर्वविषयतासाधारणं तु
विषयतात्वं धर्मान्तरं सम्बन्धतावच्छेदकत्वेनोपेयम्। एतेन प्रतियोगित्वाधिकरणत्वादयोऽपि व्याख्याताः।
सप्तपदार्थीप्रवादस्तु वैशेषिकप्रसिद्धिमनुरुध्यैव। प्रवाद इत्यनेन तत्राप्रामाणिकत्वादनादरसूचा दीधितिकृत

ज्ञानादिशत्रून् जयन्नेव सन् यो दुष्टाष्टकर्मनिष्ठापको, नान्यथा, तं नत्वा, किमित्याह–वक्ष्यामि, 'एय'त्ति विभक्तिलोप आर्षत्वात्। एतमंतस्तत्वनिष्पन्नं पंचसंग्रहं, संग्रह्यतेऽनेनेति संग्रहः 'पुंनाम्नीति करणे घप्रत्ययः' पंचानां शतक–सप्ततिका–कपायप्राभृत–सत्कर्म–कर्मप्रकृतिलक्षणानां ग्रंथानां, अथवा पंचानामर्थाधिकाराणां योगोपयोगविपयमार्गणा–बंधक–बंधव्य–बंधहेतु–बंधविधिलक्षणानां संग्रहः पंचसंग्रहः। यद्वा पंचानां ग्रंथानामर्थाधिकाराणां वा संग्रहो यत्र ग्रंथे स पंचसंग्रहस्तं। कथं भूतमित्याह–महार्थं–महान् गंभीरोऽर्थो यस्मिन् तं, यथार्थं च, यथावस्थितः प्रवचनाऽविरोधी अर्थो यस्मिन् तं, यद्वा अर्थस्य प्रवचनोक्तस्यानतिक्रमणेन स्वमनीषिकया यथार्थं। चः समुच्चये। इह पंचसंग्रहोऽभिधेयः। तत्परिज्ञानं श्रोतुरनंतरं प्रयोजनं, कर्तुः परानुग्रहः, परंपरप्रयोजनं तूभयोरपि निःश्रेयसावाप्तिः। संबंधस्तूपायोपेयलक्षणस्तथाहि–वचनरूपापन्नं प्रकरणमुपायस्तत्परिज्ञानं चोपेयमिति ॥१॥

साम्प्रतं प्रकरणस्य यथार्थतां प्रतिपादयन्नाह—

**सयगाइ पंचगंथा जहारिहं जेण एत्थ संखित्ता। दाराणि पंच अहवा तेण जहत्थाभिहाणमिणं ॥२॥**

(स्वो०)—शतकमादिर्येषां पञ्चानां ग्रन्थानां ते शतकादिपञ्चग्रन्थाः 'यथार्हं' यथायोग्यं येन कारणेनात्र 'संक्षिप्ताः' स्थापिताः-न्यस्ताः, द्वाराणि पञ्चाथवा, तेन कारणेन यथार्थाभिधानमिदमिति गाथार्थः ॥२॥

(मलय०)—संप्रति प्रकरणस्य यथार्थाभिधानतामावेदयति–शतकादयः पंच ग्रंथाः पूर्वोक्ता यथार्हं यथायोगं येन कारणेनात्र प्रकरणे संक्षिप्ताः संगृहीताः, अथवा वक्ष्यमाणस्वरूपाणि पंच द्वाराणि यथार्हमत्र संक्षिप्तानि, तेन कारणेन इदमभिधानं पंचसंग्रहलक्षणं यथार्थं सान्वयमिति ॥२॥

॥३॥

तस्य धर्मकत्वं नोपपत्तिः, विषयताया निरूपकत्वसम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वात्, अस्मिन् पक्षे तु विषयता-स्वरूपसम्बन्धः, स च वृत्तिनियामक एवेति भवत्येवोपपादनमिति तत्त्वम्। विषयनिष्ठस्य विषयित्वस्य प्रतियोगितासम्बन्धेन ज्ञाने सत्त्वं स्वीकृत्य तत्र ज्ञाननिष्ठकारणताया अवच्छेदकत्वं न संभवति ज्ञाननिष्ठकारणताया यावच्छेदकता तदवच्छेदकसम्बन्धत्वस्य वृत्ति-नियामकसम्बन्ध एव कल्पनात् प्रतियोगित्वसम्बन्धस्य च वृत्त्यनियामकत्वात्, अतो विषयितायास्स्वरूपेण ज्ञाननिष्ठत्वमेवेत्युत्तर-वर्ति-कारणे साक्षादिति। कार्यकारणभावात् विषयतासम्बन्धेनेच्छां प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वमित्येवं कार्यका-रणभावात्। तत्त्वे कार्यकारणभावावच्छेदकसम्बन्धत्वे। यज्ज्ञानं यत्र व्यवहारमारचयति तज्ज्ञानं तद्विषयकमित्येवास्ति न तु काचि-दतिरिक्ता नाम विषयतेति केषाञ्चिन्मतमपाकरोति—

ननु तद्गोचरव्यवहारजनकत्वमेव तद्विषयत्वमिति, तत्रास्तां व्यवहारस्य तद्गोचरत्वविचारः, किञ्चिदेव ज्ञानं कञ्चिदेव व्यवहारमातनुते नान्यत्रेत्यत्र नियामकं वक्तव्यम्, जनकत्वं च न फलोपधानम्, सर्वत्र तदभा-वात्, नापि योग्यता. अवच्छेदकानिर्वचनात्। इत्थं च स्वभावेति स्वीयभावार्थकं, प्रकाशस्येतीच्छादिनिरासा-र्थमिति वदन्ति। वस्तुत इच्छादयोऽपि सविषयका एव। तेषां जनकज्ञानोपाधिकं सविषयत्वमिति चेत्, जनक-ज्ञानविषयत्वं जनकज्ञानं वा न तद्विषयत्वम्, अतिप्रसङ्गात्।

यद्यपि. व्यवहारे हि तद्गोचरज्ञानौपाधिकमेव तद्गोचरत्वमिति ज्ञाने तद्गोचरत्वसिद्धौ तद्द्वारा व्यवहारे तत्सिद्धिस्तस्मिन् तत्सिद्धौ तत्र तत्सिद्धिरितीदं परस्पराश्रयत्वं दुष्परिहरमेवेत्याशयेनाह- तत्रास्तामिति। विषयताया अतिरिक्तत्वे विषयतासम्बन्धेन

वल्गनादिक्रियासु जीवोऽनेनेति योगः, 'पुंनाम्नीति करणे घप्रत्ययः' । स च सप्रभेदमनोवाक्कायसहकारिभेदात्पंचदशधा वक्ष्यमाणस्वरूपः । उपयोजनमुपयोगो, यद्वा उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते जीवोऽनेनेत्युपयोगः, बोधरूपो जीवस्य स्वतत्वभूतो व्यापारः, स च द्वादशभेदो वक्ष्यमाणः, तेषां मार्गणा योगोपयोगमार्गणा जीवस्थानमार्गणास्थानगुणस्थानेष्विति सामर्थ्याद्गम्यते । च शब्दान्मार्गणास्थानेषु जीवस्थानगुणस्थानमार्गणा च वक्तव्या, इति प्रथमं द्वारं। तथा बध्नन्ति संबध्नन्त्यष्टप्रकारं कर्म स्वप्रदेशैः सहेति बंधकाः, ते च वक्तव्या इति द्वितीयम् । तथा बंद्धव्यं तदेवाष्टप्रकारं कर्म वक्तव्यमिति तृतीयम् । तथा कर्मपरमाणुभिः सहात्मप्रदेशानां वह्न्यःपिंडवदन्योऽन्यानुगमलक्षणः संबंधो बंधः, तस्य हेतवो मिथ्यात्वादयस्ते वक्तव्या इति चतुर्थम् । तथा बंधस्योक्तस्वरूपस्य विधयः प्रकारास्ते च वक्तव्याः, च शब्दः समुच्चये, इदं पंचमं द्वारम् ॥३॥

तत्र प्रथमं योगोपयोगद्वारमधिकृत्य 'यथोद्देशस्तथा निर्देश' इति न्यायमङ्गीकृत्य योगानभिधातुकाम आह—

**सच्चमसच्चं उभयं असच्चमोसं मणोवई अट्ठ। वेउव्वाहारोरालमिस्ससुद्धाणि कम्मयगं ॥४॥**

(स्वो०)—सद्भ्यो हितं सत्यं, संतः प्राणिनोऽभिधीयन्ते, तेभ्यो हितं सत्यम्, तद्विपरीतमसत्यम्, तथा 'उभयम्' इति सत्यासत्यं द्विस्वभावं, पुनश्चतुर्थमसत्याऽमृषमेतच्चतुर्विधं मनोऽभिधीयते। वागपि चतुर्विधा एवमेव वागभिलापेन मन्तव्या, एवमष्टौ भवंति। तथा विविधा क्रिया विक्रिया, विक्रियायां भवं वैक्रियं तच्च शरीरं, तथा कार्यार्थिभिश्चतुर्दशपूर्वधरैराह्रियत इत्याहारकम्, तथा उरालैः पुद्गलैर्निर्वृत्तमौरालिकम्, उदारैर्निर्वृत्तमौदारिकं चेति, तथा मिश्रीभवन्मिश्रं, तथा शुद्धं—केवलमसहायमसंपृक्तमिति, वैक्रियं चाहारकं च औदारिकं च वैक्रियाहारकौदारिकाणि, वैक्रियाहारकौरालिकानि च तानि मिश्रशुद्धानि चेति विग्रहः। योजना त्वेवं—वैक्रियमिश्रमा-

सत्यविपरीतमसत्यं, यथा नास्ति जीवः, एकांतसद्रूपो वेत्यादिकुविकल्पनपरम् । सत्यासत्यं यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमितिकल्पनपरं, अत्र हि कतिपयाशोकवृक्षाणां सद्भावात्सत्यता; अन्येषामपि धवादीनां सद्भावादसत्यता, व्यवहारनयमतापेक्षया चैवमुच्यते, परमार्थतः पुनरिदमसत्यमेव, यथा विकल्पितार्थायोगात् । तथा यन्न सत्यं नापि मृषा तदसत्याऽमृषा, इह विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण विकल्प्यते, यथा अस्ति जीवः सदसद्रूप इत्यादि, तत् किल सत्यं परिभाषितमाराधकत्वात्, यत्पुनर्विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं विकल्प्यते, यथा नास्ति जीवः, एकांतनित्यो वेति, तदसत्यं विराधकत्वात्, यत्पुनर्वस्तुप्रतिष्ठाशामंतरेण स्वरूपमात्रपर्यालोचनपरं, यथा हे देवदत्त घटमानय, गां देहि मह्यमित्यादिचिंतनपरं तत् असत्याऽमृषा, इदं हि स्वरूपमात्रपर्यालोचनपरत्वात् न यथोक्तलक्षणं सत्यं, नापि मृषा; इदमपि व्यवहारनयमतापेक्षया द्रष्टव्यं, अन्यथा विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति, अन्यत्तु सत्ये । एवं यथा मनः सत्यादिभेदाच्चतुर्द्धा, तथा वागपि चतुर्द्धेत्यष्टौ योगाः। 'वेउव्वाहारोरालमिस्ससुद्धाणि' त्ति-इह मिश्रशब्दः प्रत्येकमभिसंबध्यते, तद्यथा-वैक्रियमिश्रं आहारकमिश्रमौदारिकमिश्रं च तथा 'सुद्धाणि' त्ति-त्रीण्यप्यमूनि शुद्धानि मिश्रशब्दरहितानि, तद्यथा-वैक्रियमाहारकमौदारिकं च, तत्रान्यथा व्याख्यायाः कर्तुमशक्यत्वात्प्रथमतः शुद्धानि व्याख्यायन्ते, पश्चान्मिश्राणि, गाथायां पूर्वं मिश्रनिर्देशोभवनक्रमसूचनार्थः, तथाहि-पूर्वं वैक्रियमिश्रं भवति, पश्चाद्वैक्रियमित्यादि । तत्र विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियम् । तथाहि-तदेकं भूत्वाऽनेकं भवति, अनेकं भूत्वा एकं, तथा अणुभूत्वा महद्भवति, महद्भूत्वा अणु, तथा खचरं भूत्वा भूमिचरं भवति, भूमिचरं भूत्वा खचरं, तथा दृश्यं भूत्वाऽदृश्यं भवत्यदृश्यं भूत्वा दृश्यमित्यादि । तच्च द्विधा, औपपातिकं लब्धिप्रत्ययं च । तत्रौपपातिकमुपपातजन्मनिमित्तं तच्च देवनारकाणां,

सिद्धान्तयति—न, एवं सतीति—

अथ यद्विषयकज्ञानस्य यद्विषयकसमानाधिकरणेच्छादिसमयाव्यवहितपूर्वसमये तादृशेच्छादिसमये वा नियमतः सत्त्वं तद्विषयकज्ञानमेव तथा, सुखश्च महाप्रलयाव्यवहितपूर्वक्षण एवेश्वरेच्छाधिकरणसमयाव्यवहितः पूर्वसमयः। एतच्च भावाभावसाधारणं प्रागभावत्वमिति मते, नो चेत्, चरमभावसामग्रीक्षण एव तथा बोध्य इति चेन्न, तर्हि पाकादीच्छाया इष्टसाधनत्वविषयतापि स्यात्, न स्याच्च कृतेः पाकादिविषयत्वं, तदव्यवहितपूर्वक्षणे पाकादिज्ञानान्तरे मानाभावात्, स्याच्चेच्छायाः कृत्युत्पादसमये निर्विषयत्वम्,

अथ यद्विषयकज्ञानस्येत्यादि, एवं नेश्वरेच्छायाः सर्वविषयकत्वं सम्भवति, यतस्सर्वविषयकमीश्वरज्ञानं सर्वविषयकत्वसमानाधिकरणेश्वरेच्छासमयप्रागभावाधिकरणसमयप्रागभावानधिकरणतादृशसमयप्रागभावाधिकरणमहाप्रलयपूर्वक्षणे तादृशेच्छादिसमये वा नियमतो विद्यत इति तज्ज्ञानं तदिच्छाविषयत्वं भवति, न तु दुःखाभावज्ञानं सुखेच्छाविषयत्वं, सुखेच्छापूर्वसमये दुःखाभावज्ञानसत्त्वनियमाभावात्, अस्मदादीच्छाया नेश्वरज्ञानं समानाधिकरणमतो न तदादाय सर्वविषयत्वापत्तिरिति भावः। यद्विषयकसमानाधिकरणेच्छादीति. आदिना कृतिपरिग्रहः, महाप्रलयस्य चरमध्वंसोत्पत्त्याधारसमयरूपस्य प्रागभावः चरमध्वंसप्रागभाव एव पर्यवस्यति. न च चरमध्वंसप्रतियोगिस्वरूपो भाव एव, तथा च भावे प्रागभावत्वं यद्यनुमतं स्यात्तदैतत्स्यादित्याह एतच्चेति, महाप्रलयाव्यवहितपूर्वक्षणे श्वरेच्छाधिकरणसमयाव्यवहितपूर्वसमयत्वरूपत्वेनेत्यर्थः। अन्यथा तु महाप्रलयाव्यवहितपूर्वक्षणोत्पन्नो यो भावस्तदव्यवहितपूर्वक्षणस्यान्त्यसामग्रीक्षण एवेश्वरेच्छाधिकरणसमयाव्यवहितपूर्वसमयपदेन वाच्यः, तादृशभावप्रागभावस्याभाव-

दृष्टिपथमवतरति ? उच्यते–कर्मपुद्गलानामतिसूक्ष्मतया चक्षुरादीन्द्रियागोचरत्वात् । तथा चान्यैरप्युक्तं—"अतराभवदेहोऽपि, सूक्ष्मत्वान्नोपलभ्यते । निष्कामन् वा प्रविशन् वा, नाभावोऽनीक्षणादपि ॥१॥" तदेवं चतुर्धा मनोयोगः, चतुर्धा वाग्योगः, सप्तधा च काययोग इति पंचदश योगाः । ननु तैजसमपि शरीरं विद्यते, यद्भुक्ताहारपरिणमनहेतुः, यद्वशाच्च विशिष्टतपोविशेषसमुत्थलब्धिविशेषस्य पुंसस्तेजोलेश्याविनिर्गमस्तत्किमिह नोक्तमिति ? उच्यते–सदा कार्मणेन सहाव्यभिचारितया तस्य तद्ग्रहणेनैव गृहीतत्वात् ॥४॥

इदानीमुपयोगान् प्रतिपादयन्नाह ग्रन्थकारः—

**अन्नाणतिगं नाणाणि, पंच इइ अट्ठहा उ सागारो । अचक्खुदंसणाइचउहुवओगो अणागारो ॥५॥**

(स्वो०)—'अज्ञानत्रिक'मिति–ज्ञायन्ते जीवादयः पदार्था यैस्तानि ज्ञानानि, न ज्ञानान्यज्ञानानि तेषां त्रिकमिति समासः, तानि च मत्यज्ञानश्रुताज्ञानविभङ्गाख्यानि । तत्र मननं मतिः, मतिरेवाज्ञानं मत्यज्ञानं, श्रूयते इति श्रुतं, श्रुतमेवाज्ञानं श्रुताज्ञानं, विविधो भङ्गः परिच्छेदात्मकः सम्यग्ज्ञानवैसदृश्येन यस्य स विभङ्गः, तथा 'ज्ञानानि पञ्चे'ति, ज्ञायन्ते जीवादयः पदार्था यैस्तानि ज्ञानानि मतिश्रुतावधिमनःपर्यायकेवलाख्यानि, मतिश्रुतयोः पूर्ववत् व्युत्पत्तिः, अवधीयते अधोऽधो विस्तृतं ज्ञायत इति अवधिः अवधिरेव ज्ञानं अवधिज्ञानं, मनसः पर्याया–भेदाः मनःपर्यायास्तेषु ज्ञानं मनःपर्यायज्ञानमिति, केवलमसहायमद्वितीयं ज्ञानं केवलज्ञानमित्येवं 'अष्टधा तु' अष्टधैव 'साकारः' सहाकारेण वर्त्तत इति साकारः–वस्तुस्वरूपावधारणरूपो विशेषज्ञानमितियावत् । तथा अचक्षुर्दर्शनादिश्चतुर्द्धा उपयोगोऽनाकारः, तत्र चक्षुषा दर्शनं चक्षुर्दर्शनं न चक्षुर्दर्शनमचक्षुर्दर्शनं तदादिर्यस्य स तथोक्तः, चतुर्द्धा उपयोगः, चतुर्भेदभिन्नः चक्षुरचक्षुरवधिकेवलदर्शनरूपस्त्वनाकारः–आकारवर्जितः सामान्यावबोधरूपः, भेदप्रतिभेदव्याख्या त्वावश्यके न्यक्षेण प्रतिपा-

गमनं वेदनमिति पर्यायाः । परिअवः पर्यवः, मनसि मनसो वा पर्यवः मनःपर्यवः, सर्वतस्तत्परिच्छेद इत्यर्थः, पाठान्तरं वा पर्यय इति तत्र पर्ययणं पर्ययः 'भावे अल्प्रत्ययः' मनसि मनसो वा पर्ययः मनःपर्ययः, सर्वतस्तत्परिच्छेदः, स चासौ ज्ञानं च मनःपर्यवज्ञानं मनःपर्ययज्ञानं वा । अथवा मनांसि पर्येति, सर्वात्मना तानि परिच्छिनत्तीति मनःपर्यायं 'कर्मणोऽणिति अण् प्रत्ययः' मनःपर्यायं च तद् ज्ञानं च मनःपर्यायज्ञानम् । यद्वा मनसः पर्याया मनःपर्यायाः, पर्याया धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यप्यनर्थान्तरं, तेषु तेषां वा सम्बन्धि ज्ञानं मनःपर्यायज्ञानं । इदं चार्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिसंज्ञिमनोगतद्रव्यालम्बनम् । तथा केवलमेकम् , मत्यादिज्ञाननिरपेक्षत्वात् , "नट्ठंमि छाउमत्थिए नाणे" इति वचनात् । शुद्धं वा केवलम्, तदावरणमलकलङ्कविगमात्। सकलं वा केवलम्, प्रथमत एवाऽशेषतदावरणविगमतः संपूर्णोत्पत्तेः । असाधारणं वा केवलं, अनन्यसदृशत्वात् । अनन्तं वा केवलम्, ज्ञेयानन्तत्वात् । केवलं च तद् ज्ञानं च केवलज्ञानम् । इतिरेवमनुना प्रकारेणाऽष्टधा अष्टप्रकार एव, तुरवधारणे, साकार उपयोगः, आकारः प्रतिवस्तुनियतो ग्रहणपरिणामः, "आगारो उ विसेसो" इति वचनात् । सह आकारेण वर्त्तत इति साकारः । इह पूर्वमज्ञाननिर्देशः, सर्वजीवानां प्रथममज्ञानम्, पश्चाच्च सम्यक्त्वलाभे सति ज्ञानमिति प्रदर्शनार्थः । तथा अचक्षुदर्शनादिकोऽचक्षुश्चक्षुरवधिकेवलदर्शनरूपश्चतुर्द्धा चतुष्प्रकारोऽनाकारः, पूर्वोक्तस्वरूपाकारविवर्जित उपयोगः । तत्र अचक्षुषा चक्षुर्वर्जशेषेन्द्रियमनोभिर्दर्शनं स्वस्वविषये सामान्यग्रहणं अचक्षुर्दर्शनम् । चक्षुषा दर्शनं रूपसामान्यग्रहणं चक्षुर्दर्शनम् । अवधिरेव दर्शनं रूपिसामान्यग्रहणमवधिदर्शनम् । केवलमेव सकलजगद्भाविवस्तुसामान्यपरिच्छेदरूपं दर्शनं केवलदर्शनं । तदेवमुक्ता उपयोगा अपि ।

संप्रत्येतेषामेव योगोपयोगानां जीवस्थानेषु मार्गणा वक्तव्या । तानि च जीवस्थानानि चतुर्दश, तद्यथा—सूक्ष्मबादरभेदभिन्ना एके-

भावाभावसाधारण्येन यदि ज्ञानं कारणानपेक्षं स्यादाकाशादिवन्नित्यं सत्स्यात्, खपुष्पवद्वा नित्यमसत्स्यात्, नतु कादाचित्कं स्यात्, तदुक्तं "नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्। अपेक्षातो हि भावानां कादाचित्कत्वसंभवः,॥१॥"इतीति भावः। आद्ये स्याद्वैतसिद्धिः। अन्त्ये न स्यादेवेति पक्षे, प्रकाशतमसोरन्यतरस्य कौटस्थ्यप्रसङ्ग इत्युक्तिं सङ्क्रमयति—तथाचेति। तदा सांप्रत इति, तथा च नित्यविज्ञानवादिनो वेदान्तिन एव जय इति भावः। नोचेदिति, बाधेत्यस्यानुवृत्तिः, तदेति शेषः। एवमिति पारमार्थिक इत्यर्थः। तथा च नैयायिकस्यैव जय इति भावः। उपसंहरन्नाह—

तदत्र तत्त्वं, न तावदुभयनिष्ठं लक्षणं, सतोऽसतो वा स्थिरस्यापि स्फुरणात्, सहोत्पन्नयोर्ज्ञानज्ञेययोर्विषयत्वविषयित्वे इत्यस्य निरूपयितुमशक्यत्वात्, न च नित्ये ज्ञाने विषयत्वोपगमे सदा व्यवहारापत्त्या पारमार्थिकक्षणिकज्ञाननिष्ठमेव तत्, ज्ञानस्य तु तन्निरूपकतामात्रमित्यपि युक्तम्।

तदत्र तत्त्वमिति, उभयनिष्ठमिति, सहोत्पन्नज्ञानज्ञेयनिष्ठमित्यर्थः, अत एव न पूर्वग्रन्थेन सह विरोधः, तत्र हि असमानकालीनोत्पत्तिकं पारमार्थिकं बाह्यमादायोभयनिष्ठत्वाभिधानात्, लक्षणं ग्राह्यलक्षणम्, निषेधे हेतुमाह सत इति। यत्र स्थिरस्य विषयस्यापि क्षणिकज्ञानोत्पत्तिस्तत्र तदानीमाश्रयस्य विषयस्याभावाद् ग्राह्यलक्षणस्योभयनिष्ठत्वं न सम्भवति, यत्र स्थिरस्य विषयस्य सत्त्वं तत्रापि ज्ञानेन सहोत्पत्त्यभावात् सहोत्पन्नविषयस्याश्रयस्याऽभावादुभयनिष्ठत्वं न सम्भवतीति भावः, क्षणिकस्यापि यत्र स्फुरणं तत्रापि समानकालीनयोरर्थज्ञानयोर्न विषयविषयिभावसम्भवः सहोत्पन्नत्वाऽविशेषेऽर्थो विषयो ज्ञानं विषयीति निरूपयितुमशक्यत्वादित्याह—सहोत्पन्नयोरिति,

शरीरपर्याप्तिः । यया धातुरूपतया परिणमितमाहारमिंद्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः । यया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादाय उच्छ्वासरूपतया परिणमय्यालंब्य च मुञ्चति सा उच्छ्वासपर्याप्तिः । यया तु भाषाप्रायोग्यवर्गणादलिकमादाय भाषात्वेन परिणमय्यालंब्य च मुञ्चति सा भाषापर्याप्तिः । यया पुनर्मनोयोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालंब्य च मुञ्चति सा मनःपर्याप्तिः । एताश्च यथाक्रममेकेंद्रियाणां, संज्ञिवर्जानां द्वीन्द्रियादीनां, संज्ञिनां च चतुःपञ्चषट्संख्या भवन्ति, उत्पत्तिप्रथमसमय एव चैता यथायथं सर्वा अपि युगपन्निष्पादयितुमारभ्यन्ते, क्रमेण च निष्ठामुपयांति । तद्यथा–प्रथममाहारपर्याप्तिः, ततः शरीरपर्याप्तिः, तत इन्द्रियपर्याप्तिरित्यादि । आहारपर्याप्तिश्च प्रथमसमय एव निष्पत्तिमुपपद्यते, शेषास्तु प्रत्येकमन्तर्मुहूर्त्तेन कालेन । अथाहारपर्याप्तिः प्रथमसमय एव निष्पद्यते इति कथमवसीयते ? उच्यते–इह भगवतार्यश्यामेन प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रमिदमपाठि–"आहारपज्जत्तीए अपज्जत्तए णं भन्ते ! किं आहारए अणाहारए ? गोयमा ! नो आहारए अणाहारए" इति । तत आहारपर्याप्त्या अपर्याप्तो विग्रहगतावेवोपपद्यते, नोपपातक्षेत्रमागतोऽपि, उपपातक्षेत्रमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामयिकी आहारपर्याप्तिनिर्वृत्तिः, यदि पुनरुपपातक्षेत्रमागतोऽपि आहारपर्याप्त्या अपर्याप्तः स्यात्, तत एवं सति व्याकरणसूत्रमित्थं पठेत्–"सिय आहारए सिय अणाहारए" यथा शरीरादिपर्याप्तिषु "सिय आहारए सिय अणाहारए" इति । सर्वासामपि च पर्याप्तीनां परिसमाप्तिकालोऽन्तर्मुहूर्त्तप्रमाणः । पर्याप्तयो विद्यंते येषां ते पर्याप्ताः, "अभ्रादिभ्यः" इति मत्वर्थीयोऽप्रत्ययः, ये पुनः स्वयोग्यपर्याप्तिविकलास्ते अपर्याप्ताः, ते च द्विधा, लब्ध्या करणैश्च । तत्र ये अपर्याप्तका एव संतो म्रियंते, न पुनः स्वयोग्यपर्याप्तीः सर्वा अपि समर्थयंते, ते लब्ध्यपर्याप्तकाः । ये पुनः करणानि शरीरेंद्रियादीनि न तावन्निर्वर्त्तयति, अथ चावश्यं निर्वर्त्तयिष्यंति ते करणापर्याप्तकाः ॥५॥

प्रतियोगिनामनीलानामलीकत्वे व्यावृत्तेर्नीलस्य पारमार्थिकत्वं, विधिनिषेधयोरेकतरापारमार्थिकत्वेऽन्यतरपा-
रमार्थिकत्वध्रौव्यस्योद्भूतत्वे न द्वयोरप्यलीकत्वेनाविशेषः । अथ यथा भवतां सत्त्वेनाविशिष्टानामपि नीलपी-
तादीनां मिथोविशेषः, तथास्माकमसत्त्वेनाविशिष्टानामपि स्यादिति चेत्, केन रूपेण, नीलपीतादिनेति चेत्,
तत् किं तात्त्विकम्, अनलीकं तर्हि स्यात्, अतात्त्विकं चेत्, कुतस्तेनापीति।

प्रश्ने अलीकत्वेऽपि विशेषप्रकारानभिलापे, अकिञ्चिद्रूपत्वे विशेषाणामलीकत्वेन न विशेषरूपतेति कुतस्तत्कृतो ज्ञानानां विशेषस्याद्वैतस्यास्त्वनाद्य द्वितीय इति, द्वयोरपि अनीलत्वव्यावृत्त्योरपि, केन रूपेणेति असत्त्वेनाविशिष्टानां तेषां केन रूपेण विशेष इत्यर्थः। तत नीलपीतादिकं, तत्तात्त्विकम् अनीलव्यावृत्त्यपीतव्यावृत्त्यादितो भिन्नम्। अनलीकम्, पारमार्थिकम्, तद्दृष्टान्तेन, यथा न तत् विज्ञानमात्रवाद इति भावः। तेनापीति मिथोविशेष इत्यनुवर्तते। स्वमते विशेषमुपपादयन्नाह—

अस्माकं तु नीलपीतादीनां परमार्थतया नीलपीतत्वादिनैव विशेष इति न दोषावकाशः। वासनाविशेषात् स्फुरन्तीति चेत्, स्फुरन्तु कः कारणे विप्रतिपद्यते, ते तु नीलादयो यदकिञ्चिद्रूपाः, कथं विशेषाः, तदितररूपेणाकिञ्चिद्रूपत्वे तेन रूपेण किञ्चिद्रूपा एवेति भ्रमः। विचारासहत्वमात्रमलीकत्वमिति चेत्, विचारासहत्वं नीलादीनां किञ्चिद्रूपाणां विरुणद्धि नवा, आद्ये अकिञ्चिद्रूपाणां नीलादीनां न विशेषतेति कुतस्तत्कृतो ज्ञानानां विशेषः। द्वितीये तु नीलादीनां किञ्चिद्रूपतासाधनाय प्रवृत्तस्य विचारस्य तदसामर्थ्याद्दुर्विचारत्वप्रसङ्गः, तेन नीलादीनां ज्ञानमात्रस्यान्यतासिद्धेः, प्रविश वाऽनिर्वचनीयत्वख्यातिकुक्षिं, तिष्ठ वा मतिकर्दममपहाय

तृतीये च ॥१॥" इति । आहारकाहारकमिश्रावाहारककर्त्तुः, वैक्रियवैक्रियमिश्रौ च तत्कर्त्तुः, शेषास्त्वौदारिकादयः सुप्रतीताः । तथा शेषेषु पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियेषु, अपर्याप्तेषु च द्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिषु काययोग एवैको भवति ॥६॥

तमेव काययोगं स्पष्टयन्नाह—

**लद्धीए करणेहि य ओरालियमीसगो अपज्जत्ते । पज्जत्ते ओरालो वेउव्विय मीसगो वावि ॥७॥**

(स्वो०)—'लब्ध्या करणेन च औदारिकमिश्रकोऽपर्याप्ते' तत्र लब्ध्या करणेन चापर्याप्तक इति यद्विशेषणद्वयं क्रियते तत्तिर्यङ्मनुष्यानधिकृत्य मन्तव्यम् । नारकदेवास्तु करणापर्याप्तका एव यस्मात्तस्मात्तिर्यङ्मनुष्ययोरौदारिकमिश्रकाययोगो भवति, 'पज्जत्ते ओरालो' तयोरेव पर्याप्तकयोरौदारिककाययोगो भवति, वैक्रियो वा काययोगो बादरपर्याप्तकवायुकायिकस्य भवति, कुत एतदवसीयते यदुत—वायुकायिकस्यैव भवति ?, उत्तरसूत्रात्, उत्तरसूत्रं च 'वेउव्विय वाऊणं, पढमा चउरो समुग्घाया' । मिश्रपूर्वकत्वात् वैक्रियस्य मिश्रो वैक्रियो वा इति वक्तव्ये किमर्थं क्रमोल्लङ्घनमिति चेत् ? उच्यते—संज्ञ्यपर्याप्तकयोर्देवनारकयोरुत्पत्तिकाले वैक्रियमिश्रकाययोगो भवति, तेषां प्रत्यासन्नत्वात् अपर्याप्तकसंज्ञा विशिष्यते, अन्यथा अन्या अपि संज्ञा भवन्तीति गाथार्थः ॥७॥

(मलय०)—तमेव स्पष्टयन्नाह—लब्ध्या करणैश्चापर्याप्ते औदारिकमिश्रः काययोगो भवति । इदं च तिर्यग्मनुष्यानधिकृत्योक्तमवसेयं; तेषामेव हि लब्ध्या करणैश्चेतिविशेषणद्वयसंभवः, न देवनारकाणां ते हि करणापर्याप्ता एव सम्भवन्ति, न लब्ध्यपर्याप्तकाः, ततस्तेषामपर्याप्तावस्थायां वैक्रियमिश्रः काययोगो वेदितव्यः । सप्तानामपि चापर्याप्तानामपान्तरालगतावुत्पत्तिप्रथमसमये च कार्मणकाययोगः । तथा पर्याप्ते औदारिको वैक्रियो वैक्रियमिश्रश्च । तत्रौदारिकस्तिर्यग्मनुष्याणां, वैक्रियो देव नारकाणां, वैक्रियवैक्रियमिश्रौ

शून्यत्वपर्यवसितिश्च भवेत्तृतीये, स्याद्वादमाश्रयति चेद्विजयेत वादी ॥३७॥

एतानीति। आद्ये ह्यसिद्धिसहितावित्यादिश्लोकस्यायं सङ्क्षेपार्थः। आद्ये हि ग्राह्यग्राहकयोरभेदे साध्ये हि, तत्र के दोषा इत्याशङ्कायामाह असिद्धिसहितौ व्यभिचारबाधाविति, ग्राह्यग्राहकयोरभिन्नजातीयत्वसाध्ये को दोष इत्याशङ्कायां तत्राऽप्रयोजकत्वदोषमाह, स्यादप्रयोजकतयेति, द्वितीये चाप्रयोजकतया हतिस्स्यादित्यन्वयः। ग्राह्यांशस्यालीकत्वे साध्येपि दोषमाह–शून्यत्वपर्यवसितिश्च भवेत्तृतीये इति, नन्वेवं तर्हि कस्याश्रयणे सति बौद्धो वादी प्रतिवादिनं नैयायिकं पराजयेतेत्याशङ्कयामाह स्याद्वादमाश्रयति चेत् विजयेत वादीति, वादी बौद्धः, चेत् यदि, स्याद्वादमाश्रयति स्याद्वादकर्मकाश्रयणक्रियानुकूलवर्तमानकालीनकृतिमान्, तदेति शेषः, विजयेत विजयफलवान् स्यात्, कं विजयेतेति कर्माकाङ्क्षायां प्रतिवादिनमितिशेषः, प्रतिवादिवृत्तिपराजयप्रयोज्यविजयफलवान् वादीत्यर्थः।

कथमाश्रयेतेति चेत्, यद्ययं हेतुप्रश्नः, तदा यदि भाग्यं भवेदित्युत्तरम्, अथ प्रयोजनप्रश्नः, तदा तद्यथाश्रुतमेव, तदर्थे च स्याद्वादाश्रयणमुपदिश्यते भवतः, सपक्षविरुद्धतदाश्रयणं ममायुक्तमिति चेत्, तर्हि शून्यतापर्यवसायिनस्तव जयाय वेदान्तिमताश्रयणं नैयायिकेन कथं कृतमिति किन्न विभावयसि। वेदप्रामाण्याभ्युपगन्तृत्वेन वेदान्ती नैयायिकसजातीय एवेति तस्य क्वचित् तन्मताश्रयणं न त्रपाकरमिति चेत्, स्याद्वादसिद्धान्तैकदेशर्जुसूत्रनयप्रामाण्याभ्युपगन्तृत्वेन त्वमपि किं न स्याद्वादिसजातीयो भवसि।

यथाश्रुतमेवेति विजयेत वादीत्यर्थः। तदर्थं प्रतिवादिपराजयार्थम्, समानः पक्षो यस्य स सपक्षः, समानत्वं चात्र बौद्ध-

द्रष्टव्यः। तथा 'पर्याप्तकचतुःपञ्चेन्द्रियासंज्ञिषु सचक्षुषः संज्ञिषु द्वादशापि' इति-अत्र तु पर्याप्तकचतुष्पञ्चेन्द्रियासंज्ञिषु 'सचक्षुषः' पूर्वोक्तास्त्रयः चक्षुर्दर्शनेन सहैव चत्वार उपयोगा भवन्ति, संज्ञिपञ्चेन्द्रियेषु द्वादशोपयोगा भवन्ति, अपिशब्धाद्विद्यमानतया न तूपयोगेन, उपयोगस्त्वेकस्यैक एव भवति, यत उक्तमागमे-"सव्वस्स केवलिस्सवि जुगवं दो नत्थि उवओगा" इति वचनादिति गाथार्थः ॥८॥

(मलय०)—अथ जीवस्थानेषूपयोगानभिदधाति-एकादशसु पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियापर्याप्तचतुरिंद्रियासंज्ञिसंज्ञिषु मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनाख्यास्त्रय उपयोगा भवन्ति। अपर्याप्तकाश्चेह लब्ध्यपर्याप्तका वेदितव्याः, अन्यथा करणापर्याप्तकेषु चतुरिंद्रियादिष्विंद्रियपर्याप्तौ सत्यां चक्षुर्दर्शनमपिप्राप्यते मूलटीकायामाचार्येणाभ्यनुज्ञानात्। संज्ञिनि च करणापर्याप्ते मतिश्रुतावधिज्ञानविभंगज्ञानावधिदर्शनान्यपि। तथा 'पज्जत्तचउपणिंदिसु' त्ति-पर्याप्तेषु चतुरिंद्रियेषु असंज्ञिपञ्चेन्द्रियेषु च सचक्षुषः सचक्षुर्दर्शनाः पूर्वोक्तास्त्रय उपयोगा भवन्ति। संज्ञिषु च पर्याप्तेषु द्वादशापि ॥८॥

तदेवं कृता जीवस्थानकेषु योगोपयोगमार्गणा, सम्प्रति मार्गणास्थानेषु च कर्त्तव्या, तानि च मार्गणास्थानान्यमूनि—

"गइइंदिए य काए, जोए वेए कासायनाणे य। संजमदंसणलेसा भवसम्मे सन्निआहारे ॥१॥" इयं च गाथा स्वयमेवाचार्येणाग्रे वक्ष्यते परमिह व्याख्याता, अत्राप्युपकारिणी भवतीतिकृत्वात्रैव व्याख्यायते-तत्र गम्यते तथाविधकर्मसचिवैर्जीवैः प्राप्यते इति गतिः, नारकत्वादिपर्यायपरिणतिः सा चतुर्धा, तद्यथा—नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्च। तथा 'इंदिय' त्ति-'इदु परमैश्वर्ये' इन्दनादिंद्र आत्मा ज्ञानैश्वर्ययोगात्, तस्येदमिंद्रियम्, तच्च स्पर्शनरसनघ्राणचक्षुःश्रोत्रभेदात्पञ्चधा। इन्द्रियग्रहणेन च तदुपलक्षिता एकेन्द्रियादयो गृह्यन्ते, तेष्वेवाग्रे योगादीनां चिंतयिष्यमाणत्वात्। तथा 'काय' त्ति-चीयते इति कायः, 'चित्युपसमाधानावासदेहे कश्चादेः' इति घञ्

त्वावच्छिन्नप्रतियोगिताकभेदाभावरूपो वाऽभेदः स्यादस्त्येव, प्रातिस्विकेन तु परिणामगुणेन साधनादिपारिणामिकभावेन घटत्वद्रव्यत्वमतिज्ञानत्वज्ञानत्वादिना भेद एव।

धीग्राह्ययोर्नहीति, अयंश्लोकस्सुस्पष्टो व्याख्यातो ग्रन्थकृतेति नेह प्रतन्यते, धीग्राह्ययोः परस्पराविषयकप्रतीत्यविषयत्वरूप इति, उक्ताभेदो घटादेर्ज्ञेयस्य घटादिविषयकज्ञानस्य चार्हन्मते एकस्या एव स्वसंवेदनप्रतीतेर्विषयत्वाज्ज्ञेयः, अन्यथा घटादेर्व्यवसायात्मकप्रतीतिविषयत्वाद् घटादिज्ञानस्य च घटाद्यनुव्यवसायात्मकप्रतीतिविषयत्वात् भिन्नभिन्नप्रतीतिविषयत्वेन स न स्यात्, यद्यपि न्यायमते घटज्ञानस्य घटाविषयकप्रतीत्यविषयत्वमस्ति घटज्ञानज्ञानस्य घटविषयकत्वनियमात्, तथापि घटस्य घटज्ञानाविषयकव्यवसायात्मकप्रतीतिविषयत्वेन घटज्ञानाविषयकप्रतीत्यविषयत्वं नास्तीति, न चात्र परस्परपदप्रवेशादननुगमः, वस्तुविशिष्टत्वस्यैव तत्त्वेन विवक्षितत्वात्, वैशिष्ट्यञ्च स्वाऽविषयकप्रतीत्यविषयत्वस्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वञ्च स्वाविषयकप्रतीत्यविषयत्वसम्बन्धेनेति, ननूक्तरूपोऽभेदशब्दार्थं उपचारवृत्त्यैव, न तु मुख्यवृत्त्येत्याशङ्कायां मुख्यवृत्त्या तदर्थतामाह—नियतसहोपलम्भेति, नियतसहोपलम्भविषयत्वञ्च नियमेनैकवित्तिवेद्यत्वम् तदविषयकज्ञानाविषयत्वं वा बोध्यम्, ननु मूलस्थेन न हि भिदाऽस्ति सहोपलम्भादिति पदेन कथमुक्ताभेदो लभ्यते येन प्रथमभङ्गो लब्धस्स्यादिति चेत्, उच्यते, मूलस्थसहोपलम्भपदस्य लक्षणया सहोपलम्भविषयत्वमर्थः, पञ्चम्याश्च प्रतियोगित्वं, तत्र च प्रकृत्यर्थस्य स्वनिष्ठावच्छेदकतानिरूपितत्वसम्बन्धेनान्वयः, तस्य च व्युत्पत्तिवैचित्र्येण निरूपकत्वसम्बन्धेन भिदाशब्दार्थे भेदेऽन्वयः, भेदस्य च नञ्पदप्रतिपाद्येऽभावे स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनान्वय इति। द्वितीयभङ्गानयनाय द्वितीयचरणं व्याख्यानयन्नाह प्रातिस्विकेनेति, स्वस्वमात्रवर्त्तिनेत्यर्थः। साधनादिपारिणामिकभा-

छेयाइविसेसियं पुण विभिन्नं । अविसेसियमाइमयं ठियमिह सामन्नसन्नाए ॥१॥ सावज्जजोगविरइत्ति तत्थ सामाइयं दुहा तं च । इतरमावकहंति य पढमं पढमंतिमजिणाणं॥२॥ तित्थेसु अणारोवियवयस्स सेहस्स थेवकालीयं। सेसाणमावकहियं तित्थेसु विदेहयाणं च ॥३॥" । ननु चेत्वरिमपि सामायिकं 'करोमि भदन्त ! सामायिकं यावज्जीवं' इत्येवं यावदायुरागृहीतं, तत उत्थापनाकाले तत्परित्यजतः कथं न प्रतिज्ञालोपः ? उच्यते–नूनं प्रागेवोक्तं यत्सर्वमेवेदं चारित्रमविशेषतः सामायिकं, सर्वत्रापि सर्वसावद्ययोगविरतिसद्भावात् । केवलं छेदादिविशुद्धिविशेषैर्विशिष्यमाणमर्थतः शब्दांतरतश्च नानात्वं भजते । ततो यथा यावत्कथिकं सामायिकं छेदोपस्थापनं वा परमविशुद्धिविशेषरूपसूक्ष्मसंपरायादिचारित्रावाप्तौ न भङ्गमास्कन्दति, तथेत्वरमपि सामायिकं विशुद्धिविशेषरूपच्छेदोपस्थापनावाप्तौ नैवं भङ्गं प्राप्नोति । यदि हि प्रव्रज्या परित्यज्यते तर्हि तद्भङ्ग आपद्यते, न तस्यैव विशुद्धिविशेषावाप्तौ । उक्तं च–"उज्झिक्खमओ भङ्गो जो पुण तं चिय करेइ सुद्धयरं । सन्नामेत्तविसिट्ठं सुहुमंपिव तस्स को भङ्गो ॥१॥" तथा छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिंश्चारित्रे तत् छेदोपस्थापनम् । तच्च द्विधा, सातिचारं निरतिचारं च तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षकस्यारोप्यते, तीर्थान्तरसंक्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्द्धमानस्वामितीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्तौ । सातिचारं यन्मूलगुणघातिनः पुनर्व्रतोच्चारणम् । उक्तं च–"सेहस्स निरइयारं तित्थंतरसंकमे व तं होज्जा । मूलगुणघाइणो साइयारमुभयं च ठियकप्पे ॥१॥" उभयं चेति सातिचारं निरतिचारं च, स्थितकल्पे इति प्रथमपश्चिमतीर्थकरतीर्थकाले । तथा परिहरणं परिहारस्तपोविशेषस्तेन विशुद्धिर्यस्मिन् चारित्रे तत्परिहारविशुद्धिकम् । तच्च द्विधा, निर्विशमानकं निर्विष्टकायिकं च । तत्र निर्विशमानकाः विवक्षितचारित्रासेवकाः, निर्विष्टकायिका आसेवितविवक्षितचारित्रकायाः, तदव्यतिरेकाच्चारित्रमप्येवमुच्यते । इह नवको गणः–चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः, एकः कल्प-

वतो विरोधो न स्यात्, सर्वमतव्यापकत्वात्त्वद्दर्शनस्य । अथ तथागतमतेऽपि हीति कुतः "धर्मे धर्मेऽन्य एवार्थो धर्मिणोऽनन्तधर्मण" इत्यादिनाऽऽर्हतमत एव प्रतिधर्मं शेषान्तभङ्गैः सहाङ्गाङ्गिभावेन सप्तभङ्गीप्रसिद्धेरिति चेत्, न, यत्र मूलभङ्गार्थो यन्नयविचाराधीनसिद्धिकस्तत्सप्तभङ्ग्यां तदीयत्वव्यवहारात्, "ऋजुसूत्राद्विशेषोऽस्य भावमात्राभिमानतः । सप्तभङ्ग्यर्पणाल्लिङ्गभेदादेवार्थभेदतः ॥" इत्युक्तक्रमेण शब्दनयस्यापि सप्तभङ्ग्यभ्युपगन्तृत्वाद्वा, वैभाषिकादिक्रमेण चतुर्विधस्यापि ताथागतमतस्यर्जुसूत्रादिनयचतुष्टयप्रकृतिकत्वस्य संमत्यादिसिद्धत्वात्, एकेन केनचित् अन्यतरभङ्गेन न्यूनतामात्रेणैव स्वसमयाद्विशेषस्य तस्य प्रकृतधर्मांशे महाभाष्यादौ प्रतिपादितत्वात् ॥ ३८ ॥

एवमिति, इत्थमित्यस्य विवरणम्, विरोधाभावे हेतुमाह—सर्वमतव्यापकत्वात्त्वद्दर्शनस्येति, अत्र भगवद्दर्शनं सर्वमतव्यापकं स्वेतरमतविषयताव्यापकविषयताकत्वादित्यनुमानं पर्यवस्यति, तत्र हेतौ यत्र स्वेतरमतविषयतावत्त्वं तत्र स्वविषयतावत्त्वमित्याकारा व्याप्तिः । ननु बौद्धमते यो घटस्सन् स नासन्, सत्त्वाऽसत्त्वयोस्तन्मते आपेक्षिकभावाभावात्, तदभावे च तदुत्थिताकाङ्क्षान्तराभावात्, विवक्षितघटादिधर्मिनिष्ठविशेष्यतानिरूपितविवक्षितस्वद्रव्यादिनिमित्तावच्छिन्नविवक्षितसत्त्वादिधर्मनिष्ठप्रकारतानिरूपकप्रतिपत्तिजनकाद्यभङ्गस्य तत्सापेक्षैर्विवक्षितपरद्रव्यादिनिमित्तावच्छिन्नविवक्षितासत्त्वादिधर्मान्तरनिष्ठप्रकारताकघटादिधर्मिनिष्ठविशेष्यताकप्रतिपत्तिजनकभङ्गैस्सहाङ्गाङ्गिभावाभावेन तन्निबन्धनैकवाक्यत्वसमालिङ्गितायाः सप्तभङ्ग्या अप्यभाव एवेति तन्मते तत्सङ्गिरणं न युक्तियुक्तमित्याशङ्कते—अथेति, इत्यादिनेति आदिपदात् "अङ्गित्वेऽन्यतमान्तस्य शेषान्तानां तदङ्गता ॥" इत्युत्तरार्द्धस्योप-

सर्वस्मिन् जीवलोके ख्यातं प्रसिद्धं अकषायं भवति चारित्रमिति, तथैव यत् तत् यथाख्यातम्। तच्च द्विधा, छाद्मस्थिकं कैवलिकं च। छाद्मस्थिकमपि द्विधा, क्षायिकमौपशमिकं च। तत्र क्षायिकं क्षीणमोहगुणस्थानके, औपशमिकमुपशांतमोहगुणस्थानके। कैवलिकमपि द्विधा, सयोगिकेवलिभवमयोगिकेवलिभवं च। तथा चोक्तं—"तं दुविकप्पं छउमत्थकेवलिविहाणओ पुणेक्केक्कं। खयसमजसजोगाजोगकेवलिविहाणओ दुविहं ॥१॥" तथा 'दंसण'त्ति—दृष्टिर्दर्शनं, सामान्यविशेषात्मके वस्तुनि सामान्यावबोधः। तच्चतुर्धा, तद्यथा—चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनं केवलदर्शनं च। एतानि च सर्वाण्यपि प्रागेव भावितानि। तथा 'लेस'त्ति—लिश्यते श्लिष्यते आत्मा कर्मणा सहानयेति लेश्या, कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभरूपः परिणामविशेषः। उक्तं च—"कृष्णादिद्रव्यसाचिव्यात्परिणामोऽयमात्मनः। स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्त्तते ॥१॥" सा च षोढा कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या च। कृष्णादीनि च द्रव्याणि योगांतर्गतान्यवसेयानि, योगान्वयव्यतिरेकदर्शनात्। तथाहि—यावद्योगस्तावल्लेश्या भवति, योगाभावे चायोग्यवस्थायां नेति। तथा 'भव'त्ति—भव्यस्तथारूपानादिपारिणामिकभावात्सिद्धिगमनयोग्यः। भव्यग्रहणेन च तत्प्रतिपक्षभूतोऽभव्योऽपि गृह्यते। तथा 'सम्म'त्ति—सम्यक्त्वं, सम्यक्शब्दः प्रशंसार्थोऽविरुद्धार्थो वा, सम्यक्जीवः तद्भावः सम्यक्त्वं, प्रशस्तो मोक्षाविरोधी वा जीवस्य परिणामविशेषः। ननु स किं सहेतुक उताहेतुकः? । हेतोर्विचार्यमाणस्याघटमानत्वात्। तथाहि—कोऽस्य हेतुः ? किं भगवदर्हद्बिंबपूजादर्शनादिकमुत प्रवचनार्थश्रवणमाहोस्विदन्यत्किञ्चित्? । तत्र न तावद्भगवदर्हद्बिंबपूजादर्शनादिकं, तद्भावेऽपि सम्यक्त्वोत्पादाभावात्। तथाहि—सत्यपि भगवदर्हद्बिंबपूजादर्शनादिके नाभव्यानां सम्यक्त्वोत्पादः, ततो न तत्सम्यक्त्वनिमित्तं। न हि यस्मिन् सत्यपि यन्न भवति तत्तस्य हेतुरिति सचेतसा वक्तुं शक्यमतिप्रसंगात्। स्यादेतद्बीजमूषरदेशे

विज्ञानमात्रस्याप्यभाव इत्येवम्भूतो व्यवस्थितः एवम्भूतो माध्यमिक इति व्यवस्थितमेतत्, इतिवृत्तिरनुसन्धेया, यद्यप्यत्र योगाचारस्य समभिरूढनयाश्रितत्वमेवोक्तम्, तथापि शब्दनयस्य साम्प्रतस्य सप्तभङ्ग्यभ्युपगन्तृत्वे समभिरूढस्यापि तत्त्वमवसेयमिति नासङ्गतिः ॥ ३८ ॥ ननु स्याद्वादाश्रयणबलं बौद्धस्य नैयायिकपराजयार्थमिव नैयायिकस्यापि बौद्धपराजयार्थं साधारणमिति केन कस्य जयः पराजयश्च स्यादित्याशङ्कां, निरस्यन्नेकोनचत्वारिंशत्तमश्लोकमवतारयति—

स्याद्वादस्य सर्वमतोपजीव्यत्वम्।

ननु स्याद्वादाश्रयणबलं परस्यापि साधारणमिति चेत्, न, विनीतापेक्षयाऽसाधारण्यव्यवस्थितेः, सर्वसाधारणमपि स्याद्वादमवलम्ब्य सर्वेणापि नयेनाभिनिविष्टनयान्तरखण्डनस्य शास्त्रार्थत्वात्, सर्वथा स्वविषयास्पर्शिनयालम्बनच्छलेन तु तन्न तथेत्यभिधित्सुराह—

स्याद्वाद एव तव सर्वमतोपजीव्यो, नान्योऽन्यशत्रुषु नयेषु नयान्तरस्य ॥
निष्ठा बलं कृतधिया क्वचनापि न स्व-व्याघातकं छलमुदीरयितुं च युक्तम् ॥३९॥

हे भगवन् सर्वमतोपजीव्यस्तव स्याद्वाद एव, स्वेतरमतविषयताव्यापकविषयताकत्वात्, अन्योऽन्यशत्रुषु अन्योऽन्यविप्रतिषिद्धार्थेषु, नयान्तरस्य निष्ठा तत्त्वादेव न बलं, स्वदूष्यदूषकस्यापि तस्य स्वदूषकत्वात्, तदाह—न च क्वचनापि कृतधिया स्वव्याघातकं छलमुदीरयितुं युक्तम्। एवं च न ग्राह्यभेदमवधूयेत्यादिना छलविधया वेदान्तिनयमवलम्ब्य यदुदयनेन शून्यताखण्डनं कृतं तत् स्वस्यानैयायिकतां व्यञ्जयतीत्युक्तं भवति॥३९॥

नन्वित्यादिना, विनीतापेक्षयेति, अर्हदुक्तसत्तत्त्वश्रवणमननादिप्रयुक्तमिथ्याभिनिवेशादिसमुन्मूलनसञ्जातसम्यग्श्रद्धा-

सहेतुकपक्षस्त्वभ्युपगम्यत एव, यत्पुनस्तत्राप्युक्तं कोऽस्य हेतुः ? किं भगवदर्हद्बिंबपूजादर्शनादि ? किमुत प्रवचनार्थश्रवणमित्यादि ? तदप्ययुक्तमभिप्रायापरिज्ञानात्। न खलु पारमेश्वरवचनोपनिषद्वेदिनो भगवदर्हत्पूजादर्शनादिकमात्रमेव केवलं सम्यक्त्वस्य निमित्तमाचक्षते, किं तु पारमार्थिकं कारणं तथाभव्यत्वमनादिपारिणामिकं जीवस्य स्वभावविशेषभूतं. शेषं तु भगवदर्हद्बिंबपूजादर्शनादिकं सहकारिकारणमात्रं, ततो न कश्चिद्दोषः, तथाहि–तस्य तस्य जन्तोरयमेवानादिपारिणामिकस्तथाभव्यत्वलक्षणः स्वभावविशेषो, येन तत्र तत्र विवक्षिते क्षेत्रे तदा तदा विवक्षिते काले तत्तत्प्रतिनियतं भगवदर्हद्बिंबपूजादर्शनादिकं प्रतीत्य सम्यक्त्वलाभो भवति, कस्यचित्पुनस्तथाविधनिमित्तमंतरेणापि। तथाभव्यत्वं हि नाम साध्यव्याधिकल्पं, यथा किल साध्यो व्याधिः कश्चित्स्वयमेवोपशांतिमेति, कश्चित्पुनर्यावन्न वैद्योपदेशेन प्रतिक्रिया वितन्यते, तावन्नैवोपशाम्यति, प्रभूतेन वा कालेन निवर्त्तते, तथेदमपि तथाभव्यत्वं किंचित्स्वयमेव विपाकमायाति, येन च बाह्यमर्हद्बिंबपूजादर्शनादिकं निमित्तमनपेक्ष्यापि जन्तोः सम्यग्दर्शनावाप्तिरुपजायते, किंचित्पुनरर्हद्बिंबपूजादर्शनं विशिष्टतपोलक्ष्मी(तपोऽर्पितलब्धि)समन्वितसाधुदर्शनं भगवद्वचनश्रवणं वा निमित्तमपेक्ष्य विपाकमायाति, अथवा प्रभूतेन कालेन निर्निमित्तमेव विपच्यते। अत एवोक्तं हरिभद्रसूरिणा धर्मसारप्रकरणे "साध्यव्याधिसममेव तदिति" ततस्तथारूपमर्हद्बिंबपूजादर्शनादिकं तथाभव्यत्वस्य विपाकाधानहेतुरुपजायमानं सम्यक्त्वस्यापि हेतुरुच्यते। यदप्युक्तं तद्भावेऽपि सम्यक्त्वोत्पादादर्शनान्न तस्य तद्धेतुतेति, तदप्ययुक्तम्। विवक्षितस्यैवार्हद्बिंबपूजादर्शनादेस्तद्धेतुत्वोपगमात्, तथाभव्यत्वस्य तथास्वभावत्वात्। तथाहि-इत्थंभूत एव तस्य तथाभव्यत्वस्यानादिपारिणामिकः स्वभावः, येन विवक्षितक्षेत्रकालसद्भावे विवक्षितं भगवदर्हद्बिंबपूजादिकमपेक्ष्य विपाकमायाति, नान्यथा, ततो न कश्चिद्दोष इत्यलं प्रसंगेन। तच्च सम्यक्त्वं त्रिधा, क्षायिकं क्षायोपशमिकमौपशमिकं च। तत्र त्रिविधस्यापि दर्शनमो-

मार्गणास्वरूपं सम्यक्त्वहेतोः चर्चा

नयस्य ताटस्थ्यमेव लक्षणम्

ताटस्थ्यमेव हि नयस्य निजं स्वरूपं, स्वार्थेष्वयोगविरहप्रतिपत्तिमात्रात् ॥४०॥

कः कं समाश्रयत्वित्यादिश्लोकस्य भूयोऽन्यतर्कात् प्रामाण्यसंशयदशामनुभूय अत्र स्थित इति शेषः, एवम्भूतः को नयः कम् आवृत्त्या अन्यतर्कात्प्रामाण्यसंशयदशामनुभूय स्थितं नयं कुत्र दूषणीये नये समाश्रयतु, अन्यनयतर्कप्रयोज्यप्रामाण्यसंशयकत्वात् अन्यनयविषयनिषेधेऽसमर्थो यदि नयस्तर्ह्यकिञ्चित्करत्वात् निस्स्वरूपस्स्यादित्यारेकायामाह–ताटस्थ्यमेवेति, हि यस्मात्, नयस्य ताटस्थ्यमेवौदासीन्यमेवेतरनयविषयाऽप्रतिक्षेपित्वमेव निजं स्वरूपं, तत्र हेतुमाह–स्वार्थेष्वित्यादि, इतरनयविषयगतासत्त्वविषयकप्रतिपत्त्यजनकत्वे सति स्वविषयो नासन्निति प्रतिपत्तिजनकत्वादिति सङ्क्षेपार्थः ।

को नयः कुत्र दूषणीये नये कं बलवन्तं नयं समाश्रयतु, कीदृशो भूयो वारं वारम्, अन्यतर्कान्नयान्तरविचारात् प्रामाण्यसंशयदशामनुभूय स्थितः, स्थितपदाध्याहारश्च समानकर्तृके क्त्वो विधानात् मत्प्रसूतिमनाराध्येत्यत्रेव द्रष्टव्यः । एवम् अन्यतर्कात्प्रामाण्यसंशयदशामनुभूय स्थितमित्यप्यावृत्त्या व्याख्येयम्, तथा च समाश्रयणकर्तृकर्मणोर्द्वयोरपि नययोर्नयान्तरविचारोपनीतप्रामाण्यसंशयग्रस्ततयाऽन्यनयार्थनिषेधेऽसमर्थत्वमिति भावः ।

कः कमित्यादिमूलश्लोकस्य विस्तरार्थं ग्रन्थकार एवाह–को नय इत्यादिना, स्थितपदमध्याहृत्य व्याख्यायां वीजमाह स्थितपदाध्याहारश्चेति, समानकर्तृकयोर्द्वयोः क्रिययोः पूर्वकालिकक्रियाया बोधकाद्धातोः "समानकर्तृकयोः पूर्वकाले" ।३।४।२१। इति पाणिनीयसूत्रेण क्त्वाप्रत्ययो विधीयते, तस्य च स्थाने "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ।७।१।३७। इति पाणिनीयसूत्रेण

गाथान्ते एवशब्दाधिकत्वात् संज्ञ्याहारकविपक्षद्वारयोश्चतुर्विधमपि मनो न भवति । तथेन्द्रियद्वारमधिकृत्य एकेन्द्रियेषु कायमधिकृत्य स्थावरकाये तथाऽऽहारकविपक्षे च चतुर्विधापि भाषा न भवति । इन्द्रियद्वारे विकलेन्द्रियेषु संज्ञिद्वारविपक्षे चासत्यामृषैव भाषा भवति । तथा ज्ञानदर्शनद्वारद्वयमधिकृत्य केवलज्ञानदर्शनयोः सत्यान्त्यभाषे भवतः, शेषद्वारेषु निषिद्धद्वारावशेषेषु च चतुर्विधमपि मनो वाक् च भवति, गतिद्वारे चतुर्विधायामपि गतौ, इन्द्रियद्वारे पञ्चेन्द्रियेषु, कायद्वारे त्रसेषु, योगद्वारं तथैव मृग्यते, वेदद्वारे स्त्रीपुंनपुंसकेषु, कषायद्वारे क्रोधमानमायालोभेषु, लेश्याद्वारे कृष्णनीलकापोततैजसीपद्मशुक्लासु, संयमद्वारे सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धि-सूक्ष्मसम्परायथाख्यातेषु, दर्शनद्वारे चक्षुरचक्षुरवधिषु, ज्ञानद्वारे मतिश्रुतावधिषु सविपक्षेषु मनःपर्याये च, भव्यद्वारे भव्याभव्येषु, संज्ञिद्वारे संज्ञिषु, सम्यक्त्वद्वारे सम्यग्मिश्रमिथ्यादृष्टिषु, आहारकद्वारे आहारकेषु चतुर्विधमपि मनो वाक् च भवति, सुगमत्वाद् भावना न क्रियते । जीवस्थानगुणस्थानकयोः प्रपञ्चेनाभिहितत्वात् (अभिधास्यमानत्वाच्च) । अपान्तरालगतौ वर्त्तमानस्य कार्म्मणशरीरं भवति, इत्युक्ते कश्चिदाह—कस्मिन् द्वारे अस्याऽवतार इति चेद्, उच्यते—नैतत्साक्षाद् द्वारं, न च द्वारावयवः, किन्तु ग्रन्थकारेण लाघवार्थं गतीन्द्रियकायवेदाः संज्ञी च सविपक्षोऽपान्तरालगतौ स्वनामव्यपदेशं लभन्ते इति काक्वा साभिहितः, कथमेतदवसीयते यथा तस्यां स्वनामव्यपदेशं लभन्ते?, उच्यते, स्वायुरुदयात्, तथाऽऽगमे कायस्थितावुक्तम्—"एगिंदियाणणंता दोण्णि सहस्सा तसाण कायठिती । अयराण इग पणिंदिसु नरतिरियाणं सगट्ठ भवा ॥१॥ पुरिसत्तं सण्णित्तं सयपुहुत्तं तु होइ अयराणं । थी पलियसयपुहुत्त नपुंसगत्तं अणतद्धा ॥२॥" यद्यन्तरालगतौ तद्व्यपदेशं न लभेरन् तदानीमेतावन्मात्रा कायस्थितिर्न घटते, तदभावे महान् दोषः सम्पनीपद्यते, अनिन्द्रियादिव्यपदेशात्, तस्मादित्थमेष्टव्यमित्यतः पञ्चस्वपि द्वारेषु सप्रभेदेषु कार्मणं शरीरं भवतीति अन्तरगतिकैवलिकेष्विति,

समस्तविषयतया माभूत स्वपक्षसिद्धिः, स्वपक्षं त्यक्त्वैव वेदान्तावलम्बनेन नैयायिको माध्यमिकं विजयतामित्यत्राह—

नन्विति, एवम्, नयस्यान्यनयार्थनिषेधेऽसमर्थत्वे, अन्यव्यावृत्त्यप्रत्यायकत्वात् नयान्तरार्थनिषेधप्रतीत्यजनकत्वात्। अयोगव्यवच्छेदस्य अयोगोऽसत्त्वं तस्य व्यवच्छेदः निषेधः तस्य। प्रतिपत्तिमात्रादिति मात्रपदेन नयान्तरविषयासत्त्वप्रतीतिनिषेधः कृतः, तथाच नयस्य स्वविषयसत्त्वव्यवस्थापकत्वेपि परनयविषयाऽसत्त्वव्यवस्थापकत्वाभावान्नौदासीन्यक्षतिरितिभावः। णियवयणिज्जेति, "णिययवयणिज्जसच्चा, सव्वनया परवियालणे मोहा। ते उण ण दिट्ठसमओ, विभयइ सच्चे व अलिए वा।१।" इति पूर्णेयं गाथा। अस्या गाथायाश्श्रीमदभयदेवसूरिभिरेवमर्थः कृतः। निजकवचनीये स्वांशे परिच्छेद्ये सत्यास्सम्यग्ज्ञानरूपास्सर्वं एव नयास्सङ्ग्रहादयः, परविचालने परविषयोन्मूलने, मोहाः मुह्यन्तीति मोहाः, मिथ्याप्रत्ययाः, परविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्यत्वात्, तदभावे स्वविषयस्याप्यव्यवस्थितेः, ततश्च परविषयस्याभावे स्वविषयस्याप्यसत्त्वात् तत्प्रत्ययस्य मिथ्यात्वमेव, तद्व्यतिरिक्तग्राहकप्रमाणस्य चाभावात्, तस्मात्तानेव नयान्, पुनश्शब्दस्यावधारणार्थत्वात्, नेति प्रतिषेधो विभजनक्रियायाः, दृष्टस्समयस्सिद्धान्तवाच्यमनेकान्तात्मकं वस्तुतत्त्वं येन पुंसा स तथा, स न विभजते सत्येतरतया, स्वेतरविषयमवधारयमाणोऽपि तथा तान्न विभजते, अपि त्वितरनयविषयसत्यत्वापेक्षमेव स्वनयाभिप्रेतं विषयसत्यत्वमेवावधारयतीति यावत्, ग्राह्यसत्यासत्याभ्यां ग्राहकसत्यासत्ये इत्येवमभिधानं, तच्च दृष्टानेकान्ततत्त्वस्य विभजनं स्यादस्त्येव द्रव्यार्थत इत्येव रूपमिति, गुरुतत्त्वविनिश्चये उक्तगाथा "णिययवयणिज्जसच्चा, सव्वणया परिविआलणें मोहा। ते पुण अदिट्ठसमओ, विभयइ सच्चेव अलिए वा।१।" इत्येवंरूपा। तत्र

पञ्चसु, उपलक्षणमेतत्, अनाहारके च चतुर्विधापि वाग्भवति । विकलेन्द्रियेषु पुनर्द्वीन्द्रियादिषु, उपलक्षणमेतत्, तेन संज्ञिद्वारे असंज्ञिनि च वागसत्यामृषैव भवति, न शेषा । द्वयोः केवलयोः—केवलज्ञानकेवलदर्शनरूपयोः द्वे भाषे, तद्यथा—सत्या असत्याऽमृषा च । शेषेषु च स्थानेषु सर्वेषु चतुर्विधं मनश्चतुर्विधा च वाग्भवति। तथा अंतरगतौ अपांतरालगतौ कैवलिके च समुद्धाते कार्मणं भवति, अन्यत्र तत्कार्मणं विवक्षया द्रष्टव्यम् । तथाहि—सत्तारूपेण चेद्विवक्ष्यते तर्ह्यस्ति, योगरूपतया तु नेति ॥९–१०॥

**मणनाणविभंगेसु मीसं उरलंपि नारयसुरेसु । केवलथावरविगले वेउव्विदुगं न संभवइ ॥११॥**

(स्वो०)—'मनोज्ञानविभङ्गयोः मिश्रमौरालिकमपि नारकसुरेषु केवलस्थावरविकले वैक्रियद्विकं न संभवति' इति पदानि । पदार्थस्तु मनोज्ञानं च विभङ्गश्च तयोरौदारिकमिश्रशरीरं न संभवति, उत्पत्तिकाले तयोरभावात् । देवनारकयोरौदारिकमौदारिकमिश्रमपि शरीरं न संभवति, पश्चानुपूर्व्युपन्यासाच्चक्षुर्दर्शनानाहारकयोर्मिश्रशरीरत्रयमपि न भवति, यतोऽनाहारको वक्रगतौ भवति, चक्षुर्दर्शनं तु तृतीयपर्याप्तौ, सा च शरीरपर्याप्तेरुत्तरकाले भवति । शेषद्वारेषु शेषद्वारावयवेषु चोत्पत्तिकाले तिर्यङ्मनुष्ययोः, केवलज्ञानकेवलदर्शनयथाख्यातेषु (च) केवलिसमुद्धाते औदारिकमिश्रं तदुत्तरकालं त्वौदारिकं शरीरं भवतीति भावनीयमिति । 'केवले'त्ति—केवलज्ञानकेवलदर्शनयथाख्यातेषु वैक्रियमिश्रं वैक्रियं (च) शरीरं न संभवति, यतः—सयोगिकेवलिनः सप्तैव योगाः, केवलं च स्थावरकायश्च विकलेन्द्रियाश्च द्वन्द्वैकत्वं तस्मिन्निति, स्थावरकाये द्वित्रिचतुरिन्द्रियेषु च वैक्रियमिश्रं वैक्रियं च शरीरं न सम्भवति, पश्चानुपूर्व्युपन्यासात् संज्ञिविपक्षे च न भवति, शेषद्वारेषु शेषद्वारावयवेषु च भवति । कथं ?, देवनारकयोः प्रसिद्धमेव, पञ्चेन्द्रियत्रसस्त्रीपुंनपुंसकभव्याभव्यसंज्ञिमिथ्यादृष्टयस्त एव कषायलेश्यात्रिज्ञानाज्ञानवन्तश्च तथा प्रमत्तसंयतास्तु दर्शनत्रयज्ञानचतुष्कसामायिकच्छेदोप-

अनुसरेत्, तदेतत् वेदान्तिमतमुपादाय नैयायिकस्य माध्यमिकमतदूषणमिति सङ्क्षेपार्थः, उक्तश्लोकस्य निर्गलितमर्थमुपदर्शयन्नाह—

माध्यमिकवेदान्तिनौ तावद्वैतण्डिकावेव तयोः स्वपक्षाभावान्नैयायिकस्यापि स्वपक्षत्यागे तादृशत्वमेवेति तस्य माध्यमिकजये वेदान्तनयानुसरणमुपहासकरमित्यर्थः। न च क्षणिकानेकविज्ञानधाराकल्पने गौरवादेकत्वे च लाघवादौपनिषद एव नयो बलवानिति दीधितिकृदुक्तमपि युक्तम्, विज्ञाने तादात्म्यातिरिक्तानन्तक्षणसम्बन्धकल्पनापेक्षया अनन्तक्षणतादात्म्यकल्पन एव लाघवान्माध्यमिकमतस्यैवेत्थं बलवत्त्वसिद्धेः।

माध्यमिकवेदान्तिनाविति, तादृशत्वमेव वैतण्डिकत्वमेव, बौद्धमते विज्ञानस्यानित्यत्वेन प्रतिक्षणं विभिन्नरूपतया क्षणिकं विज्ञानसन्तानमनेकरूपं कल्पनीयं स्यात्, वेदान्तिमते विज्ञानस्य नित्यत्वेनैकरूपमेव तदिति बौद्धमतापेक्षया वेदान्तिमते सुस्पष्टमेव लाघवमिति दीधितिकारोक्तमपि नयुक्तमित्यत्र हेतुमाह विज्ञान इति, नित्यत्वं नानन्तक्षणतादात्म्यरूपं, तथा सत्येकत्वेनाभ्युपगतस्यापि विज्ञानस्यानन्तत्वापत्तिः, किन्त्वनन्तक्षणकालिकसम्बन्धरूपमित्यभिप्रायेण सम्बन्धस्य विशेषणमाह—तादात्म्यातिरिक्तेति। अनन्तक्षणतादात्म्यकल्पन एवेति, क्षणिकत्वं क्षणतादात्म्यरूपमभ्युपगतं बौद्धमते, तादात्म्यं च स्ववृत्त्यसाधारणधर्मरूपमिति क्षणतादाम्यं क्षणत्वरूपमेव पर्यवसन्नम्, क्षणत्वे च न कस्यापि विप्रतिपत्तिरिति पूर्वकल्पवदत्र कल्पेऽतिरिक्तकल्पनानवकाश इति लाघवमिति भावः।

एतेन ज्ञानाधीनाऽर्थव्यवस्थितिरिति ज्ञानाभ्युपगमे कस्याप्यविप्रतिपत्तेस्तत्रोत्पादविनाशकल्पने गौरवादुपाधिभेदाच्च व्यवहारभेदोपपत्तेर्बलवानौपनिषदो नय इति मधुसूदनोक्तमप्यपास्तम्, तत्रोत्पादविनाशप्र-

(मलय०)—आहारकद्विकमाहारकाहारकमिश्रलक्षणं चतुर्दशपूर्विणो नान्यस्येति विशेषणात् । मनुजगतिपंचेंद्रियादिषु स्थानेषु स्वमत्या तत् योजयेत् । यत्र चतुर्दशपूर्वाधिगमसंभवस्तत्र तद्विनिश्चिनुयान्न शेषेषु स्थानेष्वित्यर्थः । तदेवं मार्गणास्थानेषु केषुचिद्योगाः प्रतिषिद्धाः, केषुचिच्च विहितास्तेऽत्र मन्दमतिभिर्नावगम्यन्ते केषु कियन्तः, ततस्तदवबोधाय यत्र यावन्तो भवन्ति, तत्र तावन्तो दर्श्यन्ते—सुरगतौ निरगतौ चाहारकद्विकौदारिकद्विकहीनाः शेषा एकादशयोगाः, तत्राहारकद्विकाभावश्चतुर्दशपूर्वाधिगमाऽभावात्, 'उरलंपि नारयसुरेसु' इति प्रतिषेधादौदारिकद्विकाभावः । तिर्यग्गतिस्त्रीवेदमत्यज्ञानश्रुताज्ञानविभङ्गाविरतसासादनाभव्यमिथ्यात्वौपशमिकसम्यक्त्वेष्वाहारकद्विकोनाः शेषास्त्रयोदश । आहारकद्विकाभावभावना प्राग्वत्सर्वत्रानुसर्त्तव्या । मनुजगतिपञ्चेंद्रियत्रसकायकाययोगपुंनपुंसकवेदकषायचतुष्टयमतिश्रुतावधिज्ञानावधिदर्शनाचक्षुर्दर्शनलेश्यापट्कक्षायोपशमिकक्षायिकसम्यक्त्वभव्यसंज्ञ्याहारकेषु पञ्चदशापि । एकेन्द्रियेषु चतुर्विधमनोयोगचतुर्विधवाग्योगाहारकद्विकवर्ज्जाः शेषाः पञ्च । पृथिव्यप्तेजोवनस्पतिषु वैक्रियद्विकस्याप्यभावात्त्रयः । विकलेन्द्रियेषु 'विगलेसु असच्चमोसेवेति' वचनात् असत्यामृपाभाषाप्रक्षेपाच्चत्वारः । वायुकायिके कार्मणौदारिकद्विकवैक्रियद्विकरूपाः पञ्च । मनोयोगवाग्योगमनःपर्यायज्ञानसामायिकच्छेदोपस्थापनेष्वौदारिकमिश्रकार्मणवर्ज्जाः शेपास्त्रयोदश । यतः—कार्मणमपांतरालगतावुत्पत्तिप्रथमसमये चौदारिकमिश्रमपर्याप्तावस्थायां तदानीं च मनोयोगाद्यभावः । चक्षुर्दर्शने कार्मणौदारिकमिश्रवैक्रियमिश्राहारकमिश्रवर्ज्जाः शेषा एकादश । परिहारविशुद्धिकसूक्ष्मसंपरायसंयमयोः कार्मणौदारिकमिश्रवैक्रियद्विकाहारकद्विकवर्ज्जाः शेषा नव । सम्यग्मिथ्यादृष्टौ वैक्रियप्रक्षेपाद्दश । देशयते वैक्रियद्विकप्रक्षेपादेकादश । यथाख्याते पुनरौदारिकमिश्रकार्मणप्रक्षेपादेकादश, समुद्घातावस्थायां कार्मणौदारिकमिश्रयोः प्राप्यमाणत्वात् । केवलज्ञाने केवलदर्शने च मनोद्विकवाग्द्विककार्मणौदारिकद्विकरूपाः सप्त । असंज्ञिनि कार्मणौदारिकद्विकवैक्रियद्विका-

प्रागभावाऽप्रतियोगित्वविशिष्टध्वंसाऽप्रतियोगित्वेत्यर्थः । वैशिष्ट्यञ्च सामानाधिकरण्यसम्बन्धेन । तत्प्रतियोगित्वेति उत्पादविनाशप्रतियोगित्वेत्यर्थः । लाघवादिति अप्रतियोगित्वं प्रतियोगित्वाभावः, तथा चाभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वेन प्रथमं कल्पनीयतयोपस्थितितः भावभिन्नत्वमभावत्वं भेदश्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावलक्षण इत्यभावस्य प्रतियोगिघटितमूर्त्तिकत्वेन स्वरूपतश्च लाघवादित्यर्थः ॥४१॥ द्विचत्वारिंशत्तमश्लोकमवतारयति नन्वित्यादिना, देशेन देशदलनमित्यादिश्लोकव्याख्यानं ग्रन्थकृतैव कृतमिति नेह प्रतन्यते ।

तदुक्तम् सम्मतौ "सीसमईविप्फारणमेत्तत्थोऽयं कओ समुल्लावो । इहरा कहामुहं चेव णत्थि एयं ससमयंमि"त्ति, अयं च निषेधः स्वतन्त्रनयविषयः, स्याद्वादैकवाक्यतापन्ननयवाक्यस्य तु तत्त्वादेव नाप्रतिपादनीयत्वमिति ध्येयम् ।

सीसमइत्ति शिष्यबुद्धिविकाशनमात्रार्थोयं कृतः प्रबन्धः, इतरथा स्वसिद्धान्ते किमेते क्षणिका अक्षणिका वा भिन्ना अभिन्ना वेति कथैवैषा नास्ति, स्याद्वादस्य वस्तुत्वव्यापकत्वेन वस्तुमात्रस्यानेकान्तात्मकत्वादित्यर्थः। नन्वेवं यदि "नैवावधारणीं भाषां भाषेत" इतिभगवदुक्तानुसारेणैकान्तनिश्चयात्मको नयभाषाप्रयोग एव नास्ति तदा "प्रमाणनयैरधिगमः" इति तत्त्वार्थसूत्रविरोध इत्यत आह अयञ्च निषेध इति, स्वतन्त्रनयविषयः इतरनयानपेक्षिनयविषयः, उक्तविषयस्यासम्भवेन तत्कथापि न सम्भवति, अनन्तधर्मात्मकवस्त्वेकदेशोऽपि स्याद्वादरूप एवेति हेतोरितरधर्माप्रतिक्षेपितयाऽन्याशेषदेशसाकाङ्क्षैकदेशबोधजनकस्य नयवाक्यस्य स्याद्वादतत्त्वप्रतिपादकत्वादेव न निषेध इति सुनयकथातस्तत्त्वाधिगमो भवत्येवेति नोक्तसूत्रविरोध इति भावः । तत्त्वादेव परस्परनिरूप्यनिरूपक-

आद्यज्ञानत्रिकाज्ञानत्रिकदर्शनत्रिकरूपा नव असंयते । तथा चत्वारो विकलेष्वन्येषामसम्भवाच्चतुरिंद्रियेषूपयोगाः, तत्र त्रयः पूर्वोक्ता एव चतुर्थस्तु चक्षुर्दर्शनं, उपलक्षणं चैतत्, तेनैते एव चत्वारोऽसंज्ञिनि च वेदितव्याः । तथा त्रसेषु 'सगले'त्ति पञ्चेन्द्रियेषु द्वादश ॥१३॥

जोए वेए सन्नी आहारगभव्वसुक्कलेसासु । बारस संजमसंमे नव दस लेसाकसाएसु ॥१४॥

(स्वो०)—'योगे वेदे संज्ञिन्याहारकभव्यशुक्ललेश्यासु द्वादश संयमसम्यग्दृष्टौ नव दश लेश्याकषायेष्वि'ति पदानि । पदार्थस्त्वयम्—योगे इति जातिनिर्देशात् मनोवाक्कायरूपे त्रिभेदे, एवं वेदे स्त्रीपुंनपुंसकसंज्ञे द्रव्यरूपे, संज्ञिद्वारे संज्ञिनि, आहारकद्वारे आहारके, भव्यद्वारे भव्ये, लेश्याद्वारे शुक्ललेश्यायां, एतेषु स्थानेषु द्वादशोपयोगा भवन्ति । संयमद्वारे यथाख्याते क्षायिकसम्यग्दृष्टौ च नवोपयोगा भवन्ति, यतस्तयोरज्ञानत्रयं न भवति । लेश्याद्वारे कृष्णनीलकापोततैजसीपद्मासु, कषायद्वारे चतुर्ष्वपि कषायेषु दशोपयोगा भवन्ति, यतोऽकषायाः केवलिनोऽलेश्याः शुक्ललेश्या वेतिं गाथार्थः ॥१४॥

(मलय०)—योगे मनोवाक्कायरूपे, वेदे स्त्रीपुंनपुंसकलक्षणे, संज्ञिनि आहारकभव्येषु (भव्ययोः) शुक्ललेश्यायां च द्वादशाप्युपयोगाः। दश्चेह द्रव्यरूप आकारमात्रं गृह्यते, तेन तत्र केवलज्ञानाद्यविरोधः । तथा संयमे यथाख्यातरूपे, सम्यक्त्वे क्षायिकलक्षणे नवोपयोगाः, तत्राज्ञानत्रिकाभावात् । तथा लेश्यासु कृष्णनीलकापोततेजःपद्माख्यासु, कषायेषु च चतुर्षु केवलज्ञानकेवलदर्शनहीनाः शेषा दशोपयोगाः, कृष्णादिलेश्याभावे केवलद्विकानुत्पादात् ॥१४॥

सम्मत्तकारणेहिं मिच्छानिमित्ता न होंति उवओगा । केवलदुगेण सेसा संतेव अचक्खुचक्खूसु ॥१५॥

कान्तेन नयवाक्यप्रयोग इति तस्यापि प्राक्तनानेकान्तसापेक्षत्वेनानेकान्तानेकान्तत्वं परिभाषते, अत एव नानवस्था,

यदि चेति कल्पे तथा विचारणा कृतेति विशेषः। अयंभावः, स्यादस्त्येवेतिभङ्गे बुद्धिविषयत्वेन रूपेण स्वद्रव्यादीनां चतुर्णामप्युपसंग्रहादनेकावच्छेदकमुखेनावच्छेद्यप्रतिपादनादनेकान्तत्वं, विशेषावच्छेदकजिज्ञासया प्रतिपाद्यमाने च स्वद्रव्याद्यपेक्षयाऽस्त्येवेत्यादिभङ्गे प्रतिनियतावच्छेदकविशेषमुखेनावच्छेद्यप्रतिपादनादेकान्तत्वमिति कृत्वा स्यादस्त्येवेत्यादिसप्तवाक्यापेक्षयानेकान्तः स्वद्रव्यापेक्षयाऽस्त्येवेत्यादिसप्तभङ्गापेक्षयैकान्त इत्यनेकान्ते सामान्यतोऽवच्छेदकावच्छेदेनास्तित्वाद्यभिधायकस्य प्रतिभङ्गस्यावच्छेदकांशेऽनेकान्तत्वं विशेषतोऽवच्छेदकावच्छेदेनास्तित्वाद्यभिधायकस्य प्रतिभङ्गस्यावच्छेदकांशे एकान्तत्वमित्येवमनेकान्तत्वैकान्तत्वोभयधर्मयोगादनेकान्तता, पूर्वं स्यादस्त्येवेत्यादिसप्तभङ्ग्यास्सामान्यतोऽवच्छेदकमादाय सप्तधर्मज्ञानं ततश्च सामान्यज्ञानाद्विशेषजिज्ञासया स्वद्रव्यापेक्षयाऽस्त्येवेत्यादिसप्तभङ्गीप्रवृत्तिस्तत्प्रवृत्त्या च प्रथमसप्तभङ्ग्यात्मकाऽनेकान्तस्य स्वस्वरूपेणानेकान्तत्वेपि द्वितीयसप्तभङ्ग्यपेक्षया एकान्तत्वमित्यनेकान्तता, एवं द्वितीयसप्तभङ्ग्यास्स्वस्वरूपेणैकान्तत्वेपि प्रथमानेकान्तसप्तभङ्ग्यपेक्षयाऽनेकान्तत्वमित्यनेकान्ततेति, तदर्थः स्यात्पदस्यार्थः, तज्जिज्ञासायां अवच्छेदकजिज्ञासायाम्, तदनन्तरम् विशेषतोऽवच्छेदकजिज्ञासानन्तरं, स्यादस्त्येवेत्यादिमहावाक्यानन्तरं वा, अत एवेत्यस्यातिदिष्टमाह—

तृतीयचतुर्थानेकान्तयोः प्रथमद्वितीययोरेव विश्रामादन्योऽन्याश्रयस्तु प्रामाणिक इति बहवः। विशेषतोऽवच्छेदकजिज्ञासाया अपि सप्तधाया औत्सर्गिकत्वात्, भङ्गद्वयप्रयोगस्य च व्युत्पन्नापेक्षत्वात्, सामा-

ज्ञानाद्यावरणविलयेन तथाविधोऽस्पष्टरूपो मतिज्ञानादिसंज्ञितः केवलज्ञानस्य प्रकाशो न भवति, किं तु सर्वात्मना यथावस्थितं वस्तुपरिच्छिदन् परिस्फुटरूपोऽन्य एवेत्यदोषः । उक्तं च–"कडविवरागयकिरणा मेहन्तरियस्स जह दिणेसस्स । उक्कडमेहावगमे न होंति जह तह इमाइंपि ॥१॥" । अन्ये पुनराहुः–सन्त्येव सयोगिकेवल्यादावपि मतिज्ञानादीनि, केवलमफलत्वात्संत्यपि तदानीं तानि न विवक्ष्यन्ते, यथा सूर्योदये नक्षत्रादीनि उक्तं च— "अन्ने आभिणिवोहियनाणाइणि वि जिणस्स विज्जंति । अफलाणि य सूरुदये जहेव नक्खत्तमाइणि ॥१॥" । तथा 'संतेव अचक्खुचक्खूसु' त्ति–संत्येव भवंत्येव अचक्षुर्दर्शनचक्षुर्दर्शनाभ्यां बहुवचनादवधिदर्शनेन च सह सम्यक्त्वनिमित्ता मिथ्यात्वनिमित्ताश्चोपयोगाः, तेन मतिश्रुतावधिज्ञानमनःपर्यायज्ञानसामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसम्परायक्षायोपशमिकौपशमिकसम्यक्त्वेषु केवलद्विकाज्ञानत्रिकहीनाः शेषाः सप्तोपयोगाः । अज्ञानत्रिकाभव्यसास्वादनमिथ्यात्वेषु केवलद्विकमतिज्ञानादिचतुष्टयरहिताः शेषाः षट् । केवलद्विके च केवलज्ञानकेवलदर्शने, चक्षुरचक्षुरवधिदर्शनेषु केवलद्विकहीनाः शेषा दश । मनःपर्यायज्ञानचक्षुर्दर्शनरहिताश्च शेषा दशाऽनाहारके । सूत्रे च 'अचक्खुचक्खूसु' त्ति–सप्तमी तृतीयार्थे वेदितव्या । भवति च तृतीयार्थे सप्तमी; यदाह पाणिनिः प्राकृतलक्षणे–'तृतीयार्थे सप्तमी,' यथा 'तिसु तेसु अलंकिया पुहइ' इति ॥१५॥

तदेवं कृता मार्गणास्थानेषु योगोपयोगमार्गणा, सांप्रतं गुणस्थानकेषु कर्त्तव्या, तानि च गुणस्थानकान्यमूनि, तद्यथा–मिथ्यादृष्टिगुणस्थानम्, सासादनसम्यग्दृष्टिगुणस्थानम्, सम्यग्मिथ्यादृष्टिगुणस्थानम्, अविरतसम्यग्दृष्टिगुणस्थानम्, देशविरतगुणस्थानम्, प्रमत्तसंयतगुणस्थानम्, अप्रमत्तसंयतगुणस्थानम्, अपूर्वकरणगुणस्थानम्, अनिवृत्तिबादरसंपरायगुणस्थानम्, सूक्ष्मसंपरायगुणस्थानम्, उपशांतकषायवीतरागछद्मस्थगुणस्थानम्, क्षीणकषायवीतरागछद्मस्थगुणस्थानम्, सयोगिकेवलिगुणस्थानम्, अयोगिकेवलिगुणस्थानं चेति ।

सत्त्वमसूपपादम्'' इत्यादि, भेदाभेदप्रवेशभियैव नैवमभ्युपैमीति चेत्, तत्किमेकान्तदरिद्रपुत्रकं गृहे स्थापयसि, स्वयमायान्तीं चानेकान्तश्रियं निवारयसि,

तृतीयेति, ननु माभूदनवस्था परस्परापेक्षणादन्योन्याश्रयस्तु स्यादेवेति चेत्, स प्रामाणिकत्वादभ्युपेयार्ह इत्याह अन्योन्याश्रयस्त्विति, नाद्याया द्वितीयायाश्च सप्तभङ्ग्याः परस्परापेक्षकत्वम्, किन्तु एकस्यैव स्याद्वादस्य सामान्यविशेषोभयरूपत्वं व्याख्येयव्याख्यानोभयरूपत्वं वा, तथा च सामान्यतोऽवच्छेदकजिज्ञासया सामान्यरूपया व्याख्येयरूपया वा सामान्यतोऽवच्छेदकमादाय प्रवृत्तया सप्तभङ्ग्याऽनेकान्तात्मकत्वं विशेषतोऽवच्छेदकजिज्ञासया विशेषरूपया विवरणरूपया वा विशेषतोऽवच्छेदकमादाय प्रवृत्तया स्वद्रव्यापेक्षयाऽस्त्येवेत्यादिरूपया सप्तभङ्ग्यैकान्तत्वमित्यनेकान्तेऽनेकान्तत्वमिति नोक्तदोषावकाश इत्यभिप्रायवान् ग्रन्थकारस्स्वाभिप्रायमावेदयति विशेषतोऽवच्छेदकजिज्ञासया अपीति, अपिना सामान्यतोऽवच्छेदकजिज्ञासाया औत्सर्गिकत्वं ख्यापितम्, नन्वेवं तर्हि क्वचित्कथं भङ्गद्वयप्रयोग इत्याशङ्कायामाह भङ्गद्वयेति, व्युत्पन्नापेक्षत्वादिति, अनेन तत्राप्यव्युत्पन्नश्रोतॄणां भङ्गद्वयप्रयोगमात्रेण न सप्तधर्मावगतिरिति तदर्थं तान्प्रति सप्तभङ्गप्रयोगकरणेपि प्रेक्षाचक्षुषां न दोष इत्यावेदितम्। सप्तभङ्गीद्वयविश्राम इति, सति सप्तमी, अस्याश्च न दोषस्पर्शोपीत्यनेनान्वयः, उत्तरार्द्धमूलं सङ्गमयन्नाह तदाहेति, इत्थमित्यस्य फलितार्थमाह सामान्येति, स्थिताविति पदस्य फलितार्थमाह अनेकान्तेति, शबलवस्तुविवेकसिद्धेरित्यस्यार्थमाह शबलवस्तुन इति ॥४२॥ त्रिचत्वारिंशत्तमश्लोकमवतारयति—इत्थञ्चेति, नोच्चैर्बिभेति यदि नामेत्यादिश्लोकोऽपि सुस्पष्टं व्याख्यातः, तत्करणाक्षमत्वेनेति पदार्थविवेककरणाक्षमत्वेनेत्यर्थः। तदुपगम इति तथा च प्रामाणिक्यनवस्था न दोषायेति भावः। निषेधे

जिनप्रणीततया सम्यक् श्रद्धत्ते, तदानीमसौ सम्यग्दृष्टिः, यदा त्वेकस्मिन्नपि वस्तुनि पर्याये वा मतिदौबल्यादिना एकांतेन तस्य सम्यक्परिज्ञानमिथ्यापरिज्ञानाभावतो न सम्यक्श्रद्धानं, नाप्येकांततो विप्रतिपत्तिस्तदा स सम्यग्मिथ्यादृष्टिः, उक्तं च शतकबृहच्चूर्णौ—"जहा नालिकेरदीववासिस्स खुहाइयस्स वि एत्थ समागयस्स पुरिसस्स ओयणाइए अणेगविहे ढोइए तस्स आहारस्स उवरिं न रुई न य निंदा, जेण तेण सो ओयणाइओ आहारो न कयाइ दिट्ठो नावि सुओ, एवं सम्मामिच्छदिट्ठिस्सवि जीवाइपयत्थाणं उवरिं न य रुई नावि निंदत्ति", यदा पुनरेकस्मिन्नपि वस्तुनि पर्याये वा एकांततो विप्रतिपद्यते, तदा स मिथ्यादृष्टिरेवेत्यदोषः। तच्च मिथ्यात्वं पञ्चभेदं, ते च पञ्चभेदा उपरिष्टाद्वक्ष्यन्ते।

तथा आयमौपशमिकसम्यक्त्वलाभलक्षणं सादयति अपनयतीत्यासादनं, अनंतानुबंधिकषायवेदनं, अत्र पृषोदरादित्वात् यशब्दलोपः, 'कृद्बहुलमिति वचनाच्च कर्त्तर्यनद्' सति हि अस्मिन् परमानंदरूपानन्तसुखफलदो निःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेणोत्कर्षतः षडावलिकाभिरपगच्छतीति। सह आसादनेन वर्त्तत इति सासादनः, सम्यक् अविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः, सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः, तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानम्। सास्वादनसम्यग्दृष्टिगुणस्थानमिति वा पाठः, तत्रायं शब्दार्थः—सह सम्यक्त्वलक्षणरसास्वादनेन वर्त्तत इति सास्वादनः, यथा हि भुक्तक्षीरान्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति तथैषोऽपि मिथ्यात्वाभिमुखतया सम्यक्त्वस्योपरि व्यलीकचित्तः सम्यक्त्वमुद्वमन् तद्रसमास्वादयति, ततः स चासौ सम्यग्दृष्टिश्च स सास्वादनसम्यग्दृष्टिः, तस्य गुणस्थानं सास्वादनसम्यग्दृष्टिगुणस्थानम्। एतच्चैवं भवति—इह गंभीरापारसंसारपारावारमध्यमध्यासिनो जन्तुर्मिथ्यादर्शनमोहनीयादिप्रत्ययमनंतपुद्गलपरावर्त्तान् यावत् अनेक-

विशेषणज्ञानस्य कारणत्वेन ज्ञातस्य सतो घटत्वपटत्वादितत्तत्प्रकारकज्ञानादेरित्यर्थः। हेतुत्वं वाच्यमिति उक्तविशेषकार्यकारणभावानभ्युपगमे घटत्वप्रकारकज्ञानादपि पटत्वप्रकारकज्ञानविषयतात्वेन घटविषयताग्रहस्स्यादिति भावः। तदभावे उक्तविशेषसामग्र्यभावे, सामान्यतो भानापत्तिरिति घटादिविषयविशेषाऽघटिता या सामान्यविषयता तत्त्वेन विषयत्वग्रहस्स्यादित्यर्थः। विशिष्टबुद्धिं प्रति विशेषणज्ञानविधया हेतुतयाऽभ्युपगतस्य निर्विकल्पकज्ञानस्योच्छेदे हेतुमाह—

घटादिग्रहस्यापि रूपत्वादिविशिष्टविषयकस्यैव सुवचत्वात्, किं चैवं घटज्ञानविषयताग्रहे घटविषयकज्ञानग्रहो हेतुः पर्यवसितः तथा,चान्योन्याश्रयो व्यक्त एव, अपि चैवं द्वित्वादिवन्न्यायनये विषयताया जन्यता स्यात्, तथा चातीतानागतयोस्तदनापत्तिः, ज्ञानकाले च तदभावान्निर्विषयं ज्ञानं स्यात्॥ अत एव बाधकात् तस्या व्यङ्ग्यत्वमाश्रीयत इति चेत्, न, तुल्यन्यायेन द्वित्वादेरपि तथात्वापत्तौ प्राभाकरमतप्रवेशापत्तेः

घटादिग्रहस्यापीति। विशिष्टज्ञाने हेतुतया निर्विकल्पस्यानभ्युपगमेऽपीन्द्रियादिसन्निकर्षादिबलात्प्रागेव विशिष्टज्ञानं स्यादिति भावः। घटनिष्ठविषयतानिरूपकज्ञानग्रहे निरूपकतासम्बन्धेन विशेषणविधया घटज्ञानीयविषयतायाः प्रविष्टत्वात्कारणीभूतस्य तज्ज्ञानस्य प्राक्सत्त्वे घटविषयकज्ञानग्रहः तस्य च घटज्ञानविषयतायां निरूपितत्वसम्बन्धेन घटज्ञानात्मकं यद्विशेषणं तज्ज्ञानात्मकस्य घटज्ञानविषयताग्रहे कारणत्वेन प्राक्सत्त्वे घटज्ञानविषयताग्रह इत्यन्योन्याश्रय इत्याह किञ्चैवमिति, अत्र च विषयतासंसर्गेण घटविशिष्टज्ञानग्रहस्य कारणत्वे नान्योन्याश्रय इति यदि ब्रूयात्तदाप्याह अपि चैवमिति, विषयताया जन्यत्वाभ्युपगमेऽतीतानागतार्थात्मकाश्रयस्येदानींतनज्ञानकालेऽभावेन तत्र तेन ज्ञानेन विषयताया उत्पत्तिर्न स्यात् आश्रयाऽभावे आश्रितस्याप्यनुत्पत्तेरित्याह

प्रथमसमये एवौपशमिकं सम्यक्त्वमवाप्नोति, मिथ्यात्वदलिकवेदनाभावात्। यथा हि वनदावानलः पूर्वदग्धेंधनमूपरं वा देशमवाप्य विध्यायति, तथा मिथ्यात्ववेदनवनदवोऽप्यंतरकरणमवाप्य विध्यायति । तथा च सति तस्यौपशमिकसम्यक्त्वलाभः उक्तं च— "ऊसरदेसं दड्ढेल्लयं च विज्झाइ वणदवो पप्प। इय मिच्छस्स अणुदए उवसमसम्मं लहइ जीवो ॥१॥" तस्यां चांतर्मुहूर्त्तिक्यामुपशांताद्धायां परमनिधिलाभकल्पायां जघन्येन समयमात्रशेषायामुत्कर्षतश्च षडावलिकाशेषायां सत्यां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनंतानुबंधिकषायोदयो भवति, तदुदये च सासादनसम्यग्दृष्टिगुणस्थानके वर्त्तते, उपशमश्रेणिप्रतिपत्तितो वा कश्चित्सासादनत्वं याति, तदुत्तरकालं चावश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिर्भवतीति।

तथा सम्यक् मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिः, तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम्। इहानंतराभिहितविधिलभ्यौपशमिकसम्यक्त्वानुगतेन विशोधिविशेषेणौषधिविशेषकल्पेन मदनकोद्रवस्थानीयं मिथ्यात्वमोहनीयं कर्म शोधयित्वा त्रिधा करोति, तद्यथा—शुद्धमर्धविशुद्धमशुद्धं च। स्थापना चेयं। तत्र त्रयाणां पुंजानां मध्ये यदाऽर्द्धविशुद्धः पुंज उदेति, तदा तदुदयवशाज्जीवस्यार्द्धविशुद्धमर्हदभिहिततत्वश्रद्धानं भवति, तदा च सम्यग्मिथ्यादृष्टिगुणस्थानं, तच्चांतर्मौहूर्त्तिकं, अंतर्मुहूर्त्ताच्चोर्ध्वमवश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छति।

तथा विरमति स्म सावद्ययोगेभ्यो निवर्त्तते स्मेति विरतः, 'गत्यकर्मण्याधारे चेति' कर्त्तरि क्तप्रत्ययः, यथा शयितो देवदत्त इत्यत्र। न विरतोऽविरतः, यद्वा क्लीबभावे क्तप्रत्यये विरमणं विरतं, सावद्ययोगप्रत्याख्यानं, नास्य विरतमस्तीत्यविरतः, स चासौ सम्यग्दृष्टिश्चेति अविरतसम्यग्दृष्टिः; एष हि अविरतिमत्ययं दुरंतनरकादिदुःखफलकर्मबंधं सावद्ययोगविरतिं च परममुनिप्रणीतसिद्धि-

कारणत्वेनातिरिक्तोक्ताधारतायास्सिद्धिस्स्यान्नतु विषयताया इत्यसमञ्जसं स्यादित्याह एवं सतीति, विषयतासम्बन्धावच्छिन्नाधारतान्तः प्रविष्टत्वाद्विषयतायास्सिद्धिरित्याशङ्कते तद् घटकतयेति, उक्ताधारतायास्साक्षात्परंपरया सर्वपदार्थसम्बन्धित्वेन सर्वेऽपि पदार्था भेदाभेदादयस्सिद्ध्येरन्नित्युत्तरयति तद् घटकतयेति, स्वमते विषयताविषयित्वयोस्स्वरूपमुपदर्शयन्नाह—

तस्माद्विषयताविषयिते ग्राह्यग्राहकस्वभावाभ्यां तदुत्पत्ती एवान्यथान्यदापि तद्व्यवहारप्रसङ्गात्, ते एव तथाऽग्राह्यग्राहकस्वभावाभ्यां निवृत्ती, द्रव्यार्थतयैकत्वानुभवश्च सर्वसिद्ध इति तद् दृष्टान्तेन सर्वत्र त्रैलक्षण्यसिद्धौ किमपरमवशिष्यते स्याद्वादस्वीकारे ॥

तस्मादिति, विषयताविषयिते इति घटादेर्विषयस्य ग्राह्यस्वभावतयोत्पत्तिर्विषयता, ज्ञानस्य च ग्राहकस्वभावतयोत्पत्तिर्विषयितेत्यर्थः, विषयताविषयित्वयोरन्यादृशस्वरूपत्वे ज्ञानाद्यभावकालेऽपि विषयताविषयिताव्यवहारस्स्यादित्याह अन्यथेति। यदा घटादिरग्राह्यस्वभावतया विनश्यति तदानीं ग्राह्यस्वभावतयोत्पद्यते, यदा च ज्ञानं घटाग्राहकस्वभावतया विनश्यति तदानीं घटग्राहकस्वभावतयोपजायते पूर्वस्वभावविनाशस्योत्तरस्वभावोत्पत्तिनियतत्वात्, तथा च द्रव्यार्थिकनयेन स्वस्वरूपेणाविच्युतस्वरूपयोरेव ज्ञानज्ञेययोः पर्यायार्थिकनयेन पूर्वोत्तरस्वरूपतया नाशोत्पादाविति त्रैरूप्यसिद्धिस्तद्दृष्टान्तेनान्यत्रापि सा स्यादित्युपदर्शयितुमाह ते एव तथेति, प्रकारान्तरेणापि स्याद्वादमवतारयन्नाह—

एवमेकत्र तत्तत्पुरुषाद्यपेक्षाभेदेन पितृपुत्रादिव्यवस्थावज्ज्ञाताज्ञातत्वव्यवस्थया तत्तद् धर्मभेदेन च तया स्याद्वादसिद्धिः। न च पितृत्वपुत्रत्वयोर्जनकताजन्यतारूपयोर्न विरोधोऽपेक्षाभेदस्तु तत्र स्पष्टव्यवहारार्थमु-

तथा संयच्छति स्म सर्वसावद्ययोगेभ्यः सम्यगुपरमति स्मेति संयतः, "गत्यकर्मण्याधारे चेति" कर्त्तरि क्तः प्रत्ययः,संयतत्वं चास्य प्रत्याख्यानावरणक्षयोपशमात् प्रायः सामायिकप्रतिपत्तेश्छेदोपस्थापनीयचारित्रप्रतिपत्तेर्वा वेदितव्यम् । यत आह — "छेदोपस्थाप्यं वा, वृत्त सामायिकं चरित्रं वा। स ततो लभते प्रत्याख्यानावरणक्षयोपशमात् ॥१॥" यत्त्वस्य परिहारविशुद्धिकमपि चारित्रमन्यत्रोक्तं, तत्कादाचित्कं विशिष्टदेशकालसंहननश्रुताद्यपेक्षमिति न विवक्षितम् ।

तथा प्रमाद्यति स्म मोहनीयादिकर्मोदयप्रभावतः संज्वलनकषायनिद्राद्यन्यतमप्रमादयोगतः संयमयोगेषु सीदति स्मेति प्रमत्तः, अत्रापि 'गत्यकर्मण्याधारे चेति' कर्त्तरि क्तप्रत्ययः, प्रमत्तश्चासौ संयतश्च प्रमत्तसंयतः, तस्य गुणस्थानं प्रमत्तसंयतगुणस्थानम् । विशुद्ध्यविशुद्धिप्रकर्षाप्रकर्पकृतः स्वरूपभेदः । तथाहि—देशविरतगुणापेक्षया एतद्गुणानां विशुद्धिप्रकर्षोऽशुद्ध्यप्रकर्षश्च, अप्रमत्तसंयतगुणापेक्षया तु विपर्ययः, एवमन्येष्वपि गुणस्थानकेषु पूर्वोत्तरापेक्षया विशुद्ध्यविशुद्धिप्रकर्षापकर्षयोजना द्रष्टव्या।

तथा न प्रमत्तोऽप्रमत्तः, यद्वा नास्ति प्रमत्तमस्येत्यप्रमत्तः, अप्रमत्तश्चासौ संयतश्चाप्रमत्तसंयतः, अप्रमत्तसंयतश्च प्रमत्तसंयतापेक्षयाऽतिविशुद्ध्यमानाध्यवसायः, विशोधिस्थानानि चास्य कालत्रयमपेक्ष्य सामान्यतोऽसंख्येयलोकाकाशप्रमाणानि भवन्ति। उक्तं च— "निर्दिष्टा एव तथा, विशोधयोऽसंख्यलोकमात्रास्ताः। तरतमयुक्ता या अधितिष्ठन् यतिरप्रमत्तः स्यात् ॥१॥" अस्य च भगवतोऽप्रमत्तसंयतस्य विशिष्टतपोधर्मध्यानादियोगतः कर्माणि क्षपयतो अपूर्वापूर्वतराणि च विशोधिस्थानान्यधिरोहतो मनःपर्यायज्ञानादयोऽपि ऋद्धयः प्रादुष्पन्ति। यत उक्तं—"अवगाहते स च श्रुतजलधिं प्राप्नोति चावधिज्ञानं। मानसपर्यायं वा ज्ञानं कोष्ठादिबुद्धीर्वा ॥१॥ चारणवैक्रियसर्वौषधताद्याश्चापि लब्धयस्तस्य। प्रादुर्भवंति गुणतो बलानि वा मानसादीनि ॥२॥" तस्य गुणस्थानमप्रमत्तसंयतगुण-

परस्परविरोधित्वाभावेन नोत्तरोत्तरेण पूर्वपूर्वबाधनाद्बोधशून्यत्वापत्तिरस्माकं, शिरोमणेस्त्वेकस्मिन्नेव मते सङ्कुचिताधारवृत्तित्वाऽसङ्कुचिताधारवृत्तित्वादेरेकस्मिन्नसम्भवेन तत्सर्वधर्मज्ञानस्य संशयरूपत्वापत्तिः, परस्परप्रतिबन्धाद्वा प्रत्येकमनुत्पत्तिरित्याशयेनाह—परस्यैव हीत्यादि। चित्रस्थले स्पृशति नैव तत्रोपपत्तिमिति यदुक्तं तदेवोपपादयन्नाह—

एवं चित्ररूपस्थलेऽपि यद्यनुभवमुखप्रेक्षी भवति विपश्चित्तदा स्याद्वादसाम्राज्यलीलामेव पश्यति, तथा हि–नीलपीतादिनानारूपवदवयवारब्धे घटे सामग्रीविरोधात् न नीलादीनि रूपाण्युत्पद्यन्ते, किन्तु चित्रमेवैकमिति नैयायिकवैशेषिकसाम्प्रदायिकाः,

एवं चित्ररूपस्थलेऽपीति, सामग्रीविरोधादिति, अवयवगततत्तद्रूपघटितसामग्र्या अवयविगततत्तद्रूपातिरिक्तरूपं प्रति प्रतिबन्धकत्वादित्यर्थः। अत्रेदं भाव्यम्, सामग्रीत्वेन न प्रतिबन्धकत्वम्, अनेकपदार्थघटितायास्तस्या गुरुतया प्रतिबन्धकतावच्छेदकस्यैकस्य सम्बन्धस्याऽसम्भवात् किन्तु समवायेन नीलरूपंप्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलरूपातिरिक्तरूपत्वेन, एवं पीतादिरूपं प्रति पीताद्यतिरिक्तरूपत्वेनेति, अन्यथा नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवच्छेदेन पीतोत्पादापत्तेर्दुर्वारत्वादिति। नन्वेवं तर्हि किमवयवी नीरूपः, ओमितिचेत्तर्हि द्रव्यचाक्षुषं प्रति समवायसम्बन्धेनोद्भूतरूपस्य हेतुत्वात्तस्याप्रत्यक्षत्वप्रसङ्गस्यादित्यत आह किन्तु चित्रमेवैकमिति, अत एवैकं चित्ररूपमिति प्रतीत्युपपत्तिः, अतिरिक्तचित्ररूपत्वावच्छिन्नैकविषयताकल्पनायां लाघवात्, अन्यथा चित्रमितिप्रतीतेर्नीलत्वपीतत्वाद्यवच्छिन्ननानाविषयता कल्पनीया स्यादिति गौरवं स्यादिति भावः। नव्यमतमाह—

तत्राव्याप्यवृत्तीनि नीलपीतादीन्येवोत्पद्यन्ते, चित्रत्वव्यवहारस्तु परस्परसमानाधिकरणनानारूपवत्त्व-

परस्परमध्यवसायस्थाननानात्वस्यापि भावात् । तस्य च नानात्वस्यैतावत एव केवलज्ञानेनोपलब्धत्वात् । अत एवेदमपि न वाच्यं, कालत्रयवर्त्तिनामेतद्गुणस्थानकप्रथमसमयप्रतिपत्तॄणामानंत्यात् परस्परमध्यवसायस्थानानां नानात्वाच्चानंतान्यध्यवसायस्थानानि प्राप्नुवंतीति, बहूनां प्राय एकाध्यवसायस्थानवर्त्तित्वात् । ततो द्वितीससमये तदन्यान्यधिकतराण्यध्यवसायस्थानानि लभ्यंते, तृतीयसमये तदन्यान्यधिकतराणि, चतुर्थसमये तदन्यान्यधिकतराणीत्येवं यावच्चरमसमयः, एतानि च स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणंति । ननु द्वितीयादिसमयेष्वध्यवसायस्थानानां वृद्धौ किं कारणं ?—उच्यते—स्वभावविशेषः, एतद्गुणस्थानकप्रतिपत्तारो हि प्रतिसमयं विशुद्धिप्रकर्षमासादयंतः खलु स्वभावत एव बहवो विभिन्नेषु विभिन्नेष्वध्यवसायस्थानेषु वर्त्तंत इति । अत्र च प्रथमसमयजघन्याध्यवसायस्थानात्प्रथमसमयोत्कृष्टमध्यवसायस्थानमनंतगुणविशुद्धं, प्रथमसमयोत्कृष्टाच्चाध्यवसायस्थानाद् द्वितीयसमयजघन्याध्यवसायस्थानमनंतगुणविशुद्धं, तस्मादपि तदुत्कृष्टमनंतगुणविशुद्धं, इत्येवं यावत् द्विचरमसमयोत्कृष्टाऽध्यवसायस्थानाच्चरमसमयजघन्याध्यवसायस्थानमनंतगुणविशुद्धं, तस्मादपि तदुत्कृष्टमनंतगुणविशुद्धं; इति एकसमयगतानि चाध्यवसायस्थानानि परस्परमनंतभागवृद्धासंख्यातभागवृद्धसंख्यातभागवृद्धसंख्येयगुणवृद्धासंख्येयगुणवृद्धानन्तगुणवृद्धषट्स्थानपतितानि, युगपदेतद्गुणस्थानकप्रविष्टानां च परस्परमध्यवसायस्थानस्य व्यावृत्तिलक्षणा निवृत्तिरप्यस्ति, यथोक्तमनंतरमिति कृत्वा निवृत्तिगुणस्थानकमप्येतदुच्यते । उक्तं च—"नियट्टि अनियट्टि बायरे सुहुमे"।

संप्रत्यनिवृत्तिबादरसंपरायगुणस्थानकमुच्यते—तत्र युगपदेतद्गुणस्थानकं प्रतिपन्नानां जीवानां बहूनामप्यन्योऽन्याध्यवसायस्थानस्य व्यावृत्तिः—निवृत्तिः, सा नास्त्यस्येत्यनिवृत्तिः, समकालमेतद् गुणस्थानकमारूढस्यापरस्य यस्मिन् समये यदध्यवसायस्थानं,

वृत्तित्वे विरोध इति नियममाश्रित्यैकदेशिमतमाह व्याप्यवृत्तिन्येव तत्र नीलपीतादीनीति। ननु नीलपीतादिकं व्याप्यवृत्ति स्यात्तर्हि पीतावयवावच्छेदेनापि नीलप्रतीतिस्स्यादित्यत आह नीलाद्यवयवावच्छेदेनेति। एकत्र एकस्मिन् रूपे। अंशभेदेन नीलपीताद्यवयवात्मकावच्छेदकभेदेन,

एतेन चित्रत्वग्रहे नानारूपवदवयवावच्छेदेन चक्षुःसन्निकर्षोऽवयवगतनानारूपग्रहश्च कारणमिति प्राचां युक्तिर्निरस्ता, नीलत्वादिग्रहाननुग्रहात्, त्रसरेणुचित्रस्थलेऽगतेः, आवृतचित्ररूपसजातीयानावृतचित्रघटित-सन्निकर्षेण चित्रत्वप्रत्यक्षानापत्तेश्च, चित्रत्वादिप्रकारकप्रत्यक्षे त्वस्मदुक्तप्रकारं विना नानुभवानुरोध इति।

एतेन—चित्रजचित्रे एकावयवावच्छेदेनापि चक्षुस्सन्निकर्षे चित्रत्वेन ग्रह इत्युपदर्शितेन वक्ष्यमाणेन च हेतुना, नानारूपेति—विजातीयनानारूपेत्यर्थः। तेन शुक्लरूपद्वयवत्तन्तुद्वयाद्यवच्छेदेन चक्षुस्सन्निकर्षाच्छुक्लरूपद्वयज्ञानाच्चावयविनि चित्रत्वाग्रहेऽपि न क्षतिः। एतेनेत्यतिदिष्टमेवाह नीलत्वादिग्रहाननुग्रहादिति—एकस्मिन्रूपे अव्याप्यवृत्तिनीलत्वपीतत्वादिनानाजात्यभ्युपगमे इत्यादिः, आदिपदात्पीतत्वाद्यवान्तरचित्रत्वादेरुपग्रहः। अवयवगतनानारूपग्रहस्य हेतुत्वे विषयतासम्बन्धेन रूपादिप्रत्यक्षं प्रति स्वसमवायि-समवेतत्वसम्बन्धेन कारणीभूतस्य महत्त्वस्य द्व्यणुकरूपेऽभावेन तत्साक्षात्कारस्य कारणस्याभावात्त्र्यणुकचित्ररूपप्रत्यक्षं न स्यादित्याह त्रसरेणुचित्रेति। अन्यत्रापि व्यभिचारमुपदर्शयन्नाह आवृतचित्ररूपेति, तत्रैकस्यावयवस्यावृतत्वादेव न तदवच्छेदेन सन्नि-कर्षो न वा तद्रूपग्रह इत्युभयस्यापि व्यभिचार इति भावः। अत्र चित्रत्वग्रहाभावविशिष्टावयवरूपगतैकत्वग्रहस्यावयविचित्ररूपग्रह-प्रतिबन्धकत्वं तदभावस्य च कारणत्वम्, तेन नातिरिक्तचित्ररूपपक्षोक्तदोषः, नीलत्वादिग्रहाऽननुग्रहस्त्वभीष्ट एवेति प्राचीनानां

दुच्यते-इहोपशमश्रेणिप्रस्थापकोऽप्रमत्तसंयत एव, उपशमश्रेणिपर्यवसाने त्वप्रमत्तसंयतप्रमत्तसंयतदेशविरताविरतानामन्यतमो भवति। यदाह भाष्यकृत्--"उवसामगसेढीए पट्ठवओ अप्पमत्तविरओ य। पज्जवसाणे सो वा होइ पमत्तो अविरओ वा ॥१॥"। अन्ये पुनराहुः- अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमोऽनंतानुबंधिनः कषायानुपशमयति, दर्शनत्रिकादिकं तु संयमे एव वर्त्तमानः। तत्र प्रथमतोऽनंतानुबंधिन उपशमयति, ततो दर्शनत्रिकं, दर्शनत्रिकोपशमनानंतरं च प्रमत्ताप्रमत्तपरिवृत्तिशतानि कृत्वाऽपूर्वकरणगुणस्थानकं चानुभूयानिवृत्तिवादरसंपरायगुणस्थानमारोहति। तत्र चारित्रमोहनीयस्य प्रथमं नपुंसकवेदमुपशमयति, ततः स्त्रीवेदं, ततो हास्यरत्यरतिशोकभयजुगुप्सालक्षणं षट्कं, ततः पुरुषवेदं, ततो युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधौ, ततः संज्वलनक्रोधं, ततो युगपदप्रत्याख्यानप्रत्याख्यानावरणमानौ, ततः संज्वलनमानं, ततो युगपदप्रत्याख्यानप्रत्याख्यानावरणमाये, तदुपशांतौ च तत्समयमेव च संज्वलनमायाया बंधोदयोदीरणाव्यवच्छेदः, ततोऽसौ लोभवेदको जातः, लोभवेदनाद्धायाश्च त्रयो विभागाः,तद्यथा-अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च। तत्राश्वकर्णकरणाद्धायां वर्तमानोऽपूर्वाणि स्पर्द्धकानि करोति। अथ किमिदं स्पर्द्धकमित्युच्यते-इह तावदनंतानन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति, तत्र चैकैकस्मिन् स्कंधे यः सर्वजघन्यरसः परमाणुस्तस्यापि रसः केवलिप्रज्ञया छिद्यमानः सर्वजीवेभ्योऽनंतगुणान् रसाविभागान् प्रयच्छति, अपर एकाधिकान्, अन्यस्तु द्व्यधिकान्, एवमेकोत्तरया वृद्ध्या तावन्नेयं, यावदन्यः परमाणुः सिद्धानन्तभागेनाभव्येभ्योऽनंतगुणेनाधिकान् रसभागान् प्रयच्छति। तत्र जघन्यरसा ये केचन परमाणवस्तेषां समुदायः समानजातीयत्वादेका वर्गणा इत्युच्यते। अन्येषां त्वेकाधिकभागरसयुक्तानां समुदायो द्वितीया वर्गणा, अपरेषां तु द्व्यधिकरसभागयुक्तानां समुदायस्तृतीया वर्गणा, एवमनया दिशा एकैकरसाविभागवृद्धानां परमाणूनां समु-

कृष्णं हि द्रव्यं द्रव्यान्तरेण तुल्यमधिकमूनं वा भवेत्, प्रकारान्तराभावात्, आद्ये सर्वतुल्यत्वे तदेकतापत्तिः, उत्तरयोः सङ्ख्येयादिभागगुणवृद्धिहानिभ्यां षट्स्थानकप्रतिपत्तिरवश्यम्भाविनी, तथा च प्रतिनियतहानिवृद्धियुक्तकृष्णादिपर्यायेण सत्त्वं नान्येनेति, इत्थञ्च नीलत्वाद्यवान्तरजातीनामनन्तत्वात्तरतमशब्दमात्रेण तदनुगमस्य कर्तुमशक्यत्वात्तत्तदवान्तरजातीयनीलपीतादीनामनन्तानां चित्रहेतुत्वकल्पने गौरवमिति षट्स्थानपतितवर्णपर्यायेण चित्रद्रव्यमेव स्वसामग्रीप्रभवमभ्युपगन्तव्यम्, अर्थसमाजसिद्धधर्मस्यापि तथा भवत्वकार्यतावच्छेदकत्वस्वीकारादिति, चतुश्चत्वारिंशत्तमश्लोकमवतारयति अनेनैवेति, साङ्ख्यप्रधानमुपयंस्त्रिगुणं विचित्रां इत्यादिश्लोको ग्रन्थकृतैव व्याख्यात इति नेह विव्रीयते। साङ्ख्य इति साङ्ख्यो द्विविधः, सेश्वरनिरीश्वरभेदात् तत्र सेश्वरसाङ्ख्यशास्त्रप्रणेता कपिलमुनिः, निरीश्वरशास्त्रप्रणेता च पतञ्जलिमुनिः, कपिलमुनिना प्रणीतं साङ्ख्यशास्त्रेण गीयते, पतञ्जलिमुनिना प्रणीतं योगशास्त्रेणाख्यायते, पञ्चविंशतितत्त्वाभ्युपगन्तृत्वञ्चोभयोस्साम्यम्, अत एव समानतन्त्रत्वमिति साङ्ख्यपदेन पातञ्जलदर्शनानुसारिणोऽपि ग्राह्याः, तेन न न्यूनतादोषः, परस्परविरुद्धेति, विरुद्धत्वाश्चात्र प्रकाशोपष्टम्भावरणादिविरुद्धकार्यकारित्वेन ज्ञेयम्, मूलस्थस्य विचित्रामित्यस्यार्थमाह एकानेकग्राहकग्राह्याकारकरम्बितामिति, एकं यद् ग्राहकाकारं चित्रज्ञानस्वरूपं अनेकं यद् ग्राह्याकारं नीलपीताद्याकारं तत्करम्बितां तत्संवलितामित्यर्थः। बौद्धमतेऽपि नीलपीते इत्याद्याकारं ज्ञानं न विलक्षणचित्राकारं किन्तु नीलपीतात्मकग्राह्याकारं सत् ज्ञानस्वरूपग्राहकाकारमित्यभ्युपेयम्, तथा च नीलपीतयोर्ग्राहकं यज्ज्ञानस्वरूपं तदेकरूपमिति ज्ञानस्य स्वसंवेदनरूपत्वेन तदाकारं तत्संवेदनरूपं नीलपीते इति ज्ञानमप्येकम्, नीलाकारस्य पीताकारस्य च ग्राह्याकारस्य भिन्नत्वेन तद्ग्रहणात्मकं तदनेकरूपमित्येकानेकरूपमिति स्याद्वादावतार एवेतिभावः। ननु मूलप्रकृतिचित्रज्ञानचित्ररूपादीनामेकानेकरू-

विरयाविरइं न उ लहंति ॥२॥ तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं। देसिक्कदेसविरइं चरित्तलम्भं नउ लहंति ॥३॥" इति। ततः कथमिदानीं तेषामुपशमो भण्यते ? तदसत्, सम्यक्सिद्धान्तापरिज्ञानात्। पूर्वं हि तेषां क्षयोपशम एवासीत्, नोपशमः, तत इदानीमुपशमः क्रियते। ननु क्षयोपशमोऽप्युदिते कर्मांशे क्षीणे अनुदिते चोपशान्ते भवति, उपशमोऽपि चेत्थंभूत एव, ततः कोऽनयोः प्रतिविशेषो ? येनैवमुच्यते यत्पूर्वं क्षयोपशम आसीन्नोपशम इति। उच्यते-इह क्षयोपशमे तदावारकस्य कर्मणः प्रदेशतोऽनुभावोऽस्ति, उपशमे तु नेति प्रतिविशेषः। आह च भाष्यकृत्—"वेएइ संतकम्मं खओवसमिएसु नाणुभावं सो। उवसंतकसाओ पुण वेएइ न संतकम्मंपि ॥१॥" ननु यदि सत्यपि क्षयोपशमेऽनन्तानुबन्ध्यादिकषायमिथ्यात्वानां प्रदेशतोऽनुभवोऽस्ति, तर्हि कथं न सम्यक्त्वादिगुणविघातो भवति ? तदुदये ह्यवश्यं सम्यक्त्वादिलाभः सन्नप्यपगच्छति, यथा सासादनसम्यग्दृष्टेरिति, नैष दोषः, प्रदेशतोऽनुभवस्य मन्दानुभावात्, मन्दानुभावो ह्युदयो न स्वावार्यगुणविघातमाधातुमलं, यथा चतुर्ज्ञानिनो मतिज्ञानावरणादीनां विपाकतोऽप्युदयः। तथाहि-मतिज्ञानावरणादिकं कर्म ध्रुवोदयं, ध्रुवोदयत्वाच्चावश्यं विपाकतोऽनुभवनीयं, विपाकानुभवापेक्षयैव ध्रुवोदयकर्मत्वाभिधानात्। अथ च तत्सकलचतुर्ज्ञानिनो न मत्यादिज्ञानविघातकृद्भवति, तदुदयस्य मन्दानुभावत्वात्। तद्यदि विपाकतोऽप्यनुभूयमानं मन्दानुभावोदयत्वान्न स्वावार्यगुणविघाताय प्रभवति, ततः प्रदेशतोऽनुभूयमानमनन्तानुबन्ध्यादि सुतरां न भविष्यति, तदुदयस्यातीवमन्दानुभावत्वात्। तथा चाह भाष्यकृत्—"मिच्छत्ताइदंसणाइघाओ न होइ संजोयणाइ वेययओ। मंदाणुभावयाए जहाणुभावंमिवि कम्मिंमि ॥१॥ निच्चोदण्णंपि जहा सयलचउणाणिणो तदावरणं। न विघायमंदयाए, पएसकम्मं तहा नेयं ॥२॥"। उपशान्तकषायवीतरागछद्मस्थगुणस्थानं च जघन्यतः समयमात्रमुत्कर्षतश्चान्तर्मुहूर्त्तं कालं यावत्, तत ऊर्द्ध्वं नियमात्प्रतिपातः। स च द्विधा, भवक्षयेणा-

चत्वारिंशत्तमश्लोकमवतारयति सिंहावलोकितेनेति, अव्याप्यवृत्तिगुणिभेदमित्यादिश्लोकोपि सुस्पष्टं व्याख्यात इति नेह व्याख्यायते। उदीर्येत्यत्र प्रकल्प्येत्यत्र च समानकर्तृके क्त्वाप्रत्ययविधानादुदीरणाक्रियायाः प्रकल्पनाक्रियायाश्च समानकर्तृकोत्तरक्रियासापेक्षत्वाद् विश्रान्तिरूपोत्तरक्रियाप्रदर्शनायाध्याहारमाह विश्रान्त इति, नव्याभावमित्यत्र समासान्तरभ्रमो माभूदिति कर्मधारयसमासज्ञापनाय अभावपदसमानाधिकरणतया नव्यमित्युपात्तम्, समनियताभावानामैक्यमते सर्वेषामेव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावानां केवलान्वयिनो गगनाभावस्य स्वरूपतया गगनाभावाभ्युपगतौ तेप्यऽभ्युपगता एवेति तेषां स्वरूपे न विवादः, किन्तु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्व एव, अतएवोक्तमन्यत्र—विवादोप्यतिरिक्तायाम्प्रतियोगितायामेवेति, तदंशस्य न्यायानुयायिनां प्राचामननुमतत्वेन नव्यत्वं नत्वभावांशस्येत्यभिसन्धाय नव्यमिति व्याख्यातं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकमिति ॥ सङ्क्षेपेण मूलार्थं प्रदर्श्य भावार्थं प्रदर्शयति—

अयं भावः—मूले वृक्षः कपिसंयोगी न शाखायामित्यबाधितानुभवबलात् संयोगितद्भेदयोरवच्छेदकभेदेन समावेशः परेण साधितः, तथैव स्वद्रव्याद्यपेक्षया घटः सन् परद्रव्याद्यपेक्षया चासन्नित्यबाधितानुभवेन सदसतोरपि तादात्म्यसमावेशः किं न कल्प्यते, प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वेऽतिप्रसङ्गस्यानुभवविनिगमनेनैव निवारणात्। प्रतियोग्यनवच्छेदकमपि किञ्चिदेव कस्यचिदभावस्य वृत्तावच्छेदकमिति।

अयं भाव इति, सदसतोरपि तादात्म्यसमावेश इति—यथा शाखावच्छेदेन य एव वृक्षःकपिसंयोगी स एव मूलावच्छेदेन कपिसंयोगिभेदवानिति कपिसंयोगितद्भेदयोर्भिन्नावच्छेदेन सामानाधिकरण्यमुक्ताबाधितानुभवबलात्साधितं तथैवोक्ताबाधि-

प्रत्यन्तरेऽधिकम्)। तत्र क्षपकश्रेणिमारोहन् प्रथमतोऽनन्तानुबन्धिनः क्षपयति, ततो मिथ्यात्वं, ततः सम्यग्मिथ्यात्वं, ततः सम्यक्त्वं, एतेषां च क्षपणं स्वयमेवाचार्येणाग्रे सविस्तरमभिधास्यते, तत इह न विस्तार्यते (वितायते)। इह यदि बद्धायुः क्षपकश्रेणिमारभते, अनन्तानुबन्धिक्षयानन्तरं च मरणसंभवतो व्युपरमते, ततः कदाचिन्मिथ्यादर्शनोदयतो भूतोऽप्यनन्तानुबन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्याविनाशात्। क्षीणमिथ्यादर्शनस्तु नोपचिनोति बीजाभावात्। क्षीणसप्तकस्त्वप्रतिपतितपरिणामोऽवश्यं त्रिदशेषु मध्ये समुत्पद्यते, प्रतिपतितपरिणामस्तु नानामतिसम्भवाद्यथापरिणामं सर्वगतिभाग्भवति। यत उक्तं—"बद्धाऊ पडिवन्नो पढमकसायक्खए जइ मरेज्जा। तो मिच्छत्तोदयओ चिणेज्ज भूओ न खीणंमि ॥१॥ तम्मि मओ जाइ दिवं तप्परिणामाय सत्तए खीणे। उवरयपरिणामो पुण पच्छा नाणामइगईओ ॥२॥" बद्धायुष्कोऽपि यदि तदानीं कालं न करोति, तथापि सप्तके क्षीणे नियमादवतिष्ठते, न चारित्रमोहक्षपणाय यत्नमादधाति, अत आह—"बद्धाऊ पडिवन्नो नियमा खीणंमि सत्तए ठाइ"। अत्राह—ननु यदि दर्शनत्रिकमपि क्षयमुपगतं तर्हि किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टिः? उच्यते—सम्यग्दृष्टिः, सम्यग्दर्शनाऽभावे सम्यग्दृष्टित्वमनुपपन्नमिति चेत् तदसत्, अभिप्रायापरिज्ञानात्। इह निर्मदनीकृतमदनकोद्रवकल्पा अपगतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव यत्सम्यग्दर्शनं तदेव क्षीणं, यत्पुनरात्मपरिणतिस्वभावं तत्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणं, अपि च तदतीवश्लक्ष्णशुद्धाभ्रपटलविगमे मनुष्यस्य दृष्टिरिव विशुद्धतरस्वरूपं भवति, आह च—"खीणंमि दंसणतिए किं होइ तओ तिदंसणाइओ। भन्नइ सम्मद्दिट्ठी सम्मत्तखए कुओ सम्मं ॥१॥ निव्वलियमयणकोद्दवरूवं मिच्छत्तमेव सम्मत्तं। खीणं न उ जो भावो सद्दहणालक्खणो तस्स ॥२॥ सो तस्स विसुद्धयरो जायइ सम्मत्तपोग्गलक्खयओ। दिट्ठिव्व सण्हसुद्धब्भपडलविगमे मणुस्सस्स ॥३॥"। यदि पुनरबद्धायुः क्षपकश्रेणिमारभते, ततः सप्तके

स्वद्रव्याद्यपेक्षया घटोस्तीत्यस्य स्वद्रव्याद्यवच्छेदेनास्तित्ववान् घट इत्येवं स्वद्रव्यादेः प्रतियोग्यनुयोगितावच्छेदकत्वं परिकल्प्य योऽर्थः पूर्वं कृतः सोऽत्र नाद्रियते किन्तु स्वद्रव्याद्यवच्छिन्नं यदस्तित्वं सखण्डधर्मविशेषरूपं तदाश्रयो घट इत्यर्थः, परद्रव्यादिना घटोऽसन्नित्यस्यापि परद्रव्याद्यवच्छेदेनाऽस्तित्वाभाववान् घट इत्येवमभावानुयोगितावच्छेदकत्वं परिकल्प्यार्थो नाद्रियते किन्तु परद्रव्याद्यवच्छिन्नं यदस्तित्वनिष्ठप्रतियोगित्वं तन्निरूपकाभावाश्रयो घट इत्यर्थ इत्याशयेनाह यदि वेत्ति, तथा अपेक्ष्यत्वम्, द्वितीयः द्वितीयभङ्गविषयः। न च नैयायिकम्मन्यस्यापि शिरोमणेरननुमतोऽयमभाव इत्याह—

अभ्युपगम्यते चायं, यदि च घटत्वेन पटो नास्तीति प्रत्ययः स्वरसवाही लोकानां तदा व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाववारणं गीर्वाणगुरोरप्यशक्यमिति वदता परेणापि, एवं प्रतीतिबलसिद्धव्यधिकरणधर्मावच्छिन्नाधिकरणतावच्छेकाभावमादायापि द्वितीयभङ्गः समर्थनीयः, नानागमभङ्गबहुलत्वात् भगवत्प्रवचनस्य, गमाः प्रतिपत्तिप्रकारा इति विवेकः।

अभ्युपगम्यते चेति, स्वरसवाही यथार्थः। परेणापि शिरोमणिनापि। घटत्वेन पटोनास्तीतिप्रतीत्या घटत्वावच्छिन्नपटनिष्ठप्रतियोगिकाभावविषयिकया सिद्धस्य व्यधिकरणधर्मावच्छिन्नाभावस्येव शशशृङ्गे गोवृत्तित्वं नास्तीत्यादिप्रतीत्या शशीयत्वावच्छिन्नशृङ्गनिष्ठाधिकरणतानिरूपकगोवृत्तित्वाभावपर्यवसानकशशीयत्वेन शृङ्गे गोवृत्तित्वाभावविषयिकया सिद्धस्य व्यधिकरणधर्मावच्छिन्नानुयोगितानिरूपकाऽभावस्याप्यवबोधको द्वितीयभङ्गस्समर्थनीय इति परद्रव्याद्यपेक्षया घटोऽसन्नित्यस्य परद्रव्याद्यवच्छिन्नाधिकरणतानिरूपकसत्त्वाभावाश्रयो घट इत्यर्थकत्वेनाप्युपपादनं युक्तियुक्तमेवेत्याह एवं प्रतीतिबलसिद्धेति, अधिकरणता-

वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति, तदेवं क्षपितो नपुंसकवेदः। ततोऽन्तर्मुहूर्त्तमात्रेण कालेन स्त्रीवेदोऽप्यनेनैव क्रमेण क्षप्यते। ततः षड्नोकषायान् युगपत्क्षपयितुमारभते, ततः प्रभृति च तेषामुपरितनस्थितिगतं दलिकं न पुरुषवेदे संक्रमयति, किं तु संज्वलनक्रोधे, तेऽपि च पूर्वोक्तविधिना क्षिप्यमाणा अन्तर्मुहूर्त्तमात्रेण कालेन निःशेषाः क्षीणाः, तत्समयमेव च पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः, समयोनावलिकाद्विकबद्धं मुक्त्वा शेषदलिकस्य क्षयश्च, ततोऽसाविदानीमवेदको जातः। एवं पुरुषवेदेन क्षपकश्रेणिप्रतिपन्नस्य द्रष्टव्यम्। यदा तु नपुंसकवेदेन क्षपकश्रेणिं प्रतिपद्यते, तदा प्रथमतः स्त्रीवेदनपुंसकवेदौ युगपत्क्षपयति। स्त्रीवेदनपुंसकवेदक्षयसमकालमेव च पुरुषवेदस्य बन्धो व्यवच्छिद्यते, तदनन्तरं च पुरुषवेदहास्यादिषट्के युगपत्क्षपयति। यदा तु स्त्रीवेदेन प्रतिपद्यते, तदा प्रथमतो नपुंसकवेदं, ततः स्त्रीवेदं, स्त्रीवेदक्षयसमकालमेव च पुरुषवेदस्य बन्धव्यवच्छेदः, ततोऽवेदकः पुरुषवेदहास्यादिषट्के युगपत्क्षपयति। सम्प्रति पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नमधिकृत्य प्रस्तुतमभिधीयते—क्रोधं वेदयमानस्य सतस्तस्य क्रोधाद्धायास्त्रयो विभागा भवन्ति, तद्यथा—अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च। तत्राश्वकर्णकरणाद्धायां वर्त्तमानः प्रतिसमयमनन्तानि अपूर्वस्पर्द्धकानि चतुर्णामपि संज्वलनानामन्तरकरणस्योपरितनस्थितौ करोति। अस्यां चाश्वकर्णकरणाद्धायां वर्त्तमानः पुरुषवेदमपि समयोनावलिकाद्विकेन कालेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति, तदेवं क्षीणः पुरुषवेदः। अश्वकर्णकरणाद्धायां च समाप्तायां किट्टिकरणाद्धायां वर्त्तते, तत्र च वर्त्तमानः सन् चतुर्णामपि संज्वलनानामुपरितनस्थितिगतस्य दलिकस्य किट्टीः करोति। ताश्च किट्टयः परमार्थतोऽनन्ता अपि स्थूरजातिभेदापेक्षया द्वादश कल्प्यन्ते, एकैकस्य कषायस्य तिस्रस्तिस्रः, तद्यथा—प्रथमा द्वितीया तृतीया च। एवं क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। यदा तु मानेन प्रतिपद्यते, तदा उद्वलनवि-

कथञ्चिन्नास्तित्वप्रतीत्या सोपशाम्यतीति स सार्थक एवं, एकान्तवचनं मिथ्यावचनमिति जिनप्रवचनतत्त्ववेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि वाक्यं स्यात्कारपुरस्सरं भाषन्ते, न तु जातुचिदपि स्यात्कारविरहितम्, यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वत्र सर्वदा साक्षात् स्यात्पदं प्रयुञ्जते, तथापि तत्राऽप्रयुक्तोपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्यः, प्रयोजकस्य कुशलत्वात्, उक्तञ्च—"अप्रयुक्तोपि सर्वत्र, स्यात्कारोऽर्थात्प्रतीयते। विधौ निषेधेऽन्यत्रापि, कुशलश्चेत्प्रयोजकः ।१। इति, अत्रान्यत्रापीति अनुवादातिदेशादिवाक्येषु, आद्येन द्वितीयेन च कथञ्चिदस्तित्वे कथञ्चिन्नास्तित्वे च ज्ञाते प्राधान्येन तदुभयमस्ति न वेति संशयमूलकतद्धर्मजिज्ञासामूलकतद्धर्मप्रश्नसमुद्भवे स्यादस्ति स्यान्नास्तीत्याकारकस्य तृतीयभङ्गस्य समुद्भवः, एवमवक्तव्यत्वादिधर्मजिज्ञासामूलभूतसंशयनिवर्त्तकानां चतुर्थादिभङ्गान्तराणां समुद्भवो ज्ञातव्यः, एवं भेदाऽभेदनित्यत्वाऽनित्यत्वादिविरुद्धधर्मापेक्षाभेदप्रयोज्याविरोधद्योतकस्यात्पदलाञ्छितसप्तभङ्ग्यन्तररचना ज्ञातव्येति भावः। विज्ञानवादिमतं न प्रमाणमिति प्रकृतज्ञापनार्थं षट्चत्वारिंशत्तमश्लोकमधिकुर्वन्नाह—अथेति

विश्वं व्यलीकमनुपाख्यमलं न बौद्ध, सोढुं विचारमिति जल्पसि यद्विचारात्॥
कः कीदृगेष इति पृष्ट इह त्वदीयैर्यद्वक्ति तद्वठर भौतविचारकल्पम्॥ ४६॥

विश्वमित्यादिमूलम्, अत्र बौद्धेति सम्बोधनपदम्, जल्पसीति क्रियापदम्, कर्तृपदञ्च त्वमितिशेषः। यद्विचारादित्यत्र यच्छब्देन विचारपदस्य कर्मधारयसमास इति तेन विचारस्य संशब्दनम्, आश्रित्यार्थे पञ्चमी, तथा च यं विचारमाश्रित्येत्यर्थः, अस्य च जल्पसीत्यत्रान्वयः, जल्पनक्रियायास्सकर्मकत्वात्तत्कर्माभिलापिन इति शब्दसामिलाप्यमुल्लिखति विश्वं व्यलीकमनु-

शेषस्य क्रोधशेषस्येव माने, मायायां प्रक्षिप्तत्वात्। ततो मायायाः प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावत् यावदन्तर्मुहूर्त्तमात्रम्। संज्वलनमानस्य च बन्धादौ व्यवच्छिन्ने तस्य सम्बन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण मायायां सर्वं प्रक्षिपति। मायाया अपि च प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततोऽनन्तरसमये मायाया द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावत् यावत्समयाधिकावलिकामात्रं शेषः, ततोऽनन्तरसमये तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावत् यावत्समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मायाया बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्याः समयोनावलिकाद्विकबद्धमात्रमेव, शेषस्य गुणसंक्रमेण लोभे प्रक्षिप्तत्वात्। ततोऽनन्तरसमये लोभस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावत् यावदन्तर्मुहूर्त्तम्। सञ्ज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति तस्याः सम्बन्धि दलिकं समयोनावलिकमात्रेण कालेन गुणसंक्रमेण लोभे सर्वं संक्रमयति। सञ्ज्वलनलोभस्य च प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकामात्रशेषं जातं, ततोऽनन्तरसमये लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च। तां च वेदयमानस्तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावत् यावद् द्वितीयकिट्टिदलिकस्य प्रथमस्थितीकृतस्य समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये सञ्ज्वलनलोभस्य बन्धव्यवच्छेदो बादरकषायोदयोदीरणाव्यवच्छेदोऽनिवृत्तिबादरसम्परायगुणस्थानककालव्यवच्छेदश्च युगपज्जायते। ततोऽनन्तरसमये सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तदानीमसौ सूक्ष्मसम्पराय उच्यते, पूर्वोक्ताश्चावलिकास्तृतीयतृतीयकिट्टिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु

तत्तद्धर्मारोपहेतूनाह—

आद्ये कृष्णत्वेनान्धकारारोपः, आस्यप्रत्यासन्नत्वेन दन्तयोर्भक्ष्यमाणश्वेतमूलकत्वारोपः, द्वितीये जलवाहविकल्पेऽपि दन्तयोरेव बलाकारोपः, मूत्रधारायां वर्षणारोपः बृंहिते गर्जितारोपः, तृतीये इदंत्वावच्छेदेन बान्धवपदवाच्यत्वारोपः, चतुर्थो विकल्पश्छायाच्छायावतोऽर्व्यत्ययभ्रान्त्या, दूषितं च तदन्येन भौतेन, नाद्यः, तस्य शूर्पयुगलप्रस्फोटनाभावात्, अत्र कर्णयोः शूर्पत्वारोपः, न द्वितीयः, तस्य स्तम्भचतुष्टयाभावात्, अत्र पादेषु स्तम्भत्वारोपः, न तृतीयः, तस्य लगुडभ्रामणाभावात्, अत्र द्विरदकरे लगुडत्वारोपः, न चतुर्थः, तस्य नरशिरःशतोद्गिरणाभावात्, अत्र गजपुरीषपिण्डेषु नरशिरस्त्वारोपः, पायोरास्यत्वारोपेणोत्सर्जने उद्गिरणभ्रान्तिरिति, ततो न किञ्चिदेतदिति, किमेतावता द्विपस्वरूपं व्यावर्त्तते,

आद्य इति, बृंहिते गजगर्जने, गर्जितारोपः मेघशब्दारोपः, नाद्य इति अन्धकारस्य शूर्पयुगलप्रस्फोटनाभावात् अस्य च द्विरदस्य शूर्पयुगलप्रस्फोटनभावान्नायमन्धकार इत्यर्थः। जलवाहस्य स्तम्भचतुष्टयाभावादस्य च स्तम्भचतुष्टयभावान्नायं जलवाह इत्याह न द्वितीय इति, बान्धवस्य लगुडभ्रामणाभावात् अस्य च लगुडभ्रामणान्नायं बान्धवशब्दवाच्य इत्याह न तृतीय इति, न चतुर्थ इत्यत्र निषेधे हेतुमाह तस्येति छायास्वरूपस्येत्यर्थः। उपमाने दर्शितां प्रक्रियां उपमेये सङ्गमयति

एवं विचारासहेन विचारेण जगदपि नालीकतामनुभवितुमुत्सहत इति, आद्ये स्वयमेव विलीनमलीकादिवादैर्नोत्तरप्रतीक्षापि, तर्कप्रमाणवाक्यानां पारमार्थिकत्वे विषयवक्तृप्रयोजनादीनामपि तथात्वस्यावर्जनीय-

'सयोगिकेवलिगुणस्थानमिति'—योगो वीर्यपरिस्पंद इत्यनर्थांतरं, सह योगेन वर्त्तते ये ते सयोगा मनोवाक्कायाः, ते यस्य विद्यन्ते स सयोगी। तत्र भगवतः काययोगश्चंक्रमणनिमेषोन्मेषादिः, वाचिको देशनादिः, मानसिको मनःपर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य सतो मनसैव देशना। ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यायज्ञानेनाऽवधिज्ञानेन च पश्यंति, दृष्ट्वा च ते विवक्षितवस्त्वालोचनाकारान्यथानुपपत्त्या अलोकस्वरूपादिकमपि बाह्यमर्थं पृष्टमवगच्छंति। उक्तं च—'जाणइ वज्झेणुमाणाओ'। केवलं ज्ञानं दर्शनं चोक्तस्वरूपं विद्यते यस्य स केवली, सयोगी चासौ केवली च सयोगिकेवली, तस्य गुणस्थानं सयोगिकेवलिगुणस्थानम्। सयोगिकेवली च जघन्येनांतर्मुहूर्त्तं कालं यावद्भवति, उत्कर्षतो देशोनां पूर्वकोटिं। सर्वश्च सयोगिकेवली समुद्घातादर्वाक् आयोजिकाकरणमारभते, तथा च केवलिसमुद्घातप्रक्रियां विभणिषुः समुद्घातशब्दव्याख्यानपुरस्सरमाह भाष्यकृत्—"तत्थाउयसेसाहियकम्मसमुग्घायणं समुग्घाओ। तं गंतुमणो पुव्वं आउज्झियकरणमज्झेई ॥१॥"। अथ आयोजिकाकरणमिति कः शब्दार्थः? उच्यते—'आङ् मर्यादायां' आ मर्यादया केवलिदृष्टया योजनं व्यापारणं शुभानां योगानामिति गम्यते, आयोजिका, तस्याः करणमायोजिकाकरणम्। केचिदावर्जितकरणमित्याहुस्तत्रायमन्वर्थः—आवर्जितो नामाभिमुखीकृतः, तथा च लोके वक्तारः—आवर्जितोऽयं मया, संमुखीकृत इत्यर्थः। ततश्च तथाभव्यत्वेनावर्जितस्य मोक्षगमनं प्रत्यभिमुखीकृतस्य करणं क्रिया शुभयोगव्यापारणं आवर्जितकरणम्। अपरे आवश्यककरणमित्यूचुः, तत्राप्ययमन्वर्थः—आवश्यकेनावश्यंभावेन करणमावश्यककरणं, तथाहि—समुद्घातं केचित्कुर्वंति, केचिच्च न कुर्वंति, इदं त्वावश्यककरणं सर्वेऽपि केवलिनः कुर्वंति।

आयोजिकाकरणानंतरं च कश्चित्कर्मणां समीकरणार्थं समुद्घातं करोति, यस्य वेदनीयादिकमायुषः सकाशादधिकतरं भवति,

प्रयोजकतायां मानाभावः, विना च प्रमाणप्रतीघातं क्व बाधोदयः, योग्यताविवरणपरत्वे ह्रदो वह्निमानित्युदाहृत्य शशो विषाणीति नोदाहरेदिति, त्रिष्वपि क्रमेणारुचिबीजानीति गुणानन्दः।

अश्लिष्टार्थमिति नानार्थानभिधायकं स्पष्टार्थमिति यावत्, कथाभिप्रायेणेति अत्र कथापदेन जल्पवितण्डयोरेव ग्रहणं, नतु वादस्य, तत्र तत्त्वनिर्णयेच्छया प्रवृत्तेश्छलाद्युपन्यासस्याऽसामयिकत्वादिति ध्येयम्, अन्यथा कथायां श्लिष्टार्थवाक्योपन्यासे, सजातीयान्वयदर्शनमिति—ययोरन्वयबोधोऽपेक्षितस्तत्सजातीययोरन्वयदर्शनं योग्यता, यथा ययोर्नीलघटयोरन्वयबोधोऽपेक्षितस्तत्सजातीययोर्नीलान्तरघटान्तरयोस्संसर्गज्ञानमित्यर्थः। अयोग्यत्वेपि प्रमाणान्तरप्रतिघातस्थलेऽर्थाऽबाधरूपयोग्यताविरहेपि, उद्भटत्वात् कार्यप्रतिरोधे प्रबलत्वात्, प्रमाणान्तराप्रतिहतमिति विशेषणं न स्वतन्त्रं, किन्तु योग्यतास्वरूपोपदर्शकमेवेति मतान्तरमाह योग्यताविवरणमेवेति। उत्तरमिति प्रमाणान्तराप्रतिहतमिति विशेषणमित्यर्थः। प्रमाणान्तराऽप्रतिहतमिति विशेषणस्य सार्थकत्वे प्रकारत्रयमुपदर्शितम्, तत्र प्रकारत्रयेपि गुणानन्दोक्तान्यरुचिबीजानि यथाक्रममाह बाधाभावस्येत्यादिना।

स्ववचनव्याघातः स्ववचनयोर्मिथो विरुद्धार्थत्वम्, स्वक्रियाव्याघातः स्वकृतिसाध्येनाहं मूक इति वाक्येनैतदर्थबाधः। स्वज्ञानव्याघातः स्वक्रियर्येमं न जानामीति वाक्येनाक्षिप्तेनेदमाकारज्ञानेन तदर्थे बाधः, स्वार्थस्य कर्णप्रविष्टगजगर्जननिराकरणार्थभेषजाभिधानस्य प्रतिक्षेपिका युक्तिरत्यन्तासतो निवार्यस्य निराकरणार्थं भेषजाभिधानायोग्यत्वं, तदनाक्षेपकं तदज्ञापकम्, अश्रोतर्यभिधानवैफल्यं स्वार्थप्रतिक्षेपिका युक्तिरित्यन्ये।

एतदर्थबाध इति, यदि त्वं मूकस्तर्हि कथमहं मूक इत्यपि वक्तुं शक्त इति स्वक्रिययाऽहं मूक इत्युच्चारणात्मिकयाऽहं मूक इति

वेदनीयादिकर्मणामुपक्रमो मन्तव्यः। यदाह भाष्यकृत्—"उदयक्खयखओवसमोवसमा जं च कम्मुणो भणिया। दव्वाइपंचगं पइ जुत्तमुवक्कमणमओवि ॥१॥"। अत्र द्रव्यादिपंचकं प्रतीति द्रव्यक्षेत्रकालभवभावानाश्रित्य। न चैवं मोक्षोपक्रमहेतुः कश्चिदस्ति येन तत्रानाश्वासप्रसंगः, तद्धेतुरागाद्यभावात्। ततो यदुक्तं—'वेदनीयादिवच्च कृतस्यापि कर्मक्षयस्येत्यादि' न तत्समीचीनमिति स्थितम्। भूयोऽप्याह—ननु कुतो नियमो? यद्वेदनीयाद्येवायुषः सकाशादधिकस्थितिकं भवति? न तु कदाचिदपि वेदनीयादेरायुरिति?, उच्यते—तथारूपजीवपरिणामस्वाभाव्यात्। तथाहि—इत्थंभूत एवात्मनः परिणामो येनास्यायुर्वेदनीयादेः समं भवति न्यूनं वा, न तु कदाचनाप्यधिकम्। यथा तस्यैवायुषः खल्वध्रुवबन्धः, तथाहि—ज्ञानावरणादीनि कर्माण्यायुर्वर्ज्जानि सप्तापि सर्वदैव बद्ध्यंते, आयुस्तु प्रतिनियत एव काले स्वभवत्रिभागादिशेषरूपे, तत्र चैवं बंधवैचित्र्यनियमे न स्वभावादृतेऽपरः कश्चिदस्ति हेतुः, एवमिहापि स्वभावविशेष एव नियामको द्रष्टव्यः। आह च भाष्यकृत्—"असमट्ठिईण नियमो को थेवं आउयं न सेसंपि (ति), परिणामसहावाओ अद्धुववंधोव्व तस्सेव ॥१॥"। अथ समुद्घात इति कः शब्दार्थः?। उच्यते—सम्यक् अपुनर्भावेन उत्प्राबल्येन घातो वेदनीयादिकर्मणां विनाशो यस्मिन् क्रियाविशेषे स समुद्घातः, तं च समुद्घातं कुर्वन् प्रथमसमये बाहल्यतः स्वशरीरप्रमाणमूर्द्धमधश्च लोकांतपर्यंतमात्मप्रदेशानां दंडमारचयति, द्वितीयसमये पूर्वापरं दक्षिणोत्तरं वा कपाटं, तृतीये मंथानं, चतुर्थेऽवकाशांतरपूरणं, पंचमेऽवकाशान्तराणां संहारं, षष्ठे मथः, सप्तमे कपाटस्य, अष्टमे स्वशरीरस्थो भवति। तत्र दंडसमयात्प्राक् या पल्योपमासंख्येयभागमात्रा वेदनीयनामगोत्राणां स्थितिरासीत्, तस्या बुद्ध्या असंख्येयभागाः क्रियंते, ततो दंडसमये दंडं कुर्वन्नसंख्येयान् भागान् हंति, एकोऽसंख्येयभागोऽवतिष्ठते। यश्च प्राक् कर्मत्रयस्यापि रसस्तस्याप्यनन्ता भागाः क्रियन्ते, ततस्तस्मिन् दण्डसमये असातवेदनीयप्रथमवर्जसंस्थानपञ्चक-

नष्टि–विशिष्टेति, मूलावच्छिन्नेत्यर्थः। तत्परिकरश्च तर्क इति अर्थप्रतिपत्तेरङ्गमित्यनुषज्यते। तत्परिकरः साधनपरिकरः। सत्तर्कस्यैव विचाराङ्गत्वं न तर्काभासस्येति सत्तर्कस्वरूपप्रतिपादनायाह सोपीति, तर्कोपीत्यर्थः। व्याप्तिबलमित्यादि, व्याप्यव्यापकभावमूलको व्याप्यारोपेण व्यापकारोपलक्षणोऽनिष्टापादनात्मक इत्यर्थः। द्विविधस्यापि यथाक्रमं दृष्टान्तमाह यथेति, तमेव परं पुरुषान्तरमेव, अन्यत्र तदेवेति पाठः, अस्य च उदकमेवेत्यर्थः। एतत्पक्षे परमित्यस्य पुरुषान्तरमित्यर्थः, इतरः व्याप्तिबलविकलोऽनिष्टप्रसङ्गः, अत्राप्यनिष्टं पूर्ववद्द्विविधमिति क्रमेण द्रष्टान्तद्वयमाह—

यथा यदि जलं पिपासां नाशमयिष्यद्रूपवदपि नाभविष्यत्, यथाकाशं, यदि च तमेव परमन्तरधक्ष्यत् मामपि सुरभिमकरिष्यदिति, दूषणमपि स्वप्रतिक्षेपकयुक्तेरनाक्षेपकं दूष्यासाधकत्वाविनाभूतं सिद्धम्, यथाऽग्निमत्त्वे साध्ये प्रमेयत्वमहेतुः, अनैकान्तिकत्वादित्यादि। अन्यथा तु तदाभासं, यथा धूमोऽयं नाग्निसाधकः सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्, प्रमेयत्वाद्विरुद्धत्वाद्वेति। नन्वीदृशयोः साधनदूषणयोरेव विचाराङ्गत्वे कथं प्रत्यक्षाद्युपन्यासः कथायां स्यादिति चेत्, तस्याप्यनुमानच्छाययैव विचाराङ्गत्वात्, तर्कमनन्यथासिद्धिं च पुरस्कृत्यैव प्रवृत्तेरिति॥

यथा यदि जलमित्यादि, अन्यथेति—स्वप्रतिक्षेपकयुक्तेराक्षेपकं दूष्याऽसाधकत्वाऽविनाभूतत्वाभाववदसिद्धं दूषणं तु दूषणाभासमित्यर्थः, धूमेऽग्निसाधकत्वाभावसाधकस्सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वादिति हेतुर्न धूमेऽग्निसाधकत्वाभावसाधकः सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वादितिरीत्या स्वप्रतिक्षेपकयुक्तेराक्षेपकत्वाद् दूषणाभासः, प्रमेयत्वादिति च हेतुर्दूष्यीभूते धूमेऽसाधकत्वा

बुद्ध्या यथाक्रमं संख्येया अनन्ताश्च भागाः क्रियन्ते, ततोऽवकाशान्तरसंहारसमये स्थितेः संख्येयान् भागान् हन्ति, एकं संख्येयभाग शेषीकरोति, अनुभागस्य चानन्तान् भागान् हन्ति, एकं मुञ्चति। एवमेतेषु पञ्चसु दण्डादिसमयेषु प्रत्येकं सामयिकं कण्डकमुत्कीर्णं, समये समये स्थितिकण्डकानुभागकण्डकघातनात्। अतः परं षष्ठसमयादारभ्य स्थितिकण्डकमनुभागकण्डकं चान्तर्मुहूर्त्तेन कालेन विनाशयति। षष्ठादिषु च समयेषु कण्डकस्य प्रतिसमयमेकैकं शकलं तावदुत्किरति, यावदन्तर्मुहूर्त्तचरमसमये सकलमपि तत्कण्डकमुत्कीर्णं भवति। एवमान्तर्मौहूर्त्तिकानि स्थितिकण्डकान्यनुभागकण्डकानि च घातयन् तावद्वेदितव्यो, यावत्सयोग्यवस्थाचरमसमयः। सर्वाण्यपि चामूनि स्थित्यनुभागकण्डकान्यसंख्येयान्यवगन्तव्यानि। अयं च समुद्घातविधिरावश्यकचूर्ण्यनुसारतोऽभिहितः। यस्य पुनः केवलिनो वेदनीयादिकर्मत्रयमायुषा सह समस्थितकं, स समुद्घातं न गच्छति। यत आह भगवानार्यश्यामः प्रज्ञापनायां—

जस्साउएण तुल्लाइं, बंधणेहिं ठिईइ य। भवोवग्गहकम्माइं न समुग्घायं स गच्छइ ॥१॥ अगतूण समुग्घायमणंता केवलीजिणा। जरमरणविप्पमुक्का सिद्धिं वरगइं गया ॥२॥"। अत्र 'बंधणेहिं ति' प्रदेशैः, स्थित्येति वेदनकालेन, गत्वा चागत्वा च समुद्घातम्।

लेश्यानिरोधार्थं योगनिमित्तबन्धनिरोधार्थं च योगनिरोधमवश्यं कुरुते। आह च—"स ततो योगनिरोधं, करोति लेश्यानिरोधमभिकाङ्क्षन्। समयस्थितिं च बंधं, योगनिमित्तं स निरुरुत्सन् ॥१॥ समये समये कर्मादाने सति संततेर्न मोक्षः स्यात्। यद्यपि हि विमुच्यंते, स्थितिक्षयात्पूर्णकर्माणि ॥२॥ नो कर्मणा (णो) हि वीर्यं, योगद्रव्येण भवति जीवस्य। तस्यावस्थानेन तु, सिद्धः समयस्थितेर्बन्धः ॥३॥"। अत्र बन्धस्य समयमात्रस्थितिकता बन्धसमयमतिरिच्य वेदितव्या। योगनिरोधं कुर्वन् प्रथमतो बादरकाययोगबलादन्तर्मुहूर्त्तमात्रेण बादरवाग्योगं निरुणद्धि, तन्निरोधाऽनन्तरं चान्तर्मुहूर्त्तं स्थित्वा बादरकाययोगोपष्टम्भादेव बादरमनोयोगमन्तर्मुहूर्त्तमात्रेण

प्यनुमानानि स्युस्तदा यस्मिन् कस्मिंश्चिद्वस्तुनि साध्यसिद्धौ चरितार्थत्वात् वस्तुमात्रेऽभिमता साध्यसिद्धिर्न स्यादिति पक्षतावच्छेदकावच्छेदेनैवोक्तानुमानान्यभ्युपगन्तव्यानि, तथा च पक्षतावच्छेदकीभूतस्य वस्तुत्वपर्यवसायिनः किञ्चित्त्वस्योक्तप्रतिज्ञास्वपि विद्यमानत्वेन तत्राप्युक्तहेतुभ्यः नास्तित्वासत्यत्वाद्यापत्तिस्स्यादिति भावः, इष्टापत्त्याऽऽशङ्कते—

इष्यत एवेदमिति चेत्, न, इच्छामात्रेण व्याघातानिवृत्तेः। यदि हि न कश्चिदस्तीति प्रतिज्ञार्थः प्रतिज्ञां स्पृशेत् कथमयमर्थः प्रत्येतव्यः, न चेत्, कथं सा उपपन्नाऽसतीत्यर्थः। तदनुपपन्नत्वे च कथं प्रतिज्ञार्थ उपपद्येत, तदिदमायातं स्वविषमूर्च्छिता भुजङ्गी दशतीति, एवं प्रतिज्ञायाः साधनाङ्गत्वेनोदाहरणादेः सत्त्वे बाधोऽनैकान्तिकत्वं च, असत्त्वे तु न तदर्थसिद्धिः, यदि सर्वं ज्ञानमप्रमेति ज्ञानमप्रमा तर्हि सिद्धं ज्ञानप्रामाण्यम्, अथ प्रमा, न तर्हि सर्वज्ञानाप्रामाण्यमित्यादिकमुन्नेयम् ॥

इष्यत एवेति। इदं—प्रतिज्ञाऽपि नास्तीत्यादिकम्, व्याघातमेवोपपादयति यदि हीति, प्रतिज्ञां स्पृशेदिति—प्रतिज्ञायां वर्तेत अस्तित्वाभावरूपार्थाश्रया प्रतिज्ञा स्यादिति यावत्। कथमयमर्थः प्रत्येतव्य इति—स्वरूपतः प्रतिज्ञैव नास्तीति तद्विषयीभूतोऽस्तित्वाभावरूपोऽर्थः कथं श्रद्धेयः, न कथञ्चिदित्यर्थः। न चेदिति—प्रतिज्ञां न स्पृशेत् चेदित्यर्थः, तत्राह—कथमिति, प्रतिज्ञार्थस्य प्रतिज्ञायामसत्त्वे प्रतिज्ञाया एव सत्त्वेन वस्तुत्वव्यापकत्वेनाभ्युपगतस्याऽसत्त्वरूपस्य तदर्थस्य तस्यामेव बाधितत्वेनाऽसत्याऽसति च तस्मिन्नर्थे प्रतिज्ञा कथमुपपन्ना, न कथञ्चिदित्यर्थः। तदनुपपन्नत्वे—इति प्रतिज्ञाया अनुपपन्नत्व इत्यर्थः। अत्रेदमवधेयम्, न किञ्चिदस्तीति प्रतिज्ञया प्रतिज्ञायामस्तित्वं प्रतिषिध्यते न वा, प्रतिषेधे प्रतिज्ञायास्स्वरूपत एवाऽभावादस्तित्वाभावरूपोऽर्थः कस्या

भागपरिच्छेदानामपि प्रथमसमयाकृष्टाद्भागादसंख्येयगुणहीनं भागमाकर्षति। एवं प्रतिसमयं समाकृष्य तावदपूर्वस्पर्द्धकानि करोति, यावदन्तर्मुहूर्त्तचरमसमयः। कियन्ति पुनः स्पर्द्धकानि करोतीति चेत्, उच्यते—श्रेणिवर्गमूलस्यासंख्येयभागमात्राणि, पूर्वस्पर्द्धकानामसंख्येयभागमात्राणीति यावत्, (अ)पूर्वस्पर्द्धककरणान्तर्मुहूर्त्तानन्तरसमये एव च किट्टीरन्तर्मुहूर्त्तं यावत्करोति। उक्तं च—"नाशयति काययोगं स्थूलं सोऽपूर्वफड्डकीकृत्य। शेषस्य काययोगस्य, तथा किट्टीश्च स करोति ॥१॥"। अथ किमिदं किट्टिरिति? उच्यते—एकोत्तरवृद्धिं च्यावयित्वाऽनन्तगुणहीनैकैकवर्गणास्थापनेन योगस्याल्पीकरणं, तत्र पूर्वस्पर्द्धकानामपूर्वस्पर्द्धकानां च याः प्रथमादिवर्गणास्तासां ये अविभागपरिच्छेदाः, तेषामयमसंख्येयान् भागानाकर्षति, एकमसंख्येयभागं स्थापयति। जीवप्रदेशानामपि चैकमसंख्येयभागमाकर्षति, शेषं सर्वं स्थापयति, एष किट्टीकरणप्रथमसमयव्यापारः। ततो द्वितीयसमये प्रथमसमयाकृष्टवीर्याविभागपरिच्छेदभागादसंख्येयगुणहीनं वीर्याविभागपरिच्छेदानां भागमाकर्षति। जीवप्रदेशानां पुनः प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागादसंख्येयगुणभागं, तावतोऽसंख्येयान् भागानाकर्षतीत्यर्थः। एवं तावत् किट्टीः करोति, यावदन्तर्मुहूर्त्तचरमसमयः। तत्र प्रथमसमयकृताभ्यः किट्टिभ्यो द्वितीयसमयकृताः किट्टयोऽसंख्येयगुणहीनाः, गुणकारश्च पल्योपमासंख्येयभागः, एवं शेषेष्वपि समयेषु भावनीयम्। तथा चोक्तं कर्मप्रकृतिप्राभृते—"इत्थ अन्तोमुहुत्तं किट्टीओ करेइ असंखेज्जगुणहीणाए सेढीए जीवपएसे य असंखेज्जगुणाए सेढीए ओकड्डइ, किट्टीगुणकारो पलिओवमस्स असंखेज्जइ भागोत्ति"। प्रथमसमयकृताश्च किट्टयः श्रेण्यसंख्येयभागप्रमाणाः, एवं द्वितीयादिसमयेष्वपि प्रत्येकमवगन्तव्याः। सर्वा अपि च किट्टयः श्रेण्यसंख्येयभागप्रमाणाः, पूर्वस्पर्द्धकानामपूर्वस्पर्द्धकानां च संख्येयभागमात्राः। किट्टिकरणावसानानन्तरं च पूर्वस्पर्द्धकान्यपूर्वस्पर्द्धकानि च नाशयति। तत्समयादारभ्य चांतर्मुहूर्त्तं यावत् किट्टिगतयोगो भवति। तथा

इति चेत्, यद्ययमेकत्र बाध्यतेऽन्यत्र तद्बाधप्रसङ्गः, सर्वत्र बाध्यत इति चेत्, तदपेक्षसिद्धिना व्यवहारेण, अनपेक्षेण वा, अव्यवहारेणैव वेति, आद्ये यस्तावत्तदपेक्षसिद्धिः स कथं तमेव बाधेत, नह्यनुष्णत्वानुमानेनोष्णत्वग्राहिप्रत्यक्षबाधो लोके, प्रतियोगिज्ञानाधीनप्रवृत्तिकं निषेधकं प्रमाणं नोपजीव्यप्रतियोगिज्ञानबाधकमिति निर्गलितार्थः, । द्वितीयस्त्वसम्भवी, नहि निषेधकं प्रमाणं निषेध्यसिद्धिनिरपेक्षं भवितुमुत्सहते । अपि च हेतोर्व्याप्तिग्रहो निषेधमात्रेण समं, सत्त्वादिसम्वलितेन वा निषेधेन । आद्ये न ततः सत्त्वादिनिषेधो मानाभावात्,

लोकव्यवहारेति, यदेव लोकानुभवपथाऽऽक्रान्तं तदेव तत्त्वतस्सिद्धमिति न ततोऽन्यत्तेन सिद्ध्यतीति लोकानुभवव्यवहाराभ्युपगमे न तन्निषेध इत्युत्तरयति–सिद्धमेव तर्हीति, अस्तित्वसत्यत्वादिविषयकलोकव्यवहाराधीनसिद्धिकव्यवहारो ह्यस्तित्वसत्यत्वादिलोकव्यवहारमेव बाधेत कथमित्याह आद्ये यस्तावदित्यादि, निषेधकं प्रमाणं बाधकप्रमाणमित्यर्थः ।

द्वितीये सत्त्वादेर्नात्यन्तिको निषेधः, प्रमाणसिद्धत्वादिति मन्तव्यम् । तृतीये तु विपरीतापत्तिः, विचारबाध्यत्वमुपक्रम्याविचारबाध्यत्वेन मुद्रणात् । मुद्रणं पर्यवसानम् । न चैतदपि निर्व्यूढं, स ह्ययत्नसिद्धमध्यक्षं वा स्यादनिष्टिमात्रं वा, आद्ये विरोधोऽध्यक्षस्यैव सत्त्वाद्यभ्युपगमात्, असिद्धिश्च, अध्यक्षेण सत्त्वादेरेवावगाहनात्, द्वितीये लोकातिक्रमः, परानिष्ट्या त्वदनिष्टबाधप्रसङ्गश्चेति ॥

द्वितीये सत्त्वादेरिति असत्ख्यातेर्निरासादिति शेषः । एतदपि–अव्यवहारबाध्यत्वमपि, निर्व्यूढं निर्वाह्यं प्रमाणोपपन्नमिति यावत्, सः अव्यवहारः, लोकातिक्रम इति अनिष्टमित्येतावन्मात्रेण न किञ्चिद्बाध्यते लोके किन्तु बाधकप्रमाणेनेति तस्या-

देहत्रयमोक्षार्थमनिवृत्तिसर्ववेस्तुंगतं । उपयाति समुच्छिन्नक्रियमतम(मन)स्कं परं ध्यानं ॥१॥"। एवमसावयोगिकेवली स्थितिघातादिरहितो यान्युदयवन्ति कर्माणि तानि स्थितिक्षयेणानुभवन् क्षपयति। यानि पुनरुदयवन्ति तदानीं न संति तानि वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयन् वेद्यमानप्रकृतिरूपतया वा वेदयमानस्तावद्याति, यावदयोग्यवस्थाद्विचरमसमयः। तस्मिंश्च द्विचरमसमये देवगतिदेवानुपूर्वीशरीरपञ्चकबन्धनपञ्चकसंघातपञ्चकसंस्थानषट्कांगोपांगत्रयसंहननषट्कवर्णादिविंशतिपराघातोपघातागुरुलघूच्छ्वासप्रशस्ताप्रशस्तविहायोगतिस्थिरास्थिरशुभाशुभसुस्वरदुःस्वरदुर्भगप्रत्येकानादेयायशःकीर्त्तिनिर्माणापर्याप्तकनीचैर्गोत्रसातासातान्यतरानुदितवेदनीयरूपाणि द्विसप्ततिसंख्यानि स्वरूपसत्तामधिकृत्य क्षयमुपगच्छन्ति, चरमसमये स्तिबुकसंक्रमेणोदयवतीषु प्रकृतिषु मध्ये संक्रम्यमाणत्वात्। संक्रमश्च सर्वोऽप्युक्तस्वरूपो मूलप्रकृत्यभिन्नासु परप्रकृतिषु द्रष्टव्यः। "मूलप्रकृत्यभिन्नाः, संक्रमयति गुणत उत्तराः प्रकृतीः" इति वचनात्। चरमसमये च सातासातान्यतरवेदनीयमनुष्यगतिमनुष्यानुपूर्वीमनुष्यायुःपञ्चेन्द्रियजातित्रससुभगादेययशःकीर्त्तिपर्याप्तबादरतीर्थकरोच्चैर्गोत्ररूपाणां त्रयोदशप्रकृतीनां सत्ताव्यवच्छेदः। अन्ये पुनराहुः—मनुष्यानुपूर्व्या द्विचरमसमये व्यवच्छेदः, उदयाभावात्। उदयवतीनां हि स्तिबुकसंक्रमाभावात् स्वस्वरूपेण चरमसमये दलिकं दृश्यते एवेति, युक्तस्तासां चरमसमये सत्ताव्यवच्छेदः। आनुपूर्वीनाम्नां तु चतुर्णामपि क्षेत्रविपाकतया भवापांतरालगतावेवोदयः, तेन न भवस्थस्य तदुदयसम्भवः, तदसम्भवाच्चायोग्यवस्थाद्विचरमसमये एव मनुष्यानुपूर्व्याः सत्ताव्यवच्छेद इति तन्मतेन द्विचरमसमये त्रिसप्ततिप्रकृतीनां सत्ताव्यवच्छेदः, चरमसमये द्वादशानामिति। ततोऽनन्तरसमये कोशबन्धमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादेरंडफलमिव भगवानपि कर्मसंबंधविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादूर्ध्वं लोकांते गच्छति। स चोर्ध्वं गच्छन् ऋजुश्रेण्या यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावत एव प्रदेशानूर्ध्वमप्यवगाह-

अनैकान्तिकौ च प्रथमद्वितीयौ, स्वफल एव व्यभिचारात्, अभावे साध्ये प्रतियोगिसामानाधिकरण्यमेवानैकान्तिकत्वम्, स्वस्य हेतोः, फलेऽनुमितौ, तस्या असत्त्वे साध्यासिद्धिः, असत्यत्वे च विपरीतापत्तिरित्यर्थः, असिद्धौ तृतीयचतुर्थौ, अप्रसिद्धेः, स्वरूपासिद्धेश्च, बाह्यस्याबाध्यत्वेन सत्त्वोपपत्तेः। अनैकान्तिकश्च पञ्चमः, पूर्ववत् स्वफल एवेत्यर्थः, असिद्धो व्याहतोऽनैकान्तिकश्च षष्ठः, कर्म हि विषयो वा क्रियाजन्यफलशालि वा, धात्वर्थतावच्छेदकफलशालि वा, आद्ये तदनुपपत्तिरसिद्धा, ज्ञानमात्रस्य सद्विषयत्वात्, द्वितीये भागासिद्धिः, प्रायशो ज्ञेयस्य ज्ञानजन्योपादानादिशालित्वात्,

प्रथमद्वितीयौ ज्ञेयत्वज्ञानत्वहेतू। अभावे अस्तित्वादिनिषेधे। स्वफल इत्यस्य विवरणमाह स्वस्य हेतोरिति, ननु नानुमितेस्सत्त्वं सत्यत्वञ्चाभ्युपगम्येते येन तद्रूपप्रतियोग्याश्रयभूतायामनुमितौ ज्ञेयत्वस्य ज्ञानत्वस्य च हेतोस्सत्त्वेन व्यभिचारस्स्यात्, किन्त्वसत्त्वमसत्यत्वञ्चेत्याशङ्कायामाह तस्या इति—अनुमितेरित्यर्थः। अनुमितिस्स्वरूपतएवासद्रूपेति कथं तद्रूपया तया साध्यसिद्धिस्स्यादिति भावः। किञ्चिज्ज्ञानं न सत्यमित्यनुमितेरसत्यत्वेऽप्रामाण्यं स्यात् तल्लक्षणत्वात्तत्र तस्य, तथा चाप्रमात्मिकयोक्तानुमित्याऽसत्यत्वासिद्ध्या सर्वज्ञानस्य प्रामाण्यलक्षणं सत्यत्वमेव स्यादित्याह असत्यत्वे चेति, तृतीयचतुर्थौ असत्त्वविकल्पानुपपत्तिहेतू, अप्रसिद्धेरिति सत्त्वस्य केवलान्वयित्वेन स्वरूपतोऽसत्त्वहेत्वसिद्धेरित्यर्थः, स्वरूपासिद्धेश्चेति बाह्यस्य प्रमाणतस्सिद्धत्वेन पक्षे विकल्पानुपपत्तिहेत्वभावात्स्वरूपासिद्धेश्चेत्यर्थः, यदालम्बनानुमितिस्तया तत्सिद्धिरिति सालम्बनत्वाभावसिद्ध्यन्यथानुपपत्त्या तदालम्बनायां प्रत्ययत्वहेतुफलभूतायामनुमितावेव प्रत्ययत्वहेतुर्व्यभिचारीत्याह अनैकान्तिकश्च पञ्चम इति, पूर्ववदित्य-

वात्। तथा अपूर्वादिषु-अपूर्वकरणानिवृत्तिबादरसम्परायसूक्ष्मसंपरायोपशांतमोहक्षीणमोहलक्षणेषु पञ्चसु गुणस्थानेषु नव योगा भवन्ति। ते के? इत्याह-औदारिकं, चतुर्द्धा मनः, चतुर्द्धा वाक्, चः समुच्चये ॥१६॥

**वेउव्विणा जुया ते मीसे साहारगेण अपमत्ते। देसे दुविउव्विजुया आहारदुगेण य पमत्ते ॥१७॥**

(स्वो०)—'वैक्रियेण युक्तास्ते सम्यग्मिथ्यादृष्टौ साहारकेणाप्रमत्ते देशविरते द्विवैक्रिययुक्ता आहारकद्विकेन च प्रमत्ते' इति पदानि। पदार्थस्तु त एवानन्तरोदिता औदारिकशरीरचतुर्विधमनश्चतुर्विधवाक्संयोगेन नव भेदा वैक्रियशरीरयुक्ता दश योगाः सम्यग्मिथ्यादृष्टौ भवन्ति। त एव नवानन्तरोक्ता वैक्रियेण सहाहारकेण युक्ता अप्रमत्ते एकादश योगा भवन्ति। (ते एव नवानन्तरोक्ता द्विवैक्रियेण-वैक्रियवैक्रियमिश्रेण युक्ताः एकादश योगा देसे-देशविरते भवन्ति)। ते एव पूर्वोक्ता नव वैक्रियमिश्रवैक्रियाहारकमिश्राहारकयुक्ताः प्रमत्ते त्रयोदश योगा भवन्ति। चः समुच्चय इति गाथार्थः ॥१७॥

(मलय०)—त एवानन्तरोक्ता औदारिकादयो नव योगा वैक्रियेण युताः सन्तो दश सम्यग्मिथ्यादृष्टौ भवंति, वैक्रियमिश्रं त्वपर्याप्तावस्थायां लभ्यते न च तदानीं सम्यग्मिथ्यादृष्टितेति तत्र तदभावः। ननु मा भूदपर्याप्तावस्थालभ्यं देवनारकसंभवि वैक्रियमिश्रं, यत्पुनः पर्याप्तानां मनुष्यतिरश्चां वैक्रियलब्धिमतां सम्यग्मिथ्यादृशां सतां वैक्रियकरणं संभवेत्, तदारंभकाले वैक्रियमिश्रं भवति, तत्कस्मादिह नोक्तं?, उच्यते-तेषां वैक्रियाकरणभावतोऽन्यतो वा कुतश्चित्कारणादाचार्येणान्यैश्च तन्नाभ्युपगम्यते, तन्न सम्यगवगच्छामः, तथाविधसंप्रदायाभावात्। तथा त एवानन्तरोक्ता नव वैक्रियेण आहारक सहितेन युक्ताः सन्तोऽप्रमत्ते एकादश योगा भवन्ति, यत्तु वैक्रियमिश्रमाहारकमिश्रं च, तत्तदारम्भकाले, तदानीं च प्रमादभावः, इति नाप्रमत्ते तत्सम्भवः। तथा त एव नव

गुणस्थानेषु योगाः

दिना सिद्धत्वादिति भावः। दृष्टान्तोपदर्शनायाह—

ते हि रज्जुसर्पवदित्यादयः,येन च तत्र सर्पस्यासत्त्वं, तज्ज्ञानस्य मिथ्यात्वं,शशविषाणस्याकारणत्वं, दर्पणमुखस्य विचारासहत्वं,स्वप्नज्ञानस्य निरालम्बनत्वं,छेद्यानुपपत्तौ छिदानुपपत्तिश्चावधारितानि तेनैव तत्र रज्जोस्सत्त्वम्, असर्पज्ञानस्य सत्यत्वं, शशस्यान्यत्र गवादेर्विषाण एव कारणत्वं, (कारकत्वं,)दर्पणस्य विचारसहत्वं, अस्वप्नज्ञानस्य सालम्बनत्वं, छेद्यनिष्ठच्छिदासिद्धौ ज्ञानकर्मत्वं चोपपादितानीति। तदनुपपत्तौ वा साध्यविकलतया सर्व एवैते दृष्टान्ताभासाः। अन्तिमस्तु साधनविकलः, सिद्धान्तानां हि व्याघातः परस्परविरहरूपत्वलक्षणः, जलानलयोस्तु वध्यघातकभावलक्षणः, न च शब्दसाम्येनानुमानमित्येषा दिग् ॥ ४४ ॥ एवं विज्ञानवादिनो विचारस्य साधनोपक्रमभागो निराकृतः। अथ दूषणोपक्रमभागं निराचिकीर्षुराह—

वाद्ये परस्य न च दूषणदानमात्रात्, स्वामिन् जयो भवति येन नयप्रमाणैः ॥
प्राज्ञैः कृतैव बहुधावयविप्रसिद्धि-र्दृक्सङ्क्रमादवतरन्ति न दूषणानि ॥ ४५ ॥

ते हीति, येन चेति–प्रमात्रा ज्ञानेन वेत्यर्थः, अस्यावधारितानीत्यनेनान्वयः, सर्पस्यासत्त्वमिति–अस्याऽप्यवधारितानीत्यनेनान्वयः, एवं मिथ्यात्वमित्यादेरपि, तज्ज्ञानस्य रज्जुसर्पज्ञानस्य, तेनैवेति यच्छब्दापेक्षो निर्देशः, अस्योपपादितानीत्यनेनान्वयः, असर्पज्ञानस्य नायं सर्पः किन्तु रज्जुरियमित्याद्यबाधितज्ञानस्य, सत्यत्वं प्रामाण्यम्। शशस्येति शशसम्बन्धित्वाभाववति गोविषाणे कारणत्वमित्यर्थः। अस्वप्नज्ञानस्य जाग्रदशाभाविज्ञानस्य, छेद्यस्य सिद्धौ तच्छिदाया अपि सिद्धि-

गुणस्थानेषूपयोगानाह—

**अचक्खुचक्खूदंसणमन्नाणतिगं च मिच्छसासाणे । विरयाविरए सम्मे नाणतिगं दंसणतिगं च ॥१९॥**

(स्वो०)—'अचक्षुश्चक्षुर्दर्शनमज्ञानत्रिकं च मिथ्यादृष्टिसास्वादने विरताविरतौ सम्यग्दृष्टौ ज्ञानत्रिकं दर्शनत्रिकं च' पदानि। पदार्थस्तु–अचक्षुर्दर्शनं चक्षुर्दर्शनं मत्यज्ञानश्रुताज्ञानविभङ्गाख्याः पञ्चोपयोगा मिथ्यादृष्टौ सास्वादने च भवन्ति। चः समुच्चये, मतिश्रुतावधिज्ञानत्रिकमचक्षुश्चक्षुरवधिदर्शनरूपं दर्शनत्रिकं च देशविरतेऽविरतसम्यग्दृष्टौ च भवति, चः समुच्चये इति गाथार्थः ॥१९॥

(मलय०)—तदेवं गुणस्थानकेषु योगानभिधाय साम्प्रतमुपयोगानाह–अचक्षुर्दर्शनं चक्षुर्दर्शनमज्ञानत्रिकं च मत्यज्ञानश्रुताज्ञानवि- विभङ्गलक्षणं, चः समुच्चये, मिथ्यादृष्टौ सासादने चोपयोगा भवन्ति। यत्तु अवधिदर्शनं, तत्कुतश्चिदभिप्रायाद्विशिष्टश्रुतविदो नेच्छन्ति, तन्न सम्यगवगच्छामः, अथ च सूत्रे मिथ्यादृष्ट्यादीनामवधिदर्शनं, प्रतिपाद्यते। यत उक्तं प्रज्ञप्तौ–"ओहिदंसणअणागारोवउत्ताणं भंते ! नाणी अन्नाणी?। गोयमा! नाणीवि अन्नाणीवि, जइ नाणी, अत्थेगइया तिनाणी, अत्थेगइया चउनाणी। जे तिनाणी ते आभिणीवोहियनाणी सुयनाणी ओहिनाणी। जे चउनाणी ते आभिणीवोहियनाणी सुयनाणी ओहिनाणी मणपज्जवनाणी। जे अन्नाणी ते नियमा मइअन्नाणी सुयअन्नाणी विभंगनाणी" इति। अत्र हि ये अज्ञानिनस्ते मिथ्यादृष्टय एवेति, मिथ्यादृष्टीनामप्यवधिदर्शनं साक्षादत्र सूत्रे प्रतिपादितम्। यदा त्ववधिज्ञानी सासादनभावं वा गच्छति, तदा तत्राप्यवधिदर्शनं प्राप्यते। तथा विरताविरते–देशविरते, 'सम्मेति' अविरतसम्यग्दृष्टौ मतिश्रुतावधिलक्षणं ज्ञानत्रिकं, चक्षुरचक्षुरवधिदर्शनत्रिकमिति षड् उपयोगा भवन्ति ॥१९॥

**मिस्संमि वामिस्सं मणनाणजुयं पमत्तपुव्वाणं । केवलियनाणदंसणउवओगा अजोगिजोगीसु ॥२०॥**

नेऽचेतनाद्वैतस्यापि साधकत्वात्, सूक्ष्मेक्षिकायां तु सदद्वैतस्यैव ततः सिद्धेः, पर्यायार्थिकोपयोगे च भेदस्याप्यव्याहतत्वात्, उभयनयनयनोन्मीलने च भेदाभेदात्मकस्यैव जगतः स्वच्छन्दतया प्रकाशमानत्वात् नाद्वयव्यसिद्धिरिति भगवदुपज्ञस्याद्वादप्रमाणव्यापारः। नयविचारे त्विदानीं न्यायनयप्रक्रमः, तत्र वदन्ति— अस्तु तर्हि दूषणोपक्रमेण विचार इति चेत्, तमपि पश्यामः कीदृशोऽसावपि।

अद्वयविनिरास इति, चित्रतयैव अनेकधर्मात्मकतयैव। दृश्ये बाह्ये। दृश्यपि ज्ञानेऽपि। यथा चेतनमात्रे चेतनत्वमनुगतमिति तद्रूपेण चेतनाद्वैतं तथाऽचेतनमात्रेऽचेतनत्वमनुगतमिति तद्रूपेणाचेतनाद्वैतमेव किं न स्यात्, विशेषविचारणे तु सर्वेषु चेतनेष्वचेतनेषु च सत्त्वमेवानुगतं तद्रूपेण सदद्वैतमेव द्रव्यार्थिकनयोपयोगेन सिद्ध्यतीत्याह—अपश्चिमविकल्पनिर्वचनस्येत्यादि। श्लोके नयप्रमाणैरित्युक्तं तत्र प्रथमं नयाधीना तत्त्वप्ररूपणा कृता, अवसरसङ्गत्या प्रमाणाधीना कर्त्तव्येत्याशयेनाह—उभयनयनोन्मीलने चेति, प्रमाणोपयोगे चेत्यर्थः। तम् विचारम्।

नेदं स्थूलं, विरुद्धधर्मसंसर्गप्रसङ्गात्, इदं घटादिबाह्यं, सांवृती च निषेध्यादिसिद्धिः, विरुद्धधर्मसंसर्गश्च दर्शयिष्यत इति बोध्यम्, नास्थूलम्, अस्थूलत्वेन प्रतिभासप्रसङ्गात्, नापरापेक्षं, सदातनत्वप्रसङ्गात्, सदातनत्वमादिमत्त्वविरहः, आकाशादीनां सदातनत्वदर्शनादित्यभिप्रायः। न परापेक्षं, सदसद्व्यतिरेकप्रसङ्गात्, सतो गगनादेरसतश्च शशविषाणादेः परापेक्षत्वविरहादित्यर्थः, कारणेन न सदेव साध्यते, सतः साध्यत्वायोगात्, नासदेव, असत्त्वाविशेषेण पटादिकारणाद् घटादिसिद्धिप्रसङ्गादित्यन्ये, नैकं, तथाप्रतिभासप्रसङ्गात्।

मित्यादि, केवलं कदाचित्सम्यक्त्वबाहुल्यतो ज्ञानबाहुल्यं, कदाचिच्च मिथ्यात्वबाहुल्येनाज्ञानबाहुल्यं, समतायां तु सम्यक्त्वमिथ्यात्वयोरुभयोरपि समतेति। तथा तदेव पूर्वोक्तमुपयोगपट्कं मनःपर्यायज्ञानयुतं, प्रमत्तः पूर्वो येपां ते प्रमत्तपूर्वास्तेपां प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहानामवसेयम्। तथा केवलज्ञानकेवलदर्शनलक्षणौ द्वावुपयोगौ सयोग्ययोगिकेवलिपु द्रष्टव्यौ न शेपाः, 'केवलदुगे न सेसा' इति वचनात् ॥२०॥

गत्यादिस्थानोत्कीर्त्तनामाह—

**गइइंदिए य काए जोगे वेए कसायलेसासु य। संजमदंसणनाणे भव्वसान्निसम्मआहारे ॥२१॥**

(स्वो०)—'गतीन्द्रिये च काये योगे वेदे कपायलेश्यासु च संयमदर्शनज्ञाने भव्यसंज्ञिसम्यगाहारे' 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेपसमासात् द्वन्द्वैकत्वमित्येवंभूतलक्षणात् प्राकृतलक्षणानुसाराच्चोत्तरत्रापि द्रष्टव्यानि पदानि। पदार्थस्तु गतिद्वारं चतुर्विधम्, इन्द्रियद्वारं पञ्चधा, कायद्वारं द्विधा, योगवेदद्वारे प्रत्येकं त्रिधा, कपायद्वारं चतुर्द्धा, लेश्याद्वारं पोढा, संयमद्वारं च पञ्चधैकधा वा, दर्शनद्वारं चतुर्द्धा, ज्ञानद्वारं अष्टधा, भव्यसंज्ञिसम्यग्दृष्ट्याहारकद्वाराणि सविपक्षाणि, तेपु जीवगुणस्थानानि मन्तव्यानि इति वाक्यशेप इति गाथार्थः ॥२१॥

(मलय०)—तदेवं गुणस्थानकेपु उपयोगानभिधाय, सांप्रतं मार्गणास्थानेपु जीवस्थानादिविवक्षुस्तान्येव तावदाह-इयं च गाथा प्रागेव व्याख्याता ॥२१॥

तत्र गत्यादिपु जीवस्थानानि प्रतिपादयन्नाह—

तत्पूर्वकविभागासम्भवेन च फलाभावाच्च क्रियायास्सम्भव इति निष्क्रियत्वप्रसङ्गो युक्त एवेति भावः। अव्यापकत्वविधेयत्वयोर्विरोधानुगुणं तदर्थमाह—अव्यापकत्वमिति, असतः सत्त्वाभावात्तत्र सत्त्वेन ज्ञानं भ्रान्तमेव नतु प्रमेति सत्त्वेन प्रमापणीयत्वं तत्र न सम्भवतीत्याह—न ह्यसत इति, तत् विधेयत्वम्। ननु मूलशैथिल्यस्यार्थे कृते किमित्यवसरसङ्गतिप्राप्तस्येष्टापादनस्य नार्थः कृत इति चेत्, स्पष्टार्थत्वात्, प्रसज्यमानस्य यत्रेष्टत्वं तत्र प्रसङ्गस्येष्टापादनत्वमिति तत्त्वम्। ननु यत्रेष्टापादनं तत्रैवापाद्यव्यतिरेकस्य विपर्यये हेतुभूतस्य पक्षेऽभावात्स्वरूपासिद्धेर्विपर्ययापर्यवसानमिति कथं पृथगुपन्यासः कृत इति चेत्, उक्तिवैचित्र्यात्। नास्थूलतया प्रतिभासते तस्मात्स्थूलमित्याद्याकारकैर्विपर्ययैर्यानि स्थूलत्वादीनि साधितानि तानि नैयायिकैरभ्युपगतान्येवेत्युक्तप्रसङ्गानां बाधस्युपगतान्यविस्थूलत्वादिसिद्ध्यनुकूलत्वमेवेत्याह, अस्थूलत्वादिष्विति, आदिपदादपरापेक्षत्वैकत्वव्यापकत्वादेरुपग्रहः। मिथो विरोधं सदृष्टान्तं प्रकृते सङ्गमयन्नाह—

यथा हि नायं पर्वतो निरग्निर्निर्धूमत्वप्रसङ्गात्, नाप्यग्निमाँस्तथोपलब्धिप्रसङ्गादित्यनयोरेक आभासः, परस्परार्थप्रतिक्षेपकयोरुभयोरनाभासत्वानुपपत्तेः, तथात्रापि, न ह्यस्थूलादिनिषेधादन्यः स्थूलादिविधिः, तन्निषेधाद्वाऽन्योऽस्थूलादिविधिरिति, शिथिलमूलाश्चैते, प्रतिबन्धस्यानिश्चयात्, क्वचिदापादकानभ्युपगमाच्च, प्रतिबन्धनिश्चये वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादनिवृत्तेः, इष्टापादनं च प्रथमेऽनुभूतावसिते विरुद्धधर्मासंसर्गस्य, तथा च वक्ष्यामः, अनुभूतावसित इति, प्रथममनुभूते पश्चादध्यवसिते, अनुभवावसायौ निर्विकल्पकसविकल्पके इत्यर्थः। अनुकूलश्च द्वितीयः, अस्थूलत्वप्रतिक्षेपस्य स्थूलत्वोपलम्भानुग्राहकत्वात्,

"कहिणं भंते ! संमुच्छिममणुस्सा सम्मुच्छंति? गोयमा ! अंतोमणुस्सखेत्ते पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु, पन्नरससु कम्मभूमीसु, तीसाए अकम्मभूमीसु, छप्पन्नाए अंतरदीवेसु, गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा, पासवणेसु वा, खेलेसु वा, सिंघाणेसु वा, वंतेसु वा, पित्तेसु वा, सुक्केसु वा, सोणियेसु वा, सुक्कपोग्गलपरिसाडेसु वा, विगयजीवकलेवरेसु वा, नगरनिद्धमणेसु वा, सव्वेसु चेव असुइएसु, असुइट्ठाणेसु, एत्थणं संमुच्छिममणुस्सा संमुच्छंति, अंगुलस्स असंखेज्जइभागमेत्ताए ओगाहणाए असन्नी मिच्छदिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतोमुहुत्तद्धाउया चेव कालं करंति त्ति"। तथा एकेन्द्रियेषु पर्याप्तापर्याप्तसूक्ष्मबादरलक्षणानि चत्वारि जीवस्थानानि भवन्ति। विकलेन्द्रियेषु पर्याप्तापर्याप्तद्वित्रिचतुरिन्द्रियलक्षणानि षड् जीवस्थानकानि। पञ्चेन्द्रियेषु पुनः पर्याप्तापर्याप्तसंज्ञिरूपाणि चत्वारि जीवस्थानानि ॥२२॥

**दस तसकाए चउ चउ थावरकाएसु जीवठाणाइं। चत्तारि अट्ठ दोन्निय कायवई माणसेसु कमा ॥२३॥**

(स्वो०)—'दश त्रसकाये चत्वारि चत्वारि स्थावरकायेषु जीवस्थानानि चत्वार्यष्ट द्वे च कायवाङ्मानसेषु क्रमा'दिति पदानि। पदार्थस्तु—त्रस्यन्तीति त्रसाः तेषां कायस्तस्मिन् द्वित्रिचतुःपञ्चेन्द्रियसंज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकजीवस्थानानि दश भवन्ति। स्थावरकायेषु—पृथिवीजलाग्निवायुवनस्पतिरूपेषु पञ्चस्वप्येकेन्द्रियेषु सूक्ष्मबादरपर्याप्तापर्याप्तकसंज्ञानि चत्वारि चत्वारि प्रत्येकं स्थानानि भवन्ति। एतान्येवानन्तरोक्तानि काययोगे भवन्ति, वाग्योगे द्वित्रिचतुष्पञ्चेन्द्रियासंज्ञिपर्याप्तकापर्याप्तकस्थानान्यष्टौ भवन्ति, मानसे संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः, क्रमात्—क्रमेण यथासंख्येन तच्चोक्तमेव। चकारो योगानां त्रैविध्यस्य प्राधान्यनिर्देशप्रापणार्थः। आह—एवं पूर्वोक्तं यत्तदत्र विरुध्यते, कथमिति चेत्, उच्यते—नवसु स्थानेषु काययोगः केवलः, चतुर्षु कायवाग्योगौ, एकस्मिन् कायवाङ्मनो-

कूलत्वमेवेत्याह-एवं तृतीयोऽपीति, अप्रसिद्धव्यापक इति प्रसज्यमानस्य सदसद्व्यतिरिक्तत्वस्य क्वचिदप्यप्रसिद्धेरिति भावः। एतदेव भावयति सदसत्त्वस्येति; तस्यैव विवरणमाह—

सत्त्वं यदि वस्तुत्वं, तर्हि तद्व्यतिरेकाप्रसिद्धिः। अथ शक्तिशालित्वमर्थक्रियाकारित्वं वा तद्व्यतिरेकश्चासत्त्वं, न तर्हि क्वचिदपि तदुभयव्यतिरेकप्रसिद्धिरित्येवमप्रसिद्धव्यापकत्वं भावनीयम्। अथैवं विलीनं व्यापकानुपलब्ध्येति चेत्, न विलीनं, व्यतिरेकिणो धर्मस्य भावाभावोभयव्यापकत्वायोगात्। पञ्चमस्त्वनुकूल एव, अनेकाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलम्भोपष्टम्भकत्वात्, तादूरूप्यव्यवहारस्य तथाप्रतिभासव्याप्तत्वाच्चेति। षष्ठस्त्विष्ट एवास्माकम्।

सत्त्वं यदीति, तद्व्यतिरेकेति अवस्तुत्वेत्यर्थः, सदसत्त्वोभयव्यापकं निरपेक्षत्वं तदनुपलब्धिस्तदभावः सापेक्षत्वं तेन व्यापकाभावेन व्याप्यस्य सदसत्त्वोभयस्याभावो यदि न प्रसिद्ध्येत्तर्हि वह्न्यभावादिनापि धूमाभावो न सिद्धिकोटिमुपढौकेतेत्याशङ्कते अथैवं विलीनमिति, प्रमेयत्वाभिधेयत्वादौ केवलान्वयित्वेन सदसत्त्वोभयव्यापकत्वेऽपि तत् निरपेक्षत्वे नास्ति, यतो निरपेक्षत्वस्य वृत्तिमदत्यन्ताभावप्रतियोगित्वात्मकव्यतिरेकधर्मत्वेन केवलान्वयित्वाभावेन भावाभावोभयरूपसत्त्वासत्त्वोभयव्यापकत्वासंभवादतः परानपेक्षत्वाभावरूपपरापेक्षत्वहेतुर्न व्यापकानुपलब्धिरूप इति न तद्विलयप्रसङ्ग इति परिहरति—न विलीनमिति, नैकं तथा प्रतिभासप्रसङ्गादिति प्रसङ्गस्त्वनुकूल एव, विपर्ययसाध्यस्य परस्परभिन्नत्वलक्षणस्यानेकत्वस्येष्टत्वादित्याह-पञ्चमस्त्वनुकूल एवेति। यद्यनेकं स्यात्तर्हि भिन्नतयाऽध्यवसीयेतेति प्रसङ्गस्त्वप्रसङ्ग एव, प्रसज्यमानाया भेदव्यवसितेरिष्टत्वेनानिष्टापादनरूपत्वाभावा-

पुरिसवेयगा नपुंसगवेयगा ?। गोयमा ! नो इत्थिवेयगा, नो पुरिसवेयगा, नियमा नपुंसगवेयगा इति"। तथापीह स्त्रीपुंसलिंगाकारमात्रमङ्गीकृत्य स्त्रीवेदे पुंवेदे चोक्तः। उक्तं च मूलटीकायां–यद्यपि चासंज्ञिपर्याप्तापर्याप्तौ नपुंसकौ, तथापि स्त्रीपुंसलिङ्गाकारमात्रमंगीकृत्य स्त्रीपुंसावुक्ताविति। तथा नपुंसकवेदे संपरायेषु–क्रोधमानमायालोभेषु, लेश्यात्रिके–कृष्णनीलकापोतरूपे, आहारके, भव्ये, अभव्ये, चशब्दादसंयमे च 'मिच्छे य' त्ति–मिथ्यादृष्टौ, चशब्दः समुच्चये, सर्वाण्यपि जीवस्थानानि भवन्ति। भावना सुज्ञाना ॥२४॥

**तेऊ लेसाइसु दोन्नि संजमे एक्कमट्ठमणहारे। सण्णी सम्मंमि य दोन्नि सेसयाइं असंनिम्मि ॥२५॥**

(स्वो०)—'तेजोलेश्यादिषु द्वे संयमे एकमष्टावनाहारे संज्ञिनि सम्यग्दृष्टौ च द्वे शेषकाण्यसंज्ञिनी'ति पदानि। पदार्थस्तु–तैजसीपद्मशुक्ललेश्यासु संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः। सम्यग्यमः संयमः तस्मिन्नेकं संज्ञिपर्याप्तकस्थानम्। अनाहारके सप्तापर्याप्तका अन्तरगतौ संज्ञिपर्याकस्तु केवलिसमुद्घाते एवमष्टौ स्थानानि भवन्ति। संज्ञिद्वारे सम्यग्दृष्टिद्वारे च संज्ञिपर्याप्तकापर्याप्तकस्थाने द्वे भवतः। शेषाणि–एतद्द्विकवर्जितानि द्वादश स्थानान्यसंज्ञिनि भवन्ति। चकाराधिक्यात् तेजोलेश्यायामेकेन्द्रियबादरपृथ्वीजलवनस्पतयः करणापर्याप्तका अपि भवन्ति, यतो भवनपतिव्यन्तरज्योतिष्कसौधर्म्मेशानदेवास्तेषूत्पद्यन्ते, 'जल्लेसे मरइ तल्लेसे उववज्जइ' इति वचनादिति गाथार्थः ॥२५॥

(मलय०)—तेजोलेश्यादिषु–तेजःपद्मशुक्ललेश्यासु द्वे द्वे पर्याप्तापर्याप्तसंज्ञिपञ्चेन्द्रियलक्षणे जीवस्थानके भवतः, गाथोत्तरार्धे चशब्दस्यानुक्तसमुच्चायकत्वात्तेजोलेश्यायामपर्याप्तबादरैकेन्द्रियोऽपि द्रष्टव्यः, यतो भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवाः पृथिव्यप्वनस्पतिषु मध्ये समुत्पद्यन्ते, ते च तेजोलेश्यावन्तः, यल्लेश्यश्च म्रियते, अग्रेऽपि तल्लेश्य एवोपजायते। 'जल्लेसे मरइ तल्लेसे उववज्जइ' इति

ज्ञानम्, अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादित्यन्योन्याश्रयः, तत्र चावश्यमात्माश्रय इति प्रथमोपस्थितिकत्वात्तमाह—प्रतीताविति, आत्माश्रयमेव निरूपयति—

**भिन्नप्रतियोगिनिरूपणाद्धि तदभावो निरूप्यते तन्निरूपणमेव च भेदनिरूपणमिति। न तृतीयः, अनवस्थाप्रसङ्गात्, धर्मान्तरं हि अनुयोगितावच्छेदकवद्वृत्तिः प्रतियोग्यवृत्तिर्धर्मः, पटोऽयं न घटस्तन्तुमयश्चेत्यनुरोधात्, तथा च तत्रापि वैधर्म्याभावे तदद्वैते धर्मिद्वैतानुपपत्तेः, एवं तत्रापि वैधर्म्यान्तरमित्यनवस्थातरङ्गिणी दुस्तरैवेति।**

भिन्नेति, तदभावः भिन्नप्रतियोगिनो भेदरूपोऽभावः, पटोऽयमिति स्वरूपात्मकभेदस्योदाहरणं, न घट इत्यन्योन्याभावस्य, तन्तुमयश्चेति धर्मान्तरात्मकवैधर्म्यस्य, पटोऽयमित्यनेनानुयोगितावच्छेदकतया पटत्वस्योपवर्णनं, न घट इत्यनेन घटस्य प्रतियोगितोट्टङ्कनम्, ताभ्यां च तन्तुमय इत्यनेन प्रदर्शितस्य तन्तुमयत्वधर्मस्यानुयोगितावच्छेदकपटत्ववति पटे वृत्तित्वं प्रतियोगिनि घटेऽवृत्तित्वञ्च ख्यापितम्, अत एव तस्य धर्मान्तरत्वेन तल्लक्षणभेदरूपत्वमिति भावः, तन्तुमयत्वरूपवैधर्म्ये मृन्मयत्वरूप वैधर्म्यस्य वैधर्म्यरूपभेदाभावे तयोरैक्यापत्तौ घटे मृन्मयत्ववत्तन्तुमयत्वस्यापि सत्त्वे घटपटयोरप्यैक्यं स्यादिति तत्र तस्य वैधर्म्यरूपभेदोऽभ्युपगन्तव्यः तत्राप्येवम् एवमग्रेपीत्यनवस्थां सङ्गमयति—तथा च तत्रापीति, बौद्धःस्वपूर्वपक्षमुपसंहरति—

**तत् कथमसौ भेदो व्यवतिष्ठतामिति चेत्, तत्किं भेदज्ञानमेव नास्ति, सदपि वा नित्यम्, अनित्यमपि निर्हेतुकं, सहेतुकमपि निर्विषयं, सविषयमपि वा बाध्यमानविषयमिति, तत्र प्रथमः सर्वतो विरोधादनुत्तरः,**

पर्याप्तापर्याप्तसंज्ञिपञ्चेन्द्रियवर्जितानि शेषाणि द्वादश जीवस्थानानि असंज्ञिनि भवन्ति ॥२५॥

दुसु नाणदंसणाइं सव्वे अण्णाणिणो य विन्नेया। सन्निमि अयोगिअवेइएवमाई मुणेयव्वं ॥२६॥

(स्वो०)—द्वयोर्ज्ञानदर्शनानि सर्व्वेऽप्यज्ञानिनश्च विज्ञेया, संज्ञिन्ययोग्यवेद्येवमादि मन्तव्यमि'ति पदानि। पदार्थस्तु—द्वयोः संज्ञिपर्याप्तकापर्याप्तकयोः ज्ञानदर्शनानि सम्यग्दर्शनप्रधानानि भवन्ति, सर्व्वेऽपि जीवस्थानकजीवा अज्ञानिनोऽपि विज्ञेयाः, संज्ञिन्ययोगित्वमवेदित्वमेवमादिशब्दादलेश्यत्वमकपायत्वमनिन्द्रियत्वं च मन्तव्यमिति गाथार्थः ॥२६॥

(मलय०)—संप्रति सामान्येन ज्ञानादौ यति जीवस्थानानि प्राप्यन्ते तति प्रतिपादयति—द्वयोः संज्ञिपञ्चेंद्रियपर्याप्तापर्याप्तयोः सामान्येन ज्ञानदर्शनानि संभवन्ति, न शेषेषु। अज्ञानिनश्च सामान्येन सर्वाण्यपि जीवस्थानानि, यत्तु अयोगित्वमवेदित्वमेवमादिशब्दादलेश्यत्वमकपायत्वमनिन्द्रियत्वं च, तत्संज्ञिनि पर्याप्ते वेदितव्यम्। अथायोगित्वे सति संज्ञित्वं कथं ?, उच्यते—द्रव्यमनःसंबन्धात्। भवति च द्रव्यमनःसम्बन्धात्संज्ञिव्यपदेशः, यथा सयोगिकेवलिनि। उक्तं च—'मणकरणं केवलिणो वि अत्थि, तेण सन्निणो भन्नन्ति' इति ॥२६॥

दोमइसुयओहिदुगे एकं मणनाणकेवलविभंगे। छतिगं व चक्खुदंसणचउदस ठाणाणि सेसातिगे ॥२७॥

सहेतुकत्वेन व्याप्तिरिति भेदज्ञानं निर्हेतुकं स्यात्तर्ह्यनित्यं न स्यादिति भावः। भेदोल्लेखादिति उल्लिख्यमानस्यैव विषयत्वादित्यर्थः।

पञ्चमस्तु चिन्त्यते किमेतेष्वन्यतमात्माऽस्य विषयः तदन्यो वेति, तत्र यद्यन्य एव, किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्येत, एवं च चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः स्यात्, अथान्यतमात्मा, तत्रापि यदि धर्मान्तरमेवेति तत्त्वं तदाऽनवस्थाभियाऽधिकप्रवाहस्त्यज्यतां, तस्य तु कुतस्तत्यागः, तन्मूलत्वादिति चेत्, न, नह्यनवस्था प्रतिभासमानमर्थं निवर्त्तयति किन्तु प्रवाहं परिहारयति, यथा ह्यबादिभ्यः पृथिव्या गन्ध एव भेदक इत्युक्ते सुरभिरसुरभिर्गन्ध इति व्यवहारेण गन्धेऽपि गन्धान्तरप्रसक्तावनवस्थया गन्धान्तरमेव त्याज्यते गन्धे न तु पृथिवीगन्धोऽपीति तद्वदत्रापि ज्ञेयम्।

एतेष्विति स्वरूपाऽन्योन्याभाववैधर्म्येष्वन्यतमो भेदज्ञानस्य विषय इत्यर्थः। यदि स्वरूपादित्रितयव्यतिरिक्त एव विषयो भेदज्ञानस्य तदा तस्य स्वरूपादित्रितयविषयानुपपत्तिभिः किं बाध्येतेत्याह यद्यन्य एवेति, एवञ्चेति—चौरः पलायितएव माण्डव्यस्तु महर्षिश्शूलमारोपित इतिवत् स्वरूपवैधर्म्यान्योन्याभावातिरिक्तो न दूषयितुं पारितः तद्भिन्नं स्वरूपादित्रितयं दूषितमित्यर्थः। धर्मान्तरमिति वैधर्म्यमित्यर्थः। तस्येति अनुभूयमानस्य प्राथमिकवैधर्म्यस्येत्यर्थः। प्रथममूलकत्वात्प्रवाहस्यातोऽनवस्थाप्रसङ्गभयेन प्रथमस्यापि परित्याग इत्याशङ्कते तन्मूलत्वादितीति। कुसुमं सुरभि असुरभि वेति प्रतीतिवत् सुरभिर्गन्धोऽसुरभिश्चेति प्रतीत्या गन्धे गन्धान्तरस्वीकारेऽनवस्था भवति सा चानवस्था गन्धे गन्धान्तरमेवापाकरोति नतु पृथिव्यामपि, पृथिव्यामनुभूयमानस्यापाकरणे पृथिव्या जलादितो भेद एव न सिद्ध्येत् तद्वत्प्रकृतेऽपीत्याह—यथेति। बौद्धश्शङ्कते—

(स्वो०)—'सुरनारकयोश्चत्वारि पञ्च तिर्यक्षु चतुर्दश मनुष्ये एकेन्द्रियविकलेन्द्रियेषु युगलं सर्वाणि पञ्चेन्द्रियेषु भवन्ती'ति पदानि। पदार्थस्तु 'सुरनारकयो'रिति–सुरनारकगत्योर्मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टिसम्यग्दृष्टिस्थानानि चत्वारि भवन्ति। पञ्च तिर्यग्गतौ पूर्वोक्तानि चत्वारि देशविरतस्थानं च। मनुष्यगतौ चतुर्दश संपूर्णानि गुणस्थानानि भवन्ति। एकद्वित्रिचतुरिन्द्रियेषु 'युगलं'–मिथ्यादृष्टिः सास्वादनश्च। पञ्च तिरिएसु इति बहुवचननिर्देशात् सास्वादनः एतेषु करणापर्याप्तकेषूत्पत्तिकालादुत्कृष्टेनापि देशोनषडावलिकामात्रं कालं भवति। पञ्चेन्द्रियेषु सर्वाणि भवन्तीति गाथार्थः ॥२८॥

(मलय०)—तदेवमुक्तानि मार्गणास्थानेषु जीवस्थानानि, सम्प्रति गुणस्थानकान्याह–सुरेषु नारकेषु च प्रत्येकं मिथ्यादृष्टिसास्वादनमिश्राविरतसम्यग्दृष्टिलक्षणानि चत्वारि गुणस्थानकानि भवन्ति। तान्येव देशविरतिसहितानि पञ्च गुणस्थानकानि तिर्यक्षु भवन्ति। चतुर्दशापि मनुष्ये, तत्र मिथ्यात्वाद्ययोगित्वपर्यन्तसर्वभावसम्भवात्। तथा एकेन्द्रियेषु, विकलेषु–विकलेन्द्रियेषु द्वित्रिचतुरिंद्रियरूपेषु, मिथ्यादृष्टिसासादनलक्षणं गुणस्थानकयुगलं भवति। सासादनत्वं लब्धिपर्याप्तानां करणापर्याप्तानां करणापर्याप्तावस्थायामवसेयम्। तथा पञ्चेन्द्रियेषु पञ्चेन्द्रियद्वारे सर्वाणि चतुर्दशापि गुणस्थानकानि भवन्ति, मनुष्येषु सर्वभावसम्भवात् ॥२८॥

**सव्वेसु वि मिच्छो वाउतेउसुहुमातिगं पमोत्तूणं। सासायणो उ सम्मो सन्निदुगे सेस सन्निम्मि ॥२९॥**

(स्वो०)—'सर्वेष्वपि मिथ्यादृष्टिः वायुतेजःसूक्ष्मत्रिकं प्रमुच्य सास्वादनस्तु सम्यग्दृष्टिः संज्ञिद्विके शेषाणि संज्ञिनि' पदानि। पदार्थस्तु–'सर्वेषु' त्रसस्थावरकाययोः अपिशब्दात् सप्रभेदयोर्मिथ्यादृष्टिर्भवति। अनन्तरोक्तयोः काययोः सप्रभेदयोर्वाय्वग्निकायसर्वसूक्ष्मलब्ध्यपर्याप्तकसाधारणभेदान् प्रमुच्य सास्वादनो भवति। सम्यग्दृष्टिः संज्ञिपर्याप्तककरणापर्याप्तकयोः त्रसकायान्तर्गतयोर्भवति।

स्वं प्रति कारणान्तरस्याक्षेपस्तदा कथमित्यर्थः। नतु स्वात्मन इति नतु भेदज्ञानस्य भेदज्ञानं प्रति हेतुत्वाभावमात्रेण भेदज्ञानमेव न स्यादित्यर्थः। भेदज्ञानस्याविद्यकत्वेन स्वसात्स्वोत्पत्तौ नात्माश्रयदोष इत्यभिप्रायेण विज्ञानवाद्याशङ्कते—अविद्यावशादिति। तत्र विकल्पयति—किमिति। तथासति—अविद्याप्रभावादात्माश्रयदोषनिवृत्तौ सति, तत्र भेदज्ञानकारणे,नास्ति तत्र विवादइत्यत्र नाम्नि तर्हि विवाद इति पाठान्तरम्। तस्य च भेदज्ञानस्य सिद्धौ तस्य यत्कारणं तस्याऽविद्येति नाम भवतु अन्यद्वा न तावता काचित्क्षतिरित्यर्थः, नास्ति तर्हि विवाद इत्यपि पाठभेदो दृश्यः। सुहृद्भावेन पृच्छति विज्ञानवादी—

तत्किं हेत्वन्तरमशक्यनिरूपणमेव, न, प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिरधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहणकारणमिति निरूपणात्, इतरयोरधिकरणप्रतियोगिनोरितरत्वेन ज्ञानं न भेदप्रत्यक्षे हेतुर्येनात्माश्रयः स्यात्, किन्तु भिन्नाभ्यां रूपाभ्यां प्रतियोग्यधिकरणयोर्ज्ञानमात्रं कारणं, स्मृतिपदद्वयं ज्ञानमात्रपरं, भिन्नाभ्यां रूपाभ्यां प्रतियोग्यधिकरणयोर्ज्ञानं कारणं, प्रतिबन्धकस्त्वधिकरणतावच्छेदकवति प्रतियोगितावच्छेदकग्रहः, तेन न घटो द्रव्यमित्यधिकरणग्रहे द्रव्यत्वेन प्रतियोगिग्रहात् घटो न द्रव्यमिति प्रत्यय इत्येतदर्थः। अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वं, तथापि सहप्रयोग एवानुपपन्नः परिहीयतां, भेदेन तु किमपराद्धं, सोऽपि दृश्यत इति चेत्, सत्यम्,

तत् किं हेत्वन्तरमिति। उक्तमेव विवेचयति इतरयोरित्यादिना। इतरत्वेन, अधिकरणस्य प्रतियोगीतरत्वेन प्रतियोगिनश्चाधिकरणेतरत्वेन, भिन्नाभ्यां रूपाभ्यामिति, नन्वधिकरणत्वं प्रतियोगित्वमपि च भिन्नमेव रूपमिति तद्रूपाभ्यां तदुभय-

द्रव्यवेदेषु तदानीं प्रत्यक्षविरोधः, तदुपरितनेष्वपि तद्दर्शनात्, अथ चेद् भाववेदेषु तत्कथं वेदोदये सत्यपि तेषां चरणमिति ? अत्रोच्यते—द्रव्यवेदोदयस्तावदत्र नैतादृतो मया। भाववेदोदये ब्रूमश्चरणमत्र(णं तु)यथा भवेत् ॥१॥ सर्वघातिकषायाणां, क्षयोपशमसंभवम्। भाववेदोदयो नैतद्, हन्ति यस्मात्स देशहा ॥२॥ हन्त्येव तद्बलो यद्वत्सवायुरनलस्तृणम्। देशहा केवलस्तस्य, स्वोदयः संप्रकीर्त्तितः ॥३॥ उदयो भाववेदस्य, यतोऽनादिः प्रतिक्षणम्। पर्यायेण तदेकस्मिन्, द्रव्यवेदे हि सत्यपि ॥४॥ संख्यातीता हि भेदाः स्युस्तस्य सिद्धान्तसिद्धितः। तेषामन्तर्गताः केचिच्छद्मस्थानां प्रतीतये(तिदाः) ॥५॥ यथा पित्तादयो दोषाः, सर्वजन्तुगता अपि। उत्कटत्वविहीनास्तु, न भवेयुर्विबाधकाः ॥६॥ कषायस्योदये यद्वद्, व्यपदेशो न मन्दके। भाववेदोदयेऽप्येवं, व्यपदेशो न बाधनम् ॥७॥ द्रव्यवेदाच्च निर्देशस्त्रिविधो लिङ्गिनां भवेत्। तत्त्वतो न भवत्येव, सूक्ष्मादीनामसावपि ॥८॥ सत्यपि हि द्रव्यवेदे, नासौ भावस्य कारणम्। दग्धरज्जुवदाकारमात्रत्वाद् व्यवहारतः ॥९॥ उच्यते द्रव्यवेदो हि, नासावत्रोररीकृतः। सति वेदोदये तस्माद्द्रियते चरणत्रयम् ॥१०॥ इति गाथार्थः ॥३०॥

(मलय०)—यावद्बादरोऽनिवृत्तिबादरसम्परायत्वं तावज्जीवाः सर्वेऽपि त्रिषु वेदेषु स्त्रीपुंनपुंसकलक्षणेषु, तथा त्रिष्वपि च संपरायेषु क्रोधमानमायारूपेषु द्रष्टव्याः। किमुक्तं भवति ? त्रिषु वेदेषु, त्रिषु च क्रोधमानमायारूपेषु संपरायेषु मिथ्यादृष्ट्यादीन्यनिवृत्तिबादरसंपरायपर्यन्तानि नव गुणस्थानकानि भवन्ति। एवमन्यत्रापि भावना द्रष्टव्या। तथा लोभे यावत्सूक्ष्मः सूक्ष्मसंपरायस्तावत्सर्वेऽपि जीवा मिथ्यादृष्टिप्रभृतयो वेदितव्याः। यावत् 'सम्मो' त्ति—अविरतसम्यग्दृष्टिस्तावत् षडपि लेश्या भवन्ति ॥३०॥

**अपुव्वाइसु सुक्का नत्थि अजोगिम्मि तिन्नि सेसाणं। मीसो एगो चउरो असंजया संजया सेसा ॥३१॥**

नानार्थ एवायं भेदशब्द इत्यर्थः, यद्वा द्रव्यगुणकर्मसु त्रयमपि, सामान्यसमवायेषु द्वयम्, अभावे स्वरूपभेदमात्रमित्यर्थः। क्रमेण भेदत्रयोदाहरणमाह घटस्य हीति, घटादेरित्यर्थः, तेन घटाद्यात्मनेत्यविरोधः, वैशिष्ट्येति वैधर्म्येत्यर्थः, प्रथममात्रमिति स्वरूपभेदमात्रमित्यर्थः। एतच्च सुप्रतिपदतयोक्तम्, अभावेष्वपि परस्परं भिन्नाधिकरणकत्वभिन्नप्रतियोगिकत्वरूपवैधर्म्यसत्त्वात्, धर्मान्तराऽभावादिति तु तत्तदभावेऽनुयोगिताविशेषलक्षणादिवैधर्म्यस्य सत्त्वेऽप्यभावे तुच्छरूपे वैधर्म्यं नास्तीति पराभिप्रायेणोक्तमित्याह—

धर्मान्तरेत्यभ्युपगमवादेन, धर्मपदं समवेतपरम्, अग्रे च तन्तुमय इति समवेतधर्मान्तरोपलक्षकमित्यपि कश्चित्, सामान्यादिषु त्रिषु द्वयं, धर्मान्तराभावात्। द्रव्यादिषु त्रिषु त्रयं, त्रयस्यापि सम्भवात्, भवति हि पटोऽयं न घटस्तन्तुमयश्चेति, गन्धोऽयं न रूपं सुरभिश्चेति, गतिरियं, नोत्क्षेपणं तिर्यक् चेति। ननु स्वरूपस्य भेदत्वे इदं तन्न वेति संशयो नेदं तदिति विपर्ययश्च न स्यात्, धर्मिणो ग्रहे भेदस्यैव ग्रहादग्रहे च तयोरनुत्पादात्, स्वस्य स्वावृत्तित्वादिदं भिन्नमिति प्रतीत्याद्यनुपपत्तिश्च, धर्मिभेदस्य धर्मस्वरूपस्य धर्मिवृत्तितया तत्रैव तद्भेदप्रतीत्यादिप्रसङ्गश्च, निष्प्रतियोगिकस्य स्वरूपस्यसप्रतियोगिकत्वायोगश्चेति।

धर्मान्तरेत्यभ्युपगमवादेनेति, धर्मपदं समवेतपरं पटस्तन्तुमय इत्यत्रापि तन्तुमयत्वं न समवेतधर्मरूपमिति तस्य वैधर्म्यलक्षणभेदरूपत्वाभावेऽपि तस्य समवेतधर्मान्तरोपलक्षकत्वेन नाग्रिमग्रन्थासंगतिरिति केषाञ्चिन्मतमुपदर्शयति—धर्मपदमिति, द्वयमिति स्वरूपभेदेतरेतराभावद्वयमित्यर्थः, यद्यपि सामान्ये सामान्यान्तराभावेऽप्याश्रयव्यक्तिरेव वैधर्म्यं, विशेषसमवाययोर-

वधिदर्शनेषु मिथ्यादृष्ट्यादीनि क्षीणमोहान्तानि द्वादश गुणस्थानकानीति स्वधिया भावनीयम् । तथा मिश्रो-व्यामिश्रः संयमं प्रत्येको देशविरत इत्यर्थः, चत्वारो मिथ्यादृष्ट्यादयोऽसंयताः, शेषाश्च संयताः, तत्र प्रमत्ताप्रमत्ताः सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसंयमसंभविनः, अपूर्वकरणानिवृत्तिबादरौ सामायिकच्छेदोपस्थापनसंयमसंभविनौ, सूक्ष्मसंपराये सूक्ष्मसंपरायसंयमः, उपशांतमोहक्षीणमोहसयोग्ययोगिकेवलिनो यथाख्यातचारित्रिणः ॥३१॥

**अब्भव्विएसु पढमं सव्वाणियरेसु दो असन्नीसु । सन्नीसु बार केवलि नो सन्नी नो असण्णीवि ॥३२॥**

(स्वो०)—'अभव्येषु प्रथमं सर्वाणीतरेषु द्वे असंज्ञिषु संज्ञिषु द्वादश केवली नो संज्ञी नाप्यसंज्ञीति' पदानि । पदार्थस्तु-अभव्येषु प्रथमं मिथ्यादृष्टिगुणस्थानं भवति । सर्वाण्यशेषाणीतरेषु-भव्येषु । द्वे स्थाने असंज्ञिषु मिथ्यादृष्टिसास्वादनाख्ये भवतः । संज्ञिषु द्वादश मिथ्यात्वादिस्थानानि भवन्ति, यतः-केवली योगी अयोगी च न संज्ञी नाप्यसंज्ञीति गाथार्थः ॥३२॥

(मलय०)—अभव्येषु प्रथमं मिथ्यादृष्टिगुणस्थानकं, इतरेषु च भव्येषु सर्वाणि मिथ्यादृष्ट्यादीन्ययोगिकेवलिपर्यन्तानि चतुर्दशापि गुणस्थानकानि भवन्ति । तथाऽसंज्ञिषु संज्ञिवर्जितेषु द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके । तत्र सासादनसम्यग्दृष्टिगुणस्थानकं लब्धिपर्याप्तस्य करणापर्याप्तावस्थायां वेदितव्यम् । तथा संज्ञिनि सयोग्ययोगिकेवलिवर्जानि शेषाणि द्वादश गुणस्थानकानि । ये तु सयोग्ययोगिकेवलिगुणस्थानके ते तत्र न संभवतः, सयोग्ययोगिकेवलिनोः संज्ञित्वायोगात्, तदयोगश्च मनोविज्ञानाभावात् । न चाप्येकान्तेन तयोरसंज्ञित्वं द्रष्टव्यम्, द्रव्यमनोपेक्षया संज्ञित्वस्यापि व्यवहारात् । तथा चाह-केवलिनौ न संज्ञिनौ मनोविज्ञानाभावात्, नाप्यसंज्ञिनौ द्रव्यमनःसम्बन्धापेक्षया संज्ञित्वव्यवहारात् । उक्तं च सप्ततिकाचूर्णौ—''मणकरणं केवलिणो वि अत्थि तेण

योग्यनुयोगिभावसम्बन्धेन पटविशिष्टभेदवान् घट इति बोधः, द्वितीयपक्षे च पटनिष्ठप्रतियोगितानिरूपितानुयोगिताश्रयभेदवान् घट इति बोधः, तथा वादान्तरम्, स्वस्य स्वावृत्तित्वादित्यादि यदुक्तं तत्समाधत्ते सम्बन्धविशेषेणेति, तथा चेदं भिन्नमिति-प्रतीतौ प्रकारतावच्छेदकतया नियामकसम्बन्धस्स्वरूपसम्बन्ध एवेति तेन सम्बन्धेन भेदस्य स्वस्वरूपस्य भेदत्वेन रूपेण स्वस्मि-न्नपि वृत्तित्वं नानुपपन्नमितीदं भिन्नमितिप्रतीत्युपपत्तिः, घटत्वस्वरूपस्य घटत्वगतघटभेदस्यापि स्वरूपेण सम्बन्धेन स्वाश्रये घटे घटभेदत्वेन न वृत्तित्वमिति न घटो न घट इति प्रतीत्यापत्तिः, निष्प्रतियोगिकस्यापि घटस्य द्वितीयाभावरूपत्वात् द्वितीयाभाव-त्वेन रूपेण प्रथमाभावप्रतियोगिकत्ववद् घटस्य पटभेदरूत्वात्पटभेदत्वेन पटप्रतियोगिकत्वमपि नानुपपन्नमित्याह स्वस्य स्वाभा-वेति। एतेनेत्यनेनातिदिष्टमाह स्वरूपत इति, घटे पटभेदस्य घटत्वलक्षणस्य मृन्मयत्वलक्षणस्य वा निरवच्छिन्नतया स्वरूपतः प्रमे-यत्वादिना वा ग्रहेऽप्ययं पटभिन्नो न वाऽयं पटाभिन्न इति संशयविपर्ययौ उपपद्येते, तत्प्रतिबन्धकस्य पटभेदत्वेनोक्तवैधर्म्यलक्षण-भेदग्रहस्याभावादिति भावः। घटभेदे घटभेदप्रतीत्या यदि घटभेदोऽतिरिक्तस्तदाऽऽधाराधेयभूतघटभेदद्वयं, द्वितीयेऽपि घटभेदे घटभेदप्रतीतिर्भवति सा च प्रथमं यदि पटवृत्तिघटभेदमादायोपपाद्यते तदाऽन्योन्याश्रयः, द्वितीयघटभेदे यो घटभेदः स न तदा श्रयप्रथमघटभेदरूपः किन्त्वतिरिक्तः, तत्रापि घटभेदप्रतीतिर्भवति सा च यदि प्रथमघटभेदादिकमादाय तदा चक्रकम्, अति-रिक्तभेदमादाय चेत्तदा यदि कश्चित्पूर्वभेदमादाय विश्रान्तिस्तदा चक्रकमेव, अविश्रान्तौ त्वनवस्था, एतद्दोषत्रयापेक्षया घटभेदे यो घटभेदस्स तदात्मैव नातिरिक्त इति स्वस्मिन्नपि वर्त्तते इत्यभ्युपगम्यात्माश्रयाभ्युपगम एव श्रेयान्, एकस्यैव भेदस्य कल्पने लाघवादित्याशयेनाह—

मिथ्यादृष्टिसास्वादनाविरतसयोग्ययोगिस्थानानि भवन्ति। अयोगी स्वकालं, सयोगिकेवली समुद्घाते समयत्रयं सम्यग्दृष्टिस्तु विग्रहे समयमेकं, मिथ्यादृष्टिसास्वादनौ विग्रहे एकं द्वौ त्रयान्वा समयान्। भणिता योगोपयोगानां मार्गणा—अन्वेषणा, साम्प्रतं बन्धकान् भणामः, इति गाथार्थः ॥३४॥

॥ समाप्तं योगोपयोगमार्गणाद्वारं प्रथमम्। इति ग्रन्थशतचतुष्कम् (४००) ॥

(मलय०)—आहरकेष्वयोगिकेवलिवर्जानि शेषाणि त्रयोदश गुणस्थानकानि। अनाहारकेषु मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टि-सयोग्ययोगिकेवलिलक्षणानि पंच गुणस्थानकानि। तत्र सयोगिकेवलिगुणस्थानकमनाहारके समुद्घातावस्थायां, शेषाणि सुप्रतीतानि। तदेवं भणिता योगोपयोगमार्गणा। संप्रति बन्धकान् भणामः, 'वर्तमानसामीप्ये वर्त्तमानवद्वेति' भविष्यति वर्त्तमानात्, ततोऽयमर्थः भणिष्यामः प्रतिपादयिष्यामः ॥३४॥

॥ इति श्रीमलयगिरिविरचितायां पञ्चसंग्रहटीकायां योगोपयोगमागणाभिधानं प्रथमं द्वारं समाप्तम् ॥

समाप्तमिदं पञ्चसंग्रहटीकायां योगोपयोगमार्गणाभिधानं प्रथमं द्वारं।



॥४२॥

पटवतः पटशून्यत्वं पटशून्यस्य च घटवतो घटशून्यत्वं स्यात्; तस्माद् भेदानन्त्यमेव ज्यायः, प्रामाणिकं च वस्त्वानन्त्यं न दोषाय, एवं यदि स्वरूपसम्बन्धेन न निर्वाहस्तदा सम्बन्धानन्त्यमप्यस्तु, न चोत्तरोत्तरेण पूर्वपूर्वकार्यकरणसम्भवात् पूर्वपूर्वसम्बन्धवैयर्थ्यम्, पूर्वस्य सम्बन्धताप्रतीत्यन्यथानुपपत्त्या कल्पितेन तदुत्सारणायोगादुपजीव्यव्याघातादित्यपि वदन्ति ॥

घटपटेति, घटाभावस्य पटाभावभिन्नत्वात्स भेदो यदि घटाभावरूपाधिकरणात्मकोऽभ्युपगतस्तदा घटाभावे पटाभावाऽऽश्रितत्वस्याभ्युपगमे तस्य तत्र सत्त्वेन घटाभावरूपपटाभावभेदस्यापि तत्र सत्तया पटाभावः पटाऽभावो नेतिप्रतीतिस्स्यात्, स्याच्च पटाभावे घटाभावभेदस्य पटाभावरूपत्वपक्षेपि घटाभावो घटाऽभावो नेति प्रतीतिरित्यर्थः, घटाभावे पटाभावाश्रितत्वस्य पटाभावे घटाभावाश्रितत्वस्य चानभ्युपगमे घटाभावे पटो नास्तीति पटाभावे घटो नास्तीति च प्रतीत्यऽनुपपत्तिरित्याह परस्परेति, अभावाधिकरणकाभावोऽधिकरणरूप इति नियमात् घटाभाववृत्तिपटाभावो घटाऽभावरूप इति न घटाभावाद्भिन्नः पटाभाव इति घटाभावे पटाभावस्य सत्त्वेऽपि न घटाभावभेदप्रसङ्गः, न वा पटाभावे घटाभावस्य सत्त्वेऽपि पटाभावभेदप्रसङ्गः, भाववृत्तिपटाभावस्तु घटाभावाद्भिन्न इत्याशङ्कते तदुभयेति, घटाभावपटाभावयोरभिन्नत्वे पटवति घटाभावसत्त्वे तदभिन्नस्य पटाभावस्य सत्तया पटो नास्तीति घटवति पटाभावसत्त्वे तद्रूपघटाभावस्यापि विद्यमानतया घटो नास्तीति च प्रतीत्यापत्तिरिति समाधत्ते तर्हि घटशून्यस्येति। घटाभावे पटाभावभेदस्यातिरिक्तत्वे तद्भेदोऽपि घटाभावे वर्त्तते स यदि घटाभावरूपस्तदा तस्य पटाभावभेदे सत्त्वात्तत्स्वरूपपटाभावभेदभेदस्यापि पटाभावभेदे सत्त्वापत्तिरिति भेदभेदोऽतिरिक्तस्स्वीकर्त्तव्यः, एवं तद्भेदोऽपीत्यनवस्था प्रामाणिकत्वान्न दोषायेत्याह तस्मा-

दृष्ट्यादयश्च किमादिकैः पदैः सत्पदादिकैश्च प्ररूप्यमाणा यथावद् ज्ञातव्याः ॥१॥

इदानीं किमादिपदैर्निरूपयन्नाह—

**किं जीवा उवसमाइएहिं भावेहिं संजुयं दव्वं। कस्स सरूवस्स पहू केणंति न केणइ कया उ ॥२॥**

(स्वो०)—'किं जीवाः? उपशमादिभिर्भावैः संयुतं द्रव्यं, कस्य? स्वरूपस्य प्रभवः, केनेति? न केनचित्कृतास्तु' पदानि। पदार्थस्तु—किं जीवाः? इत्येवं पृष्टे उपशमादिभिर्भावैः संयुतं द्रव्यं जीवा अभिधीयन्ते। कस्येत्येवं पृष्टे स्वरूपस्य—आत्मीयरूपस्य प्रभवः-स्वामिनो भवन्ति। केन कृताः? इति पृष्टे न केनचित्कृता—न केनचिद्विहिताः, स्वाभाविकस्वरूपावस्थितत्वात्। तुशब्दस्तेषां नित्यत्वावधारणार्थ एव, अत्राह—किमर्थमौदयिकपारिणामिकक्षायिकान् परित्यज्यौपशमिकभावोपन्यास इति? उच्यते—औदयिकपारिणामिकौ भावावजीवानामपि भवतः, अयन्तु जीवलक्षणमधिकृत्योक्तः, क्षायिकस्य (क्षायोपशमिकस्य) चौपशमिकपूर्वकत्वादयमेव युक्तियुक्त इति गाथार्थः ॥२॥

(मलय०)—तत्र 'यथोद्देशं निर्देशः' इति न्यायात्प्रथमतः किमादिपदैः प्ररूपणां चिकीर्षुराह—किं जीवाः? किं नाम जीवा इत्यभिधीयते? एवं परेण प्रश्ने कृते सति सूरिरुत्तरमाह—उपशमादिभिः, उपशमौदयिकक्षायिकक्षायोपशमिकपारिणामिकैर्भावैः संयुतं-सन्मिश्रं द्रव्यम्। आह—औदयिकादीन् भावान् परित्यज्य किमितीहौपशमिकस्य भावस्य साक्षादुपादानम? उच्यते—इह जीवस्य स्वरूपं पृष्टेन सता तदेव वक्तव्यं यदसाधारणं स्वरूपम्। एवं हि पदार्थान्तरस्वरूपेभ्यो वैविक्त्येन तत्प्रतिपादितं भवति, नान्यथा। औदयिकपारिणामिकौ च भावावजीवानामपि भवतः, अतस्तौ साक्षान्नोपात्तौ, क्षायिकोऽपि च भाव औपशमिकभावपूर्वकः, न खल्वौपश-

सेति ध्येयम्, उदयनाचार्यमते ध्वंसप्रागभावः ध्वंसप्रतियोगिरूपः प्रागभावध्वंसः प्रागभावप्रतियोग्यात्मेति तन्मतमाश्रित्याह एतेनेति, द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वेनेत्यर्थः, ननु स्वरूपवैधर्म्ययोर्भेदरूपत्वाऽभावे कथं तत्र भेदव्यवहार इत्यत आह भिद्यत इति, भेदपदप्रवृत्तिनिमित्तं भेदत्वमन्योन्याभावे वर्त्तत इति तत्र तद्व्यवहारो मुख्यः, स्वरूपे तु भिद्यतेऽयमिति कर्मव्युत्पत्त्या, वैधर्म्ये च भिद्यतेऽनेनेतिकरणव्युत्पत्त्या भेदत्वमिति तत्र तद्व्यवहारो गौण इति भावः ॥ धर्मिभेदधर्मात्यन्ताभावयोरैक्यमितिमतेनाह—

केचित्तु प्रतियोगितावच्छेदकधर्मात्यन्ताभाव एव तद्वदन्योन्याभावः, वैपरीत्यमेव किं न स्यादिति चेत्, न, अनवबोधात्, एकस्यैवोभयरूपताभ्युपगमात्, धर्म्यन्योन्याभावत्वधर्मात्यन्ताभावत्वोपगमादित्यर्थः, अवृत्तिगगनादेरत्यन्ताभावस्यावश्योपेयत्वाच्च, तेन न भेदत्वमत्यन्ताऽभावत्वमित्यपि सुवचम्। अथैवमव्याप्यवृत्तिधर्मवदन्योन्याभावोऽप्यव्याप्यवृत्तिः स्यादिति चेत्, न, इष्टत्वात्, अस्तु वाऽन्योऽन्याभावव्याप्यवृत्तित्वप्रवादरक्षार्थं तत्सहचरितव्याप्यवृत्तिधर्मान्तरात्यन्ताभाव एव तथा।

केचित्तु प्रतियोगितावच्छेदकधर्मेति, गगनवद्भेदस्याप्रसिद्धत्वेन गगनात्यन्ताभावस्य गगनवद्भेदरूपत्वासंभवेनातिरिक्तत्वव्यवस्थितेरन्यत्रापि धर्माऽत्यन्ताभाव एव धर्म्यन्योन्याभावात्मक इत्याह अवृत्तिगगनादेरिति। नन्वेवं सति कपिसंयोगात्यन्ताभाव इव तदभिन्नत्वात् कपिसंयोगवद्भेदोऽप्यव्याप्यवृत्तिस्स्यादित्याशंकते अथैवमिति। तत्सहचरितेत्यादीति अव्याप्यवृत्तिनः कपिसंयोगादेस्सहचरितं समानाधिकरणं यद्व्याप्यवृत्तिधर्मान्तरं तत्तद्वृक्षत्वादि तदत्यन्ताभाव एव कपिसंयोगवदन्यो-

(मलय)—कुत्र जीवा अवतिष्ठन्ते ? इति प्रश्ने कृते सत्युत्तरमाचार्य आह—शरीरे लोके वा, तत्र सामान्यचिन्तायां लोके नालोके, अलोके स्वभावत एव धर्माधर्मास्तिकायजीवपुद्गलानामसंभवात्। विशेषचिन्तायां शरीरे नान्यत्र, शरीरपरमाणुभिरेव सह आत्मप्रदेशानां क्षीरनीरवदन्योऽन्यानुगमभावात्। उक्तं च—"अन्नोन्नमणुगयाइं इमं च तं च त्ति विभयणमजुत्तं। जह खीरपाणीयाइं ति।" तथा 'केवचिर'त्ति—कियच्चिरं कियत्कालं जीवा भवन्तीति प्रश्ने कृते सत्युत्तरं—सर्वकालमेव, तुरेवकारार्थः, इह 'केणं ति न केणई कयाउ' इत्यनेन ग्रन्थेन पूर्वं जीवानामनादित्वमावेदितं, इदानीं त्वनिधनत्वं, ततश्चानादिनिधना जीवा इति द्रष्टव्यम्। तथा च सति मुक्त्यवस्थामधिगता अपि जीवा न विनश्यन्ति किंतु ज्ञानादिके स्वस्वरूपेऽवतिष्ठन्ते इति श्रद्धेयम्। तेन यत्कैश्चिदुच्यते—"दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम्। दिशं न काञ्चिद्विदिशं न कांचित्स्नेहक्षयात्केवलमेति शांन्ति ॥१॥ जीवस्तथा निर्वृत्तिमभ्युपेतो नैवावनिं गच्छति नांतरिक्षम्। दिशं न काञ्चिद्विदिशं न काञ्चित्स्नेहक्षयात्केवलमेति शान्तिम् ॥२॥" तथा—"अर्हन्मरणचित्तस्य प्रतिसंधिर्न विद्यते। प्रदीपस्येव निर्वाणं, विमोक्षस्तस्य चेतसः ॥३॥" इति तदपास्तमवसेयम्, सतः सर्वथाविनाशायोगात् तथादर्शनादिति कृतं प्रसङ्गेन, माभूद् ग्रन्थगौरवमिति कृत्वा। तथा कतिभिरुपशमादिभिर्भावैर्युताः—संयुक्ता जीवाः ? इति प्रश्ने कृते सति उत्तरमाह—द्विकत्रिकचतुःपञ्चमिश्रैः। ननु के उपशमादयो भावाः ? किं वा तेषां द्विकादिकमिति ? उच्यते—इह भावाः षट्, तद्यथा—औदयिक औपशमिकः क्षायिकः क्षायोपशमिकः पारिणामिकः सान्निपातिकश्च। तत्रौदयिको द्विधा, उदय उदयनिष्पन्नश्च। तत्राष्टानां कर्मणां यथास्वमुदयप्राप्तानामात्मीयात्मीयस्वरूपेणानुभवनमुदयः, उदय एव औदयिकः। विनयादेराकृतिगणतयोदयशब्दस्य तन्मध्यपाठाभ्युपगमात्, 'विनयादिभ्य' इति स्वार्थे इकण्प्रत्ययः, एवमुत्तरत्रापि द्रष्टव्यम्। उदयनिष्पन्नो द्विधा, जीवविषयोऽजीवविषयश्च। तत्र चेयं

जीवस्थानेषु किमादिपदानि

स्स्यात, एवं घटात्यन्ताभावे घटप्रतियोगिकमत्यन्ताभावत्वमेव, नतु तस्य पटाभावभेदरूपतया घटप्रतियोगिकं भेदत्वं, पटाऽभावेऽपि पटप्रतियोगिकमत्यन्ताभावत्वमेव, नतु घटाऽभावभेदरूपतया पटप्रतियोगिकं भेदत्वं, तथा सति घटात्यन्ताभाववति घटे घटो नेति घटभेदप्रतीतिस्स्यात्, पटाऽत्यन्ताभाववति पटे पटोनेति पटभेदप्रतीतिश्च स्यादित्याह अन्यथेति, अथवोक्तदोषनिवृत्तये पटाभावे घटाभावभेदस्यातिरिक्तत्वे तद्भेदोऽप्यतिरिक्त इत्येवं भेदधाराया अविश्रान्तिस्स्यादिति दूषणान्तरमाह—

भेदानन्त्यप्रसङ्गाद्वा, तथा तस्यापि धर्मप्रतियोगिकमेवात्यन्ताभावत्वं, धर्मिप्रतियोगिकमेवान्योन्याभावत्वमित्यदोषात्, अनुयोगिवाचकपदोत्तरसप्तमीसमभिव्याहृतनञ्पदजन्यपदार्थोपस्थितेरत्यन्ताभावत्वप्रकारकशाब्द एव हेतुत्वात्, तादृशस्थले संसर्गावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वाच्च नात्यन्ताभावरूपान्योन्याभावमादायोक्तापत्तिः। अत एव घटो न घट इति वाक्यस्य न भेदरूपघटात्यन्ताभावमादाय योग्यत्वम्, अनुयोगिप्रतियोगिवाचकपदयोः समानविभक्तिकत्वे तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वात् घटभेदत्वविशिष्टस्य घटेऽसत्त्वाच्चेति निष्कर्षः। भावस्येवाभावस्यापि भेदो विरुद्धधर्माध्यासादेवेति वदन्ति ॥

भेदानन्त्यप्रसङ्गाद्वेति। तस्मादभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणरूपत्वमिति नियमाद् घटाऽभावपटाभावभेदयोरैक्येऽपि यथा घटाभावस्य पटाभावप्रतियोगिकं भेदत्वमेव, नतु पटाभावप्रतियोगिकमत्यन्ताभावत्वं, तथा धर्मिभेदधर्मात्यन्ताभावयोरैक्येऽपि घटभेदस्य घटत्वप्रतियोगिकमेवात्यन्ताभावत्वं घटप्रतियोगिकमेव भेदत्वं न तु घटप्रतियोगिकमत्यन्ताभावत्वं घटत्वभेदस्यापि च घटत्वप्रतियोगिकमत्यन्ताभावत्वं भेदत्वं च घटत्वप्रतियोगिकमेवेति न घटवति भूतले नात्र घट इति घटे

चित्रो जीवस्य परिणतिविशेषः, तद्यथा-केवलज्ञानित्वं, केवलदर्शनित्वं, क्षीणमतिज्ञानावरणत्वं, क्षीणश्रुतज्ञानावरणत्वं, यावत्क्षीणवीर्या-
न्तरायत्वं, मुक्तत्वमिति। क्षायोपशमिकोऽपि भावो द्विधा, तद्यथा-क्षयोपशमः क्षयोपशमनिष्पन्नश्च। तत्रोदीर्णस्यांशस्य क्षयः, अनुदीर्णस्य
चांशस्य विपाकमधिकृत्योपशमः क्षयोपशमः। स च चतुर्णां घातिकर्मणां ज्ञानावरणदर्शनावरणमोहनीयान्तरायरूपाणामवसेयः नान्येषां,
क्षयोपशम एव क्षायोपशमिकः। क्षयोपशमनिष्पन्नस्तु घातिकर्मक्षयोपशमसंपाद्यो मतिज्ञानादिलब्धिरूप आत्मनः परिणामविशेषः।
तथा चोक्तमार्षे—"से किं तं खओवसमनिप्फन्ने? खओवसमनिप्फन्ने अणेगविहे पन्नत्ते, तंजहा—खओवसमिया आभिणिबोहियना-
णलद्धी, एवं सुयनाणलद्धी, ओहिनाणलद्धी, मणपज्जवनाणलद्धी, खओवसमिया मइअन्नाणलद्धी, खओवसमिया सुयअन्नाणलद्धी, खओ-
वसमिया विभंगनाणलद्धी, खओवसमिया सम्मदंसणलद्धी, खओवसमिया सम्ममिच्छदंसणलद्धी, खओवसमिया सामाइयलद्धी, खओव-
समिया छेओवट्ठावणलद्धी, एवं परिहारविसुद्धियलद्धी, सुहुमसंपरायलद्धी, खओवसमिया चरित्ताचरित्तलद्धी, खओवसमिया दाणलद्धी,
खओवसमिया लाभलद्धी, एवं भोगलद्धी, उवभोगलद्धी, खओवसमिया वीरियलद्धी, खओवसमिया पंडियवीरियलद्धी, एवं बालवीरिय-
लद्धी, बालपंडियवीरियलद्धी, खओवसमिया सोइंदियलद्धी, एवं चक्खुइंदियलद्धी, घाणिंदियलद्धी, जिब्भिंदियलद्धी, फासिंदियलद्धी
इत्यादि"। तथा परिणमनं परिणामः। कथंचिदवस्थितस्य वस्तुनः पूर्वावस्थापरित्यागेनोत्तरावस्थागमनम्। उक्तं च-"परिणामो ह्यर्था-
न्तरगमनं न च सर्वथा व्यवस्थानं। न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः ॥१॥" परिणाम एव पारिणामिकः, स च साद्यनादि-
भेदाद् द्विधा। तत्र ये गुडघृततण्डुलासवघटादीनां नवपुराणत्वादयोऽवस्थाविशेषाः, ये च वर्षधरपर्वतभवनविमानकूटरत्नप्रभादीनां पुद्ग-
लविचटनचटनसंपाद्या अवस्थाविशेषाः, यानि च गंधर्वनगराणि, यच्च कपिहसितमुल्कापातो गर्जितं महिका दिग्दाहो विद्युत् चंद्रपरि-
वेषः सूर्यपरिवेषः चन्द्रसूर्यग्रसनमिन्द्रधनुरित्यादि, स सर्वः सादिः पारिणामिको भावः। अनादिपारिणामिकस्तु लोकस्थितिरलोकस्थि-

तीतौ प्रतीतिरित्यत्र द्वितीयप्रतीतिपदं व्यवहर्त्तव्यज्ञाने सति व्यवहार इत्येतदर्थं, नतु लक्षणे प्रविष्टमित्याह प्रतीतिस्त्विति, समानविभक्तिकत्वमिति तच्च स्वाव्यवहितोत्तरविभक्तिसजातीयविभक्त्यव्यवहितपूर्वत्वम्, तत्र साजात्यं विभक्तिविभाजकप्रथमात्वादिना बोध्यम्, इतरभेदानुमापकं हि लक्षणमित्युक्तलक्षणहेतुना इतरेतराभावपक्षे इतरभेदानुमाने उक्तलक्षणहेतोस्तादृशनिषेधप्रत्ययस्यात्मनि सद्भावेनोक्तपक्षेऽभावात्स्वरूपासिद्धिस्स्यादित्यत आह तादृशेति, पदत्रयस्यापीत्यनेन नञ्पदस्याप्यनुयोगिप्रतियोगिपदसमानविभक्तिकत्वं व्यञ्जितं, तत्फलमाह अघटमिति, अत्यन्ताभावस्यैव बोधादिति न विद्यते घटो यत्रेतिव्युत्पत्त्याऽघटमित्यनेन घटात्यन्ताभावस्यैव बोधादित्यर्थः,तथेति अन्योन्याभावलक्षणमित्यर्थः। अघटं भूतलमित्यत्र दोषसद्भावेऽपि दोषान्तरमाह—

**न पचति देवदत्तो नेदं देवदत्तस्येत्यादिकमादायातिव्याप्त्यापत्तेः । नन्वेतदप्रतिपाद्यमानतादशायामव्यापकं, न च यदा कदाचित् प्रतिपाद्यमानत्वं घटकमिति वाच्यम्, तथापि सकलतद्व्यक्तीनां प्रमाणाभावेन तादृशाभिलापासम्भवेनोक्तदोषानुद्धारात्, योग्यतायाश्चानुगतरूपनिरूप्यत्वात् ॥**

न पचतीति, देवदत्त इत्यस्येदमित्यस्य च प्रथमाविभक्तिसमभिव्याहृतानुयोगिपदत्वेप्याद्ये पाकानुकूलकृत्यत्यन्ताभावस्यैव द्वितीये च देवदत्तनिरूपितस्वत्वसम्बन्धात्यन्ताभावस्यैव बोधात्तादृशनञ्प्रतिपाद्यत्वमलक्ष्यीभूतेऽत्यन्ताभावेऽपि गतमित्यतिव्याप्तिस्स्यादिति भावः, ननु यदा नञाऽन्योन्याभावो न प्रतिपादितस्तदानीं तत्राव्याप्तिः,न च प्रतियोगिन्यधिकरणप्रतिपाद्यमानत्वाभावाभावतत्त्वं विवक्षितमिति तदानीं स प्रतिपाद्यमानत्वाभावविशिष्टोऽपि न प्रतियोग्यनधिकरणवृत्तित्वविशिष्टतद्विशिष्टः, यदा कदाचिन्नञा तस्य प्रतिपाद्यमानत्वेन तदभावस्य प्रतियोगिसमानाधिकरणत्वादित्युक्ताव्याप्तिर्नेति वाच्यं, तथापि याऽन्योन्याभावव्यक्ति-

परमार्थतः षडेव । तद्यथा—एको द्विकसंयोगे, द्वौ त्रिकसंयोगे, द्वौ चतुष्कसंयोगे, एकः पञ्चकसंयोगे । शेषास्तु विंशतिरप्यसंभविनः । तत्र द्विकसंयोगे एको भङ्गो नवमः संभवति, तद्यथा—क्षायिकः पारिणामिक इति । एष च सिद्धानधिकृत्य वेदितव्यः, तत्र क्षायिको भावः क्षायिकसम्यक्त्वकेवलज्ञानादि, पारिणामिको जीवत्वम् । त्रिकसंयोगे एको भङ्गः पञ्चमः संभवति, तद्यथा—औदयिकः क्षायिकः पारिणामिकः । तत्रौदयिकं मनुष्यत्वादि, क्षायिकं केवलज्ञानादि, पारिणामिके जीवत्वभव्यत्वे, एष भंगः केवलिनो वेदितव्यः । द्वितीयस्तु त्रिकसंयोगे भङ्गः षष्ठः संभवति, तद्यथा—औदयिकः क्षायोपशमिकः पारिणामिक इति । एष भङ्गश्चतुर्गतिकानपि संसारिणोऽधिकृत्य वेदितव्यः । तत्रौदयिको नारकत्वादिपर्यायः, क्षायोपशमिक इन्द्रियमत्यज्ञानादि, पारिणामिको जीवत्वं भव्यत्वमभव्यत्वं च । अत एवष भङ्गो गतिभेदाच्चतुर्धा भिद्यते, तद्यथा—निरयगतावौदयिकं नैरयिकत्वं, क्षायोपशमिकमिन्द्रियादि, पारिणामिकं जीवत्वादि । तिर्यग्गतावौदयिकं तिर्यग्योनित्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि । एवं देवमनुष्यगत्योरपि भावना कार्या । अमीषामेव त्रयाणां भावानां मध्ये यदा क्षायिको भावश्चतुर्थः प्रक्षिप्यते तदा चतुष्कसंयोगो भवति । एवं चाभिलपनीयः, औदयिकः क्षायिकः क्षायोपशमिकः परिणामिकः । एष चतुष्कसंयोगे चतुर्थो भङ्गः । अयं चास्य भावार्थः—औदयिकं मनुष्यत्वादि, क्षायिकं सम्यक्त्वं क्षायोपशमिकमिन्द्रियादि, परिणामिकं जीवत्वादि । एषोऽपि गतिभेदात्प्राग्वच्चतुर्धाऽवगन्तव्यः । अथवा क्षायिकभावस्थाने औपशमिको भावः प्रक्षिप्यते, एवं चाभिलापः—औदयिक औपशमिकः क्षायोपशमिकः पारिणामिकः । एष चतुष्कसंयोगे तृतीयो भङ्गः । एषोऽपि गतिभेदात्प्रागिव चतुर्धा भावनीयः—नवरमौपशमिकं सम्यक्त्वमवगन्तव्यम् । पञ्चकसंयोगे तु भङ्ग उपशमश्रेण्यामेवोपपद्यते नान्यत्र, स चैवमभिलपनीयः—औदयिक औपशमिकः क्षायिकः क्षायोपशमिकः पारिणामिकः । अस्यायं भावार्थः—औदयिकं मनुष्यत्वादि, औ-

घटवति समवायादिसम्बन्धावच्छिन्नघटात्यन्ताभावस्य सत्त्वेन तत्रातिव्याप्तेरुक्तलक्षणहेतुकभेदपक्षकेतरभेदसाध्यकानुमाने व्यभिचारदोष इत्यर्थः । लक्षणान्तरमाशङ्क्य प्रतिक्षिपति—

न चाधिकरणावृत्तिस्वप्रतियोगिकवृत्त्यभावविभाजकशून्याभावत्वमपि तथा, अवृत्तिगगनान्योन्याभावेऽतिव्याप्तेः । अथ प्रतियोग्यवृत्तिसार्वदिकाभावत्वं तत्, न च कालान्योन्याभावेऽव्याप्तिः, काले द्रव्यभेदद्रव्यत्वाभावयोर्वृत्तावपि कालो न द्रव्यं काले न द्रव्यत्वमित्यप्रत्ययात् तादृशप्रतीतिनियामकवृत्तेर्विवक्षितत्वादिति चेत्, न, सामान्यं सत् सती सत्तेति प्रत्ययानुरोधादेकार्थसमवायेन सामान्यं द्रव्यमित्याद्यतिप्रसङ्गवारकस्वरूपसम्बन्धविशेषेण वा सत्तायामपि सत्ताया वृत्तिरुपेया, तेन सम्बन्धेन च सत्ताविरहो न सत्तावृत्तिरिति तत्रातिव्याप्तेः, पूर्वोक्तदोषाच्च । अथ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनमारोप्य निषेधः प्रतीयते, अन्यथा यावत्सम्बन्धेन घटाभावप्रतीतिप्रसङ्गात् ॥

न चाधिकरणेति । अधिकरणावृत्तिस्वप्रतियोगी यस्य सोऽधिकरणावृत्तिस्वप्रतियोगिकस्तद्वृत्तियोऽभावविभाजकधर्मस्तच्छून्याभावत्वमित्यर्थः, गगनस्यावृत्तिमत्त्वपक्षे गगनभेदस्याधिकरणावृत्तिस्वप्रतियोगिकतया तद्वृत्त्यभावविभाजकान्योन्याभावत्वस्यान्योन्याभावमात्रे सत्त्वेन तच्छून्यत्वे सत्यभावत्वस्य कस्मिंश्चिदपि भेदेऽसत्त्वेनासम्भवापत्तेरित्याह अवृत्तीति । अतिव्याप्तेरिति लक्षणघटकस्याधिकरणावृत्तिस्वप्रतियोगिकत्वस्यातिव्याप्तेरित्यर्थः । तेन तद्घटितलक्षणस्याऽसम्भव एवेत्यर्थतो लभ्यते, प्रतियोग्यवृत्तीत्यादिलक्षणं प्रतियोग्यवृत्तीति विशेषणादत्यन्ताभावे सार्वदिकेति विशेषणात्प्रागभावध्वंसयोश्च नातिव्याप्तिः । काल इति सर्वैवानीति

सुरा नैरयिकाश्च प्रत्येकं तिसृषु तिसृषु तनुषु शरीरेषु वर्त्तन्ते। तद्यथा—तैजसे कार्मणे वैक्रिये च। तथा वायवो वातकायास्तथा पञ्चेन्द्रियतिर्यञ्चः प्रत्येकं चतसृषु चतसृषु तनुषु सम्भवन्ति। तत्र त्रीणि शरीराणि पूर्वोक्तान्येव, चतुर्थं त्वौदारिकमवगन्तव्यम्। वैक्रियं च वायुकायिकानां पञ्चेन्द्रियतिरश्चां च वैक्रियलब्धिमतामवसेयम्, न सर्वेषामविशेषेण। तथा मनुजा मनुष्याः पञ्चस्वपि तनुषु सम्भवन्ति। तद्यथा—औदारिके वैक्रिये आहारके तैजसे कार्मणे च। तत्र वैक्रियं वैक्रियलब्धिमतां, आहारकं चतुर्दशपूर्ववेदिनां, औदारिकतैजसकार्मणानि सुप्रतीतानि। शेषास्त्वेकद्वित्रिचतुरसंज्ञिपञ्चेन्द्रियतिर्यञ्चः प्रत्येकं तिसृषु तिसृषु औदारिकतैजसकार्मणरूपासु तनुषु वेदितव्याः। सिद्धा व्यपगतसकलकर्ममलकलङ्काः पुनरविग्रहा विग्रहरहिता अशरीरा इत्यर्थः ॥४॥

साम्प्रतं सत्पदप्ररूपणामाह—

**पुढवाईचउ चउहा साहारवणंपि संतयं सययं। पत्तेय पज्जपज्जा दुविहा सेसा उ उववन्ना ॥५॥**

(स्वो०)—'पृथिव्यादयश्चत्वारश्चतुर्द्धा, साधारणवनमपि सान्तकं सततं प्रत्येकपर्याप्तकापर्याप्तका द्विविधाः शेपास्तूत्पन्नाः' इति पदानि, पदार्थस्त्वयम्—पृथिवीजलाग्निवायवश्चत्वारः सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदाच्चतुर्द्धा—चतुष्प्रकारा भवन्ति, साधारणवनमप्येवमेव चतुर्द्धा, सततमनवरतं द्विधा प्रागुत्पन्नमुत्पद्यमानकं च भवति, प्रत्येकपर्याप्तकापर्याप्तकवनस्पतिकायिकाः तुर्यपदे, तुशब्दस्यानेकार्थत्वाद्बादरा एव, ते चैवमेव भवन्ति। शेषा—द्वित्रिचतुःपञ्चेन्द्रियासंज्ञिपर्याप्तकाः (अपर्याप्तकाः)संज्ञिपर्याप्तकाश्च प्रागुत्पन्नाः सन्ति, उत्पद्यमानकास्तु भाज्या इति वाक्यशेषः, तुशब्दस्य विशेषणार्थत्वात् संज्ञिनोऽपर्याप्तकाः प्रागुत्पन्नाः उत्पद्यमानकाश्च भाज्याः, यतस्तेषामन्तर्मुहूर्त्तमवस्थानम्, उत्कृष्टतो द्वादश मुहूर्त्ता अन्तरं। आह—यद्येवं द्वित्रिचतुरसंज्ञ्यपर्याप्तकानामप्यन्तर्मुहूर्त्तमवस्थानं तदेवान्तर्मुहूर्त्तमन्तरं,

मानाभावात्, अनाहार्यस्यारोपस्य विरोधित्वात्, आहार्यस्य चाभावप्रत्ययतः प्रागसम्भवात्, विरोधिनिश्चयकालीने हि प्रत्यये तादृशेच्छाया हेतुत्वात् तज्जन्यमाहार्यम्, अभावप्रत्ययाभावे च विरोधिनिश्चयाभावान्नेच्छाहेतुत्वावकाशः, प्रागपि तदुपगमे त्वनवस्थाव्यभिचारान्यतरावकाश इति ।

इत्थं च संयोगादिनेति आदिनाऽत्यन्ताभावस्य प्रतियोगितावच्छेदकसंबन्धस्समवायादिरिव ध्वंसप्रागभावयोरपि प्रतियोगितावच्छेदकसम्बन्धावुत्तरकालपूर्वकालरूपौ ग्राह्याविति ताभ्यां सम्बन्धाभ्यां प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षहेतुरतस्तयोर्नाव्याप्तिरित्याशयः । सर्वत्राभावज्ञाने प्रतियोग्यारोपस्य कारणत्वेऽनाहार्यस्य तस्य तद्वत्तानिश्चयरूपत्वेन तदभाववत्ताबुद्धिं प्रति प्रतिबंधकत्वात्कारणत्वासंभवेनाऽऽहार्यस्यैव तत्त्वं वाच्यं, तच्च न संभवति, यतो बाधकाले हीच्छाजन्यज्ञानस्याहार्यत्वेन प्रतियोग्यारोपात्पूर्वमभावनिश्चयो वाच्यः, सोऽपि च प्रतियोग्यारोपजन्य इति तत्पूर्वं प्रतियोग्यारोपो वाच्यस्तस्यापि चाहार्यत्वेन तत्पूर्वमभावनिश्चयो वाच्य इत्येवमनवस्था, क्वचिद्गत्वा प्रतियोग्यारोपं विनैवाभावज्ञानमुपेयते तदा तत्रैव व्यतिरेकव्यभिचारात् प्रतियोग्यारोपस्याभावज्ञाने न कारणत्वमित्याह मैवमिति । अभावप्रत्यक्षेच्छाविरहविशिष्टस्यैवानाहार्यस्य प्रतियोगिज्ञानस्याभावधीप्रतिबन्धकत्वेनाभावप्रत्यक्षपूर्वसमये चाभावप्रत्यक्षेच्छायास्सत्त्वेन तद्विरहविशिष्टत्वस्याभावबुद्धिकारणतयाऽभिमते प्रतियोग्यारोपेऽसत्त्वेन न तस्य प्रतिबन्धकत्वमिति प्रतिबन्धकाभावरूपस्य तस्याभावधीहेतुत्वादिच्छाकाले तत्सत्त्वेन नाभावप्रत्यक्षानुपपत्तिरित्याशङ्क्य परिहरति—

न च तत्तदिच्छाविरहविशिष्टविरोधिनिश्चयाभावस्यैव तत्तद्विशिष्टधीहेतुत्वात् प्रतियोग्यारोपसत्त्वेऽपि नाभावप्रत्ययानुपपत्तिरिति वाच्यम्, सर्वस्याभावप्रत्यक्षस्येच्छापूर्वकत्वासिद्धेः । अथैवं संसर्गाभावप्रत्ययका-

संज्ञिनो लब्ध्यपर्याप्तकाः प्रागुत्पन्ना उत्पद्यमानाश्च भाज्याः। कथमेतदवसीयते? इति चेत्, उच्यते–इह संज्ञिनां लब्ध्यपर्याप्तकानामवस्थानमन्तर्मुहूर्त्तमात्रं, तेषामायुषोऽन्तर्मुहूर्त्तमात्रत्वात्, अन्तरं चैतेषामुत्पत्तिमधिकृत्योत्कर्षतो द्वादशमुहूर्त्ताः, ततस्ते प्रागुत्पन्ना अपि सत्तायां भाज्याः। ननु द्वित्रिचतुरसंज्ञिपञ्चेन्द्रिया अपि लब्ध्यपर्याप्तका अन्तर्मुहूर्त्तायुषः, अन्तरमपि च तेषामन्तर्मुहूर्त्तमात्रमन्यत्रोद्घुष्यते, ततः कथं तेऽपि प्रागुत्पन्ना भाज्या न भवन्ति? नैष दोषः, तेषामवस्थानस्य बृहत्तरान्तर्मुहूर्त्तप्रमाणत्वात्, तदायुषस्तावन्मात्रत्वात्। कथमिदमवसितमिति चेत्, उच्यते–ग्रन्थान्तरे नित्यराश्यधिकारे नित्यराशिभिः सह तेषां यौगपद्येनाभिधानात् ॥५॥

**मिच्छा अविरयदेसा पमत्तअपमत्तया सजोगी य। सव्वद्धं इयरगुणा नाणाजीवेसु वि न होंति ॥६॥**

(स्वो०)—'मिथ्यादृष्टयोऽविरतदेशविरताः प्रमत्ताप्रमत्तकाः सयोगी च। सर्वाद्धां इतरगुणा नानाजीवेष्वपि न भवन्तीति' पदानि। पदार्थोऽधुना–मिथ्यादृष्टयोऽविरतसम्यग्दृष्टयो देशविरताः प्रमत्ता अप्रमत्तकाः सयोगिनश्च एते षड्गुणस्थानजीवाः सर्वाद्धां–सर्वकालं सन्तो भवन्ति। 'इतरगुणाः' शेषगुणस्थानजीवा 'नानाप्रकारेष्वपि' सर्वजीवेष्वप्यन्विष्यमाणाः सर्वकालं न भवन्तीति गाथार्थः ॥६॥

(मलय०)—तदेवं चतुर्दशविधान् सत्पदप्ररूपणया प्ररूप्य सांप्रतमेतेषामेवान्तिमो भेदश्चतुर्दशप्रकारः सत्पदप्ररूपणया प्ररूपयितव्यः, स च चतुर्दशधा गुणस्थानकभेदाद्भवति, ततो गुणस्थानकान्येव सत्पदप्ररूपणया प्ररूपयति–मिथ्यादृष्ट्यविरतदेशविरतप्रमत्ताप्रमत्तसयोगिकेवलिलक्षणानि षड् गुणस्थानकानि सर्वाद्धं सर्वकालं विद्यन्ते, इतराणि–शेषाणि 'गुण' त्ति–गुणस्थानकानि सास्वादनसम्यग्मिथ्यादृष्ट्यपूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशांतमोहक्षीणमोहायोगिकेवलिलक्षणान्यष्टसंख्याकानि नानाजीवेष्वपि, आस्तामेकस्मिन् जीवे इत्यपि शब्दार्थः, न सर्वकालं भवन्ति, न सर्वकालं विद्यमानानि प्राप्यन्ते इत्यर्थः, किंतु कदाचिदेव। यदापि च सासादनादयः

क्षाऽभावेन प्रतियोग्यारोपजन्यप्रतीतिविषयत्वाभावादव्याप्तिरिति भावः। अन्योन्याभावस्यैव लक्षणान्तरमुपपादनपूर्वकमाशङ्कते—

अथैकसम्बन्धेन प्रतियोगिमत्यपि सम्बन्धान्तरेणाभावसत्त्वात् सम्बन्धविशेषोऽपि प्रतियोगितावच्छेदकोऽभ्युपेयते, तथा च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति चेत्, न, तादात्म्यं हि तद्वृत्तिर्द्धर्मविशेषः, प्रतियोगितावच्छेदकमिति यावत्, संयोगिनश्च तादात्म्यं संयोग एव, तथा च संयोगसम्बन्धेन संयोगिनोऽत्यन्ताभावेऽतिव्याप्तेः। संयोगितादात्म्यं संयोगित्वं, न तु संयोग इति चेत्, न, सम्बन्धाविशेषणत्वेन शुद्धस्यापि संयोगस्य समवायेन प्रकारत्वसम्भवेन तादात्म्यत्वात्, ध्वंसप्रागभावान्योऽन्याभावप्रतियोगिताया सम्बन्धभेदानुप्रवेशो मानाभावाच्च॥

अथैकसम्बन्धेनेति, संयोगिनोऽत्यन्ताभावस्य प्रतियोगी संयोगी, स च संयोगसम्बन्धवद्रूपः, तत्र च संयोगसम्बन्धो विशेषणत्वात् प्रतियोगितावच्छेदको धर्मः, नतु संयोगः, तस्य सम्बन्धविशेषणत्वेन प्रतियोगितावच्छेदकतावच्छेदकत्वात्; एवञ्च संयोगित्वमपि संयोग सम्बन्ध एव, तदेव च संयोगितादात्म्यम्, तदेव च संयोगिभेदप्रतियोगितावच्छेदकसम्बन्धः न तु संयोगस्तथेति नोक्तातिव्याप्तिरित्याशङ्कते संयोगितादात्म्यमिति, संयोगीत्यस्य समवायेन संयोगवानित्येवार्थः, तथा च संयोगस्यैव प्रतियोगितावच्छेदकत्वं, स एव च संयोगितादात्म्यमित्यतिप्रसङ्गस्तदवस्थ एवेत्युत्तरयति—सम्बन्धाऽविशेषणत्वेनेति, एकसम्बन्धेन प्रतियोगिमत्त्वनिश्चयेऽपि सम्बन्धान्तरेणाभाववत्त्वबुद्ध्युत्पादात्सम्बन्धान्तरेणाभाववत्त्वनिश्चयेऽपि सम्बन्धान्तरेण प्रतियोगिमत्त्वबुद्ध्युत्पादाच्च तत्सम्बन्धेन तद्वत्त्वबुद्धिं प्रति तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वनिश्चयस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वबुद्धिं प्रति तत्स-

२५६-१०२४-१७९२-१७९२-११२०-४४८-११२-१६. पुनरेकत्र मिश्राः ६५६० एवं भवेयुर्भङ्गाः। भावना-प्रत्येकपदेषु द्वौ द्वौ, एवं षोडश, एकैकद्विकयोगे चत्वारः चत्वारः एवं सर्वेषु द्वादशोत्तरं शतं ११२, एकैकत्रिकयोगे अष्टौ अष्टौ सर्वेषु चत्वारि शतानि अष्टचत्वारिंशदधिकानि, ते च छन्दोवत्स्थाप्याः, एवमन्येऽपि भावनीया इति गाथार्थः॥७॥

(मलय०)—एतेषां च सासादनादीनामष्टसंख्याकानां यावन्तो भेदा एकद्विकादिसंयोगतः सर्वसंख्यया भवन्ति, तावतः प्रतिपिपादयिषुः सामान्यतः करणगाथामाह-एकद्विकयोगादीनां-एककद्विकत्रिकसंयोगादीनां प्रत्येकमधस्तादेकानेकरूपं युगलं-द्विकमवस्थाप्यते, तत एककयोगादारभ्य 'दुदुगुण' त्ति-द्विगुणा द्वाभ्यां सहिता द्विद्विगुणाः, तथाहि-पाश्चात्या भङ्गा द्विगुणाः क्रियन्ते, ततो द्विकसहिता विधेयाः, ततः पुनरपि गुणितविमिश्रा ये भङ्गाः प्राचीना द्वाभ्यां गुणितास्तैः केवलैः सहिताः क्रियन्ते, तत ईप्सितपदे इष्टसंख्याका भङ्गा भवन्ति। इयमत्र भावना-इह यावन्तः पदार्था विकल्पेन भवन्तो भेदसंख्यया ज्ञातुमिष्टास्तावन्तोऽसत्कल्पनया बिंदवः स्थाप्यन्ते। इह च प्रकृता अष्टौ सासादनादयः, ततोऽष्टौ बिंदवः स्थाप्यन्ते, तेषां चाधस्तात्प्रत्येकं द्विकः स्थाप्यः। स्थापना चेयं—$\overset{\circ}{२}\ \overset{\circ}{२}\ \overset{\circ}{२}\ \overset{\circ}{२}\ \overset{\circ}{२}\ \overset{\circ}{२}\ \overset{\circ}{२}\ \overset{\circ}{२}$ तत्रैकपदे द्वौ भङ्गौ, तद्यथा-एको बहवो वेति। पदद्वये भङ्गा अष्टौ, तद्यथा-पाश्चात्यौ द्वौ भङ्गौ द्वाभ्यां गुणितौ, जाताश्चत्वारः, ते द्वितीयबिंदुस्थाने स्थाप्यन्ते, ततोऽधस्तनो द्विकः प्रक्षिप्यते, जाताः षट्, ततो 'गुणियविमिस्सा' इति वचनात् यौ पाश्चात्यौ द्वौ भङ्गौ द्वाभ्यां गुणितौ, तौ षट्सु मध्ये प्रक्षिप्येते, ततो जाता अष्टौ, एतावन्तः पदद्वये भङ्गाः। ननु पदद्वये भङ्गाश्चत्वार एव प्राप्यन्ते। तथाहि-किल एकः सासादन एको मिश्र इत्येको भङ्गः, एकः सासादनो बहवो मिश्रा इति द्वितीयः, बहवः सासादना एको मिश्र इति तृतीयः, बहवः सासादना बहवो मिश्रा इति चतुर्थः, अतः परमेकोऽपि भङ्गो न संभवति, तत्कथमुच्यते पदद्वये भङ्गा

ध्वंसप्रागभावप्रतियोगितायामिति। सम्बन्धावच्छिन्नेत्यादिलक्षणे सम्बन्धावच्छिन्नप्रतियोगिताकत्वशून्येति विशेषणादत्यन्ताभावे नित्येतिविशेषणात् प्रागभावीयध्वंसीयप्रतियोगिता न किञ्चित्सम्बन्धावच्छिन्नेति पक्षे प्रागभावे ध्वंसे च नातिव्याप्तिः, अन्योन्याभावस्य सम्बन्धघटितत्वेन सम्बन्धस्य च भेदघटितत्वेनान्योन्याश्रयः, भेदाघटितश्च सम्बन्धत्वं दुर्वचमित्याशयेनोक्तलक्षणं निराकरोति विनाऽन्योन्याभावमिति। ननु सम्बन्धत्वस्य कथं भेदघटितत्वमित्यत आह विशेषणेति। तदिति सम्बन्धत्वमित्यर्थः। विशिष्टबुद्धिनियामकत्वं भेदाघटितमेव सम्बन्धत्वस्य लक्षणं यदि ब्रूयात्तदाप्याह अभेदेनेति, द्रव्यं घट इत्यादिशाब्दबोधस्थले द्रव्ये प्रकारतया भासमानस्य घटस्य सम्बन्धस्तादात्म्यं तच्चासाधारणधर्मरूपतया घटत्वरूपमेव स्वीकरणीयम्, एवं च घटत्वधर्मनिष्ठावच्छेदकतापि घटत्वात्मकतादात्म्यसंसर्गनिष्ठा भवतीति तन्निरूपितप्रतियोगिताकत्वेन घटान्योन्याभावादौ सम्बन्धावच्छिन्नप्रतियोगिताकत्वशून्यत्वाभावादऽसंभव इति भावः, न च सम्बन्धावच्छिन्नेत्यत्र संसर्गविधयाऽवच्छेदकता विवक्षितेति नासंभव इति वाच्यम्, सम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकता हि संसर्गविधयाऽवच्छेदकतोच्यते, तथा च तत्र भेदप्रवेशादन्योन्याश्रयः, भेदाघटितं च संसर्गविधयाऽवच्छेदकतालक्षणं दुर्वचमित्याशयेनाह अवच्छेदकतायामिति, शून्यत्वस्याप्यत्यन्ताभावरूपत्वेन तस्य च नित्यसंसर्गाभावरूपतया संसर्गाभावस्य चान्योन्याभावभिन्नाभावरूपतया चक्रकापत्तिः, भेदाघटितं च शून्यत्वं दुर्वचमित्याशयेन दूषणान्तरमाह शून्यत्वस्येति, अन्योन्याभावलक्षणस्य नित्यत्वघटितत्वेन नित्यत्वस्य च भेदघटितत्वेन परस्परापेक्षकत्वादन्योन्याश्रय इत्याशयेनाह नित्यत्वस्येति, नित्यत्वस्यान्योन्याभावघटितत्वं स्पष्टयति—

कालवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वरूपस्य तस्यान्योऽन्याभावगर्भत्वात्, अथ प्राक्ध्वंसा-

शतान्यष्टाविंशत्यधिकानि प्रक्षिप्यन्ते, ततो भवन्त्येकविंशतिशतानि षडशीत्यधिकानि, एतावन्तः सप्तपदभङ्गाः। अमूनि चैकविंशतिशतानि षडशीत्यधिकानि द्वाभ्यां गुण्यन्ते, जातानि त्रिचत्वारिंशच्छतानि द्विसप्तत्यधिकानि, तान्यष्टमबिन्दुस्थाने स्थाप्यन्ते, ततोऽधस्तनो द्विकः प्रक्षिप्यते, ततो जातानि त्रिचत्वारिंशच्छतानि चतुःसप्तत्यधिकानि, ततो भूयोऽपि प्राक्तनान्येकविंशतिशतानि षडशीत्यधिकानि प्रक्षिप्यन्ते, जातानि षष्ठ्यधिकानि पञ्चषष्टिशतानि, एतावन्तोऽष्टपदभङ्गाः ॥७॥

**अहवा एक्कपईया दो भंगा इगिबहुत्तसन्ना जे। ते च्चिय पयवुड्ढीए तिगुणा दुगसंजुया भंगा ॥८॥**

(स्वो०)—अथवैकपदिकौ द्वौ भङ्गौ एकबहुत्वसंज्ञौ यौ तावेव पदवृद्धौ त्रिगुणौ षट् द्विकसंयुतौ अष्टौ भवन्तीति, पदद्वये, एत एव त्रिगुणाः चतुर्विंशतिर्द्वियुता षड्विंशतिरेते त्रिपदभङ्गाः, भूयस्त्रिगुणाः द्वियुता अशीतिः, एते चतुष्पदभङ्गाः, एवं पदवृद्धौ यदृच्छया नेतव्याः, इति गाथार्थः ॥८॥ द्वारम् ॥

(मलय०)—संप्रत्येषामेव भङ्गकानां प्रकारान्तरेण प्ररूपणामाह–अथवेति प्रकारान्तरोपदर्शने। एकपदिकौ एकपदभवौ द्वौ भङ्गौ भवतः, कौ तौ ? इत्याह—यौ एकबहुत्वसंज्ञौ, कदाचिदेकः सासादनः कदाचिदनेक इत्येवंरूपौ। ततस्तावेव द्वौ भंगावादौ कृत्वा पदवृद्धौ द्विकादिपदवृद्धौ प्राक्तनाः प्राक्तनास्त्रिगुणाः क्रियन्ते, ततो द्विकेन संयुक्ता विधेयाः, ततस्तत्तत्पदभङ्गा भवन्ति। इयमत्र भावना—तावेवैकपदिकौ भङ्गौ, पदद्वये त्रिगुणीक्रियते, ततो जाताः षट्, ते द्विकेन संयुज्यन्ते, ततो जायन्तेऽष्टौ, एतावन्तः पदद्वये भङ्गाः। ततस्तेऽष्टौ त्रिगुणाः क्रियन्ते, जाता चतुर्विंशतिः, सा द्विकेन संयुक्ता जाताः षड्विंशतिः, एतावन्तः पदत्रये भङ्गाः। ततः सापि षड्विंशतिस्त्रिगुणीक्रियते, जाता अष्टसप्ततिः, ततो द्विकप्रक्षेपः, ततो भवत्यशीतिः, एतावन्तः पदचतुष्टये भङ्गाः। एवं तावद्वाच्यं यावत्स-

सम्बन्धेनापि तत्र तस्य सत्त्वात्। गोत्वाद्यनुधावनस्य तु कालिकसम्बन्धेन गन्धाधारत्वाभाववत एव तदवच्छेदकत्वसूचनार्थत्वात्। न तृतीयः। गन्धाधारभिन्नत्वस्य भेदघटितत्वेनान्योन्याश्रयात्, अनवच्छिन्नगन्धानाधारत्वग्रहे न दोष इति चेत्, तथापि तादृशसमयसिद्धिर्न विना प्रध्वंसादिप्रत्ययम्, गन्धध्वंसो गन्धानधिकरणवृत्तिः ध्वंसत्वाच्छब्दध्वंसवदित्यनुमानेन तत्सिद्धेः॥

गोत्वादिवृत्तिरिति, इदानीं जले न गन्धाधारत्वमिति प्रत्ययो हि न कदापि जलं समवायेन गन्धीभवतीत्यतो जले गन्धानाधारत्वस्य व्याप्यवृत्तित्वेन न तदवच्छेदकत्वमेतत्कालस्यावगाहते, किन्तु कालेऽव्याप्यवृत्तित्वाज्जलस्यैवेति स्वरूपसंबन्धेनापि जलावच्छेदेन कालमात्रे समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वाभावस्यैव सत्त्वादसंभवस्तदवस्थ एव, गोत्वादिवृत्तिरित्यत्र गोत्वाद्यनुधावनस्य तु तदधिकरणस्यैव तदवच्छेदकत्वमितिनियममाश्रित्य यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगन्धाधारत्वाभावस्वरूपेण तद्वतः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगन्धाधारत्वाभावावच्छेदकत्वसूचनपरत्वमेवेत्याह—इदानीमिति। अन्योन्याभावलक्षणे नित्यत्वस्य नित्यत्वलक्षणे प्रागभावस्य प्रागभावलक्षणे भेदस्य प्रविष्टत्वेनापेक्षणाच्चक्रकदोषः, स चान्योन्याश्रयनियत इत्यन्योन्याश्रयं तृतीयपक्षनिषेधहेतुतयोपन्यस्यति गन्धाधारभिन्नत्वस्येति, प्रथमपक्षे द्वितीयपक्षे च योऽसम्भव उक्तस्तन्निवृत्त्यर्थमाशङ्कते अनवच्छिन्नेति। अन्योन्याभावापेक्ष्य नित्यत्वापेक्ष्यप्रागभावलक्षणप्रविष्टगन्धानधिकरणसमयज्ञानेऽनुमित्यात्मके पक्षहेतुज्ञानविधया ध्वंसज्ञानापेक्षा, ध्वंसज्ञाने च ध्वंसलक्षणस्य प्रागभावघटितत्वेन प्रागभावलक्षणस्य च गन्धानाधारसमयघटितत्वेनेतिकृत्वा गन्धानाधारसमयज्ञानापेक्षेत्यन्योन्याश्रय इत्याह तथापीति, तादृशसमयेति अनवच्छिन्नगन्धा-

ऽसंख्याता असंख्यातसंख्याः। अथापर्याप्तसंज्ञिनः कथमसंख्याता गीयन्ते? न हि ते सदैव प्राप्यन्ते, किं तु कदाचिदेव, ततः कथम संख्याता घटन्ते? नैष दोषः, यतो यद्यपि ते सदैव न भवन्ति, तथापि यदा भवन्ति, तदा जघन्येनैको द्वौ वा, उत्कर्षतोऽसंख्येयाः। उक्तं च—"एगो व दो व तीन्नि व संखमसंखा व एगसमएणम्॥" इति। तथा मिथ्यादृष्टयो अनंता अनन्तलोकाकाशप्रदेशप्रमाणाः। तथा चत्वारः सासादनसम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिदेशविरतरूपाः प्रत्येकं पल्योपमासंख्येयांशाः पल्योपमासंख्येयभागप्रमाणाः। पल्योपमं चेह क्षेत्रपल्योपममत्रसेयम्। ततः क्षेत्रपल्योपमासंख्येयभागवर्तिप्रदेशराशिप्रमाणा इत्यर्थः। इह सासादनाः सम्यग्मिथ्यादृष्टयश्चाध्रुवत्वात्कदाचिल्लोके प्राप्यन्ते, कदाचिन्न, यदा प्राप्यन्ते तदा जघन्येनैको द्वौ वा, उत्कर्षतः क्षेत्रपल्योपमासंख्येयभागतुल्याः। अविरतसम्यग्दृष्टिदेशविरताः पुनः सदैव प्राप्यन्ते ध्रुवत्वात्तेषां, केवलं कदाचित्स्तोकाः कदाचिद्बहवः। तत्र जघन्यपदेऽपि ते द्वये अपि प्रत्येकं क्षेत्रपल्योपमासंख्येयभागवर्त्तिप्रदेशराशितुल्याः, उत्कर्षतोऽप्येतावन्त एव। नवरमसंख्यातस्यासंख्यातभेदभिन्नत्वाज्जघन्यादुत्कृष्टमसंख्यातमसंख्यातगुणं द्रष्टव्यम्। देशविरतेभ्यश्चाविरतसम्यग्दृष्टयो जघन्यपदे उत्कृष्टपदे च प्रभूततरा अवसेयाः। शेषाः प्रमत्तादिगुणस्थानवर्त्तिनो जीवाः प्रत्येकं संख्येयाः प्रतिनियतसंख्याकाः। सा च प्रतिनियता संख्या स्वयमेव वक्ष्यते ॥९॥

अधुना तदेव द्रव्यप्रमाणं विशेषेणाभिधातुकाम आह—

**पत्तेयपज्जवणकाइयाउ पयरं हरंति लोगस्स। अंगुलअसंखभागेण भाइयं भूदगतणू य ॥१०॥**

(स्वो०)—'प्रत्येकपर्याप्तकवनस्पतिकायिकास्तु प्रतरं हरन्ति लोकस्य अङ्गुलासंख्येयभागेन भाजितम्, भूदकतनवश्च' इति पदानि। पदार्थोऽधुना-प्रत्येकग्रहणात् साधारणा अनन्ताः पूर्वोक्ता एव, प्रत्येकाश्च ते पर्याप्तकाश्च प्रत्येकपर्याप्तकाः ते च वनस्पतिकायिकाश्च ते,

यत्किञ्चित्कालवृत्तिः, तदवधिककालिकपरत्वाश्रयस्तद्घटप्रागभावप्रतियोगिभूतस्तद्घटोऽपि, उक्तपदार्थापेक्षयाऽधिकतरसूर्यपरिस्पन्दान्तरितजन्मत्वात्, तदधिकरणक्षणवृत्तित्वं तद्घटप्रागभावे नास्तीत्यव्याप्तिस्तद्वारणाय प्रथमं यावत्पदमित्याह—

स्वप्रतियोग्यनन्तरोत्पत्तिकावधिकपरत्वाश्रयस्वप्रतियोग्यधिकरणक्षणावृत्तित्वेनाव्याप्तिवारणाय प्रथमं यावदिति, स्वप्रतियोग्यवधिकदैशिकपरत्वाश्रयानन्तरोत्पन्नाधिकरणक्षणावृत्तित्वेन तद्वारणाय समयेति ॥ स्वप्रतियोग्यवधिकपरत्वाश्रययत्किञ्चिद्व्यक्त्यधिकरणक्षणवृत्तौ ध्वंसेऽतिव्याप्तिवारणाय द्वितीयं यावदिति, तादृशस्थूलकालवृत्तितया तथैवातिव्याप्तिवारणाय क्षणेति, न च प्रागभावस्य घटवद् घटध्वंसोऽपि प्रतियोगी तद्व्यापकावधिकं च परत्वमप्रसिद्धमिति वाच्यम्, भावत्वेन प्रतियोगिनो विशेषणीयत्वात्, अत्यन्ताभावेऽतिव्याप्तिवारणाय कादाचित्केति।

स्वप्रतियोग्यनन्तरेति। तद्घटप्रागभावप्रतियोग्यधिकरणयावत्कालवृत्तितद्घटावधिकदैशिकपरत्वाश्रयो यो घटोत्पत्त्यनन्तरोत्पन्नपदार्थस्तदधिकरणक्षणवृत्तित्वं घटप्रागभावे नास्तीत्यव्याप्तिस्तद्वारणाय सामयिकेति पदमित्याह स्वप्रतियोग्यवधिकेति। कनिष्ठात्मकप्रतियोगिन्युत्पन्ने ज्येष्ठे यत्परत्वमुत्पद्यते तत्समानकालीनत्वाभावात् तत्प्रागभावाव्याप्तिरित्यत उक्तं लक्षणे आश्रयपदम्। तद्घटपूर्वकालोत्पन्नतद्घटध्वंसोत्तरकालस्थायियत्किंचिद्व्यक्तिमादाय तद्घटध्वंसेऽतिव्याप्तिस्तद्वारणाय द्वितीयं यावत्पदमित्याह स्वप्रतियोग्येति। यावत्पदोपादाने च तद्घटपूर्वकालोत्पन्नो यस्तद्घटसमयवृत्तिध्वंसप्रतियोगी तस्याऽपि यावदन्तर्गततया तदधिकरणक्षणवृत्तित्वाभावात्तद्घटध्वंसस्य नातिव्याप्तिरिति भावः। स्वप्रतियोगिव्यापकावधिकसामायिकपरत्वाश्रययावद्व्यक्त्यधिकरणका-

मण्डकाकारं प्रतरमङ्गुलमात्रक्षेत्रासंख्येयभागैर्भाजितं खण्डितं सकलमपि हरन्ति। इयमत्र भावना—सर्वेऽपि प्रत्येकबादरपर्याप्तवनस्पतिकायिका जंतवः प्रतरमेककालमपहर्तुमुद्यता विवक्षिताः सन्तो यदि युगपदेकैकमङ्गुलासंख्येयभागमात्रं खण्डमपसारयन्ति, तत एकेनैव समयेन ते सकलमपि प्रतरमपहरन्ति। तत इदमायातम्—घनीकृतलोकस्यैकस्मिन् प्रतरे यावन्त्यङ्गुलासंख्येयमात्राणि खण्डानि भवन्ति, तावत्प्रमाणाः पर्याप्तप्रत्येकबादरवनस्पतयः। एवं पर्याप्तबादरभूकायिकोदककायिकानामपि प्रत्येकं भावना कार्या। यद्यपि चामीषां त्रयाणामपीत्थं समानप्रमाणत्वमभिहितम्, तथाप्यङ्गुलासङ्ख्येयभागस्यासङ्ख्यातभेदभिन्नत्वात्परस्परमिदमल्पबहुत्वमवसेयम्। स्तोकाः प्रत्येकबादरपर्याप्तवनस्पतयः। तेभ्यः पर्याप्तबादरभूकायिका असङ्ख्येयगुणाः। तेभ्योऽपि बादरपर्याप्ताप्कायिका असङ्ख्येयगुणाः ॥१०॥

**आवलिवग्गो अन्तरावलीय गुणिओ हु बायरा तेऊ। वाऊ य लोगसंखं सेसतिगमसंखिया लोगा ॥११॥**

(स्वो०)—'आवलिवर्गोऽन्तरावलिकया गुणितो हु बादरस्तेजः। वायवो लोकासङ्ख्याः शेषत्रिकमसङ्ख्या लोकाः' इति पदानि। पदार्थस्तु—'आवलिका' सङ्ख्यातीतसमयात्मिका, तस्या 'वर्गो' भिन्नावलिकागुणो यावत्सङ्ख्यस्तावत्सङ्ख्या बादरपर्याप्तकतेजःकायिका भवन्ति। वायवो लोकासङ्ख्येयभागाकाशप्रदेशप्रमाणासङ्ख्येयप्रतरप्रमाणाः, 'शेषत्रिक' मिति पृथिव्युदकाग्निवायूनां यच्छेषमेकैकस्य त्रिकं बादरापर्याप्तकसूक्ष्मपर्याप्तकापर्याप्तकस्वरूपं तदसङ्ख्येयलोकाकाशप्रदेशप्रमाणं, हुशब्दो यथाप्राप्तिख्यापकः (ततः) वनस्पतेः प्रत्येकबादरापर्याप्तकाः तत्प्रमाणाः, न तु सूक्ष्माः, असम्भवत्वादिति गाथार्थः ॥११॥

---

१ 'को वनस्पतेः प्रत्येकबादरापर्याप्तका पवातस्ते पवैतत्प्रमाणाः' इति क.

ऽज्ञानात्। सामायिकपरत्वस्य कालपिण्डसंयोगजन्यपरत्वरूपत्वेन जन्यत्वस्य च प्रागभावघटितत्वेनात्माश्रयस्स्यादतस्तद्वारणायाह जातिविशेषेति, समयपिण्डसंयोगजन्यतावच्छेदकतया सिद्धपरत्वव्याप्यजातिपरिचायकमित्यर्थः, न च तथापि महाप्रलयपूर्वक्षणभाविकर्मादिप्रागभावेऽव्याप्तिः, यतो न च तदानीं ब्रह्माण्डान्तरमपि, येन तत्रस्थं द्रव्यं कर्मादिव्यापकं स्यादिति वाच्यं, तदनभ्युपगमेनैवास्य लक्षणस्योक्तत्वात्, समाधत्ते नैयायिकः—नेति, स्वत्वाननुगमादिति, स्वत्वस्य तत्तद्व्यक्तित्वपर्यवसायितया तद्घटितलक्षणस्य लक्ष्यैकदेशेऽपरप्रागभावेऽभावेनाव्याप्त्यापत्त्या तद्धेतुकानुमाने भागासिद्धिस्स्यादिति भावः। अन्योन्याश्रयमप्याह कादाचित्कत्वस्येति, कादाचित्कत्वलक्षणमन्योन्याभावघटितमेवेति स्फोटयितुं तल्लक्षणमाह—

कालवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकत्वस्यैव तत्त्वात्, अत्यन्ताभावगर्भत्वस्य प्रतियोगिव्यधिकरणत्वादिप्रवेशेन दुर्वचत्वात्, अनवच्छिन्नवृत्तिताकत्वेनात्यन्ताभावविशेषणेऽप्यन्योन्याभावप्रवेशात्, किं चोत्पन्नपरत्वे तज्ज्ञानात् प्रागभावादिज्ञानं, ज्ञाते च प्रागभावादौ अवध्युत्पत्तिक्षणवृत्तिनाशप्रतियोगिस्पन्दप्रागभावाधिकरणक्षणोत्पत्तिकत्वस्य तद्घटितबहुतरतपनपरिस्पन्दान्तरितजन्मत्वस्य क्षणमात्रज्यायसोऽपि परत्वात् पूर्वकालोत्पन्नत्वस्य वा ज्ञानात् परत्वोत्पत्तिरित्यन्योऽन्याश्रयात्, क्षणजन्मान्तरितत्वानां ध्वंसाद्यन्यतरघटितत्वात् यावत्त्वानिरुक्तेश्च।

कालवृत्त्येति। तत्त्वात् कादाचित्कत्वात्, ननूक्तरूपं कादाचित्कत्वं न, किन्तु कालवृत्त्यत्यन्ताभावप्रतियोगित्वरूपमिति चेन्, न, घटाद्यवच्छेदेन पटत्वाद्यभावस्यापि कालवृत्तितया तत्प्रतियोगिनि पटत्वादावपि कादाचित्कत्वं स्यात्तन्निवृत्तये तत्र प्रति-

तेभ्यो बादरापर्याप्तसाधारणा असंख्येयगुणाः, तेभ्योऽपि सूक्ष्मापर्याप्तसाधारणा असंख्येयगुणाः, तेभ्योऽपि सूक्ष्मपर्याप्तसाधारणाः संख्येयगुणाः ॥११॥

**पज्जत्तापजत्ता बितिचउ असन्निणो अवहरंति । अंगुलसंखासंखप्पएसभइयं पुढो पयरं ॥१२॥**

(स्वो०)—'पर्याप्तापर्याप्ता द्वित्रिचतुरिन्द्रियासंज्ञिनोऽपहरन्ति । अङ्गुलसङ्ख्येयासङ्ख्येयप्रदेशभक्तं पृथक् प्रतरं' इन्द्रियादिपदलोपात् पदानि । पदार्थः—अङ्गुलश्रेणीप्रदेशानां संख्येयभागविभक्ता यावन्तः प्रतरप्रदेशाः तावन्तः पर्याप्तकाः द्वित्रिचतुरिन्द्रियासंज्ञिनः प्रत्येकं सम्भवन्ति, युगपद् भणनेऽपि सङ्ख्येयभागस्य वैचित्र्यान्न दोषः । एवमङ्गुलासङ्ख्येयभागप्रदेशैर्भक्तप्रतरप्रमाणास्त एव पूर्वोक्ता अपर्याप्ता इति । अथवाङ्गुलसङ्ख्येयभागमात्रैः खण्डैः खण्डितं प्रतरं पर्याप्तकाः, असंख्येयभागमात्रैरपर्याप्तका द्वीन्द्रियादयोऽपहरन्तीति गाथार्थः ॥१२॥

(मलय०)—द्वित्रिचतुरसंज्ञिनो—द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियाः पृथक् प्रत्येकं पर्याप्ता अपर्याप्ताश्च यथासंख्यमङ्गुलसंख्येयासंख्येयभागप्रदेशैर्भाजितं खण्डितं प्रतरमपहरन्ति । इयमत्र भावना—सर्वेऽपि पर्याप्ता द्वीन्द्रिया यदि युगपदेकैकमंगुलमात्रक्षेत्रसंख्येयभागमात्रं खण्डं प्रतरस्यापहरन्ति, तत एकेनैव समयेन ते सकलमपि प्रतरमपहरन्ति । इदमुक्तं भवति—घनीकृतस्य लोकस्य सप्तरज्जुप्रमाणस्यैकस्मिन्प्रतरे यावन्त्यङ्गुलसंख्येयभागमात्राणि खण्डानि, तावन्तः पर्याप्ता द्वीन्द्रियाः । एवं पर्याप्तात्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रिया अपि प्रत्येकमवगन्तव्याः । यावन्ति पुनरेकस्मिन्प्रतरे अङ्गुलमात्रक्षेत्रासंख्येयभागप्रमाणानि खण्डानि तावन्तोऽपर्याप्ता द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाः प्रत्येकमवसेयाः । यद्यपि च सर्वे पर्याप्ताः सर्वेऽपि चापर्याप्ता द्वीन्द्रियादयः सामान्यतः समान-

ग्प्रतियोगिक्षणोत्पत्तिकत्वं चेति तदपि ध्वंसप्रागभावान्यतरघटितमित्यन्योन्याश्रय इति। यावत्त्वानिरुक्तेश्चेति अन्योन्याभावा-
घटितत्वेतिशेषः, प्रागभावलक्षणप्रविष्टं यावत्त्वं व्यापकत्वपर्यवसन्नं व्यापकत्वं चान्योन्याभावघटितं, सोऽपि प्रागभावघटित इत्य-
न्योन्याश्रय इति भावः।

एतेन स्वप्रतियोग्यधिकरणकालापेक्षिकाधिककालवृत्तियावत्समानकालीनकादाचित्काभावत्वं तत्त्वम्।
प्रतियोगिनः पूर्वमुत्पद्य प्रतियोगिनाशकालेऽपि यद्वर्त्तते तत्समानकालीने नाशेऽतिव्याप्तिवारणाय यावदिति,
समानकालत्वं क्षणघटितमिति स्थूलकालमादाय नातिप्रसङ्ग इत्यपि निरस्तम्। यथाकथंचिदधिककालवृत्तित्वस्य
स्वसमानकालोत्पन्ने ततश्चिरजीविन्यपि सत्त्वात्, स्वपूर्वकालोत्पन्नत्वे सति स्वध्वंसकालवृत्तित्वे सति वा स्वा-
धिकरणकालाधिकसत्ताककालवृत्तित्वादिरूपस्य च तस्य विना प्रागभावध्वंसौ दुर्वचत्वात्। अथात्र नित्यत्वं गो-
त्वादेः पृथिव्या वा व्यापकत्वं, इदं च कालिकं ग्राह्यमिति चेत्, न, व्यापकत्वं तत्समानाधिकरणाभावाप्र-
तियोगित्वं,

एतेनेति उक्तयुक्त्या वक्ष्यमाणयुक्त्या चेत्यर्थः। अस्य निरस्तमित्यनेनान्वयः। स्वप्रतियोग्यधिकरणेति स्वप्रतियोग्यधि-
करणकालापेक्षिकाधिककालवृत्तियावत्पदार्थाधिकरणक्षणवृत्तिकादाचित्काभावत्वमित्यर्थः, यावदितीति तथा च तद्घटपूर्वकालवृ-
त्तितद्घटचरमसमयपर्यन्तस्थायिपदार्थस्यापि यावदन्तर्गततया तत्समानकालत्वस्य तद्घटध्वंसेऽभावान्नातिव्याप्तिरिति भावः। स्थू-
लकालमिति घटप्रागभावघटविनाशसमयस्थायिस्थूलकालमित्यर्थः। एतेनेत्यतिदिष्टमेवाह यथाकथञ्चिदिति, अधिककालवृत्तित्वं

तमो भागो नारकाः, असंख्येयतमे भागे यावन्तः प्रदेशास्तावत्प्रमाणा नारका इत्यर्थः । 'जहोत्तरं तह य'त्ति । तथाचेति समुच्चये, यथोत्तरं च यथा यथा उत्तरा पृथ्वी तथा तथा पूर्वपृथ्वीगतनारकापेक्षया असंख्यातमासंख्याततमभागमात्रा द्रष्टव्याः । तद्यथा–द्वितीयपृथ्वीगतनारकापेक्षया तृतीयपृथिव्यां नारका असंख्याततमभागमात्राः । तृतीयपृथिवीगतनारकापेक्षया चतुर्थपृथिव्यां नारका असंख्याततमभागमात्राः, एवं सप्तस्वपि पृथिवीषु द्रष्टव्यम् । कथमेतदवसेयमितिचेत्, उच्यते–युक्तिवशात् । तथाहि–सर्वस्तोकाः सप्तमपृथिव्यां नारकाः पूर्वोत्तरपश्चिमदिग्विभागभाविनः,तेभ्योऽपि तस्यामेव सप्तमपृथिव्यां दक्षिणदिग्विभागभाविनोऽसंख्येयगुणाः । कथमिति चेत्,उच्यते–इह द्विधा जन्तवः–शुक्लपाक्षिकाः कृष्णपाक्षिकाश्च । तेषां चेदं लक्षणं–इह येषां किञ्चिदूनपुद्गलपरावर्त्तार्द्धमात्रः संसारस्ते शुक्लपाक्षिकाः, अधिकतरसंसारभाजिनस्तु कृष्णपाक्षिकाः । उक्तं च—"जेसिमवड्ढो पोग्गलपरियट्टो सेसओ य संसारो । ते सुक्कपक्खिया खलु अहीए पुण कण्हपक्खीआ ॥१॥" अत एव च स्तोकाः शुक्लपाक्षिकाः, बहवः कृष्णपाक्षिकाः । कृष्णपाक्षिकास्तु प्राचुर्येण दक्षिणस्यां दिशि समुत्पद्यन्ते, न शेषासु दिक्षु, तथास्वाभाव्यात् । तच्च तथास्वाभाव्यं पूर्वाचार्यैरेवं युक्तिभिरुपबृंह्यते । तथा हि–कृष्णपाक्षिका दीर्घतरसंसारभाजिन उच्यन्ते, दीर्घतरसंसारभाजिनश्च बहुपापोदया भवन्ति, बहुपापोदयाश्च क्रूरकर्माणः, क्रूरकर्माणश्च प्रायस्तथास्वाभाव्यात्तद्भवसिद्धिका अपि दक्षिणस्यां दिशि समुत्पद्यन्ते न शेषासु । यत उक्तं—"पायमिह कुरकम्मा, भवसिद्धियावि दाहिणलेसु । नेरइयतिरियमणुयासुराइठाणेसु गच्छन्ति ॥१॥" । ततो दक्षिणस्यां दिशि बहूनां कृष्णपाक्षिकाणामुत्पादसम्भवात् सम्भवन्ति पूर्वोत्तरपश्चिमेभ्यो दाक्षिणात्या असंख्येयगुणा इति । तेभ्योऽपि षष्ठपृथिव्यां तमःप्रभाभिधानायां पूर्वोत्तरपश्चिमदिग्भाविनोऽसंख्येयगुणाः । कथमिति चेत्, उच्यते–इह सर्वोत्कृष्टपापकर्मकारिणः, संज्ञिपञ्चेन्द्रियतिर्यङ्मनुष्याः सप्तमनरकपृथिव्यामुत्पद्यन्ते, किञ्चिद्धिहीनहीनतरपापकर्मकारि-

योगिनोऽभावस्तु तदभाव एवेति तदधिकरणवृत्तित्वं तु तस्य सुस्पष्टमेवेति प्रतियोग्यभावाधिकरणवृत्तित्वरूपस्य प्रतियोग्यसामाना-धिकरण्यस्याभावे विशेषणस्य व्यर्थत्वमेवेत्याह नापीति, भेदगर्भमिति तथाचान्योन्याश्रय एवेति भावः। भेदत्वादिनस्समाद्यति-

अत्र वदन्ति—अभावत्वान्योऽन्याभावत्वप्रागभावत्वसंसर्गाभावत्वप्रध्वंसत्वादयः प्रतीतिविशेषसाक्षिका अखण्डोपाधयोऽतिरिक्ता एव पदार्थाः, तदेव चान्योऽन्याभावत्वं तादृशनञ्प्रतिपाद्यतावच्छेदकमिति, वैधर्म्यस्य तु विरोधः, स चैकधर्म्यसमावेश इत्येषा दिग्। सप्तमोऽप्यनुकूल एव, घटादौ व्यापकताप्रतिक्षेपस्याव्यापकतोपलम्भोपष्टम्भकत्वात्, व्यापकत्वस्य निष्क्रियत्वव्याप्तत्वाच्च। अष्टमे त्वविधेयत्वं यदापाद्यते, तत् क्वचित् सर्वत्र वा।

अत्र वदन्तीति, तदेव प्रतीतिविशेषसाक्षिकमखण्डोपाधिरूपमेव। तादृशनञ्प्रतिपाद्यतावच्छेदकमितीति प्रतियोग्यनुयोगिवाचकपदसमानविभक्तिकनञ्प्रतिपाद्यतावच्छेदकमितीत्यर्थः, अत्र च तादृशनञ्प्रतिपाद्यतावच्छेदकत्वमखण्डोपाधिरूपस्य भेदत्वस्य परिचायकं ज्ञेयम्। वैधर्म्यरूपभेदस्य लक्षणं विरोधः, स च सहानवस्थानलक्षण इत्याह वैधर्म्यस्येति। लक्षणमित्यनुषज्यते, सप्तमः घटादिवाहं यदि व्यापकं स्यात्तदा निष्क्रियं स्यादित्याकारः। अनुकूल एवेति विपर्ययसाध्यस्याव्यापकत्वस्य घटादौ नैयायिकैरभ्युपगमादिति भावः। अष्टमे घटादिवाहं यद्यव्यापकं स्यात्तदाऽविधेयं स्यादित्याकारके। इष्टापत्त्या परिहरति—

नाद्यः। अविधेयत्वे क्वचिदिति विशेषणोपादानात् क्वचिद्विधेयत्वलाभात्, यत एव च क्वचिद्विधेयोऽत एवाव्यापक इति व्यवह्रियते। न द्वितीयः, व्याप्त्यसिद्धेः, नहि यदव्यापकं तत् सर्वत्राविधेयमिति व्याप्तिर्निश्चितास्ति, आपाद्याप्रसिद्धेः। यदि च कथंचिद्गगनादावलीके वा तत्प्रसिद्धिरुपेयते, तथाप्येकत्रासतोऽन्यत्र सत्त्वेन

णेणं असंखेज्जगुणा। दाहिणिल्लेहिंतो सक्करप्पभापुढविनेरइएहिंतो इमीसे रयणप्पभाए पुढवीए नेरइया पुरच्छिमपच्चच्छिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा इति।'' ये च येभ्योऽसंख्येयगुणास्तेषां ते असंख्येयतमे भागे वर्त्तन्ते। ततो रत्नप्रभापृथिव्यां पूर्वोत्तरपश्चिमनारकेभ्योऽपि शर्कराप्रभानारका असंख्येयतमे भागे वर्त्तन्ते, किं पुनः सकलनारकेभ्यः ?। एवमधोऽधः पृथिवीष्वपि भावनीयम्। ततो युक्तमुक्तं 'जहोत्तरं तह य त्ति' ॥१३॥

संखेज्जजोयणाणं सूइपएसेहिं भाइओ पयरो। वंतरसुरेहिं हीरइ एवं एकेक्कभेए णं ॥१४॥

(स्वो०)—'संख्येययोजनानां सूचिप्रदेशैर्भाजितः प्रतरः व्यन्तरसुरैः ह्रियते एवमेकैकभेदेन' पदानि। पदार्थः—संख्येययोजनानां या 'सूचिः' एकप्रदेशिका पंक्तिः, संख्येययोजनप्रमाणा प्रदेशपंक्तिरिति भावः, तया भक्तः प्रतरो व्यन्तरसुरैर्ह्रियते—भागलब्धतुल्या व्यन्तरदेवा इति। एवमेव प्रतिनिकायं भावना, संख्येयस्य वैचित्र्यान्न दोषः, इति गाथार्थः ॥१४॥

(मलय०)—संप्रति व्यन्तराणां प्रमाणमाह—सङ्ख्येयानां योजनानां या सूचिरेकप्रादेशिकी श्रेणिः, किमुक्तं भवति ? संख्येययोजनप्रमाणा या एकप्रादेशिकी पङ्क्तिस्तत्प्रदेशैर्भक्तः प्रतरो व्यन्तरसुरैरपह्रियते, अयमत्र तात्पर्यार्थः—यावन्ति संख्येययोजनप्रमाणैकप्रादेशिकश्रेणिमात्राण्याकाशखण्डान्येकस्मिन् प्रतरे भवन्ति, तावत्प्रमाणा व्यन्तरसुराः। अथवेयं कल्पना—संख्येययोजनप्रमाणैकप्रादेशिकश्रेणिमात्रं खण्डमेकैकं युगपद्यदि सर्वेऽपि व्यन्तरसुरा अपहरन्ति, तर्हि सकलमपि प्रतरमेकस्मिन्नेव समये तेऽपहरन्ति। अत्रापि स एवार्थः। एवमेकैकस्मिन् भेदे व्यन्तरनिकाये द्रष्टव्यम्। किमुक्तं भवति ? यथा सकलव्यन्तरसुराणां परिमाणमुक्तमेवमेकैकस्मिन् व्यन्तरनिकाये परिमाणमवसेयम्। न चैवं सर्वसमुदायपरिमाणव्याघातप्रसङ्गः, श्रेणिप्रमाणहेतुयोजनसंख्येयत्वस्य वैचित्र्यात् ॥१४॥

प्रसक्तोपीति अत्राविरोध इति दृश्यम्। तदभेदेन देशाभेदार्थकप्रकाराऽभेदेन, प्रसज्यते इति प्रसज्येतेति पाठान्तरम्, प्रकारभेदेनेत्यत्र प्रकारभेद इत्यस्य व्याख्यामाह प्रकारभेदो देशभेद इति। एतेन देशभेदेनाविरोधप्रदर्शनन्यायेन। व्याख्यात इति अत्र निर्दोषत्वेनेति दृश्यम्। देशकालादिभेदेन सत्त्वाऽसत्त्वयोरविरोधस्य निर्दोषतया व्याख्यानफलमाह तेन न कार्यस्येति समवायिकारणे कार्योत्पत्त्यनुत्पत्तिकालावच्छेदेन कार्यस्य सत्त्वासत्त्वयोरव्याप्यवृत्तेः संयोगस्यैकस्मिन्नेव वृक्षे शाखामूलावच्छेदेन सत्त्वासत्त्वयोश्चाविरोधेन नानुपपत्तिरित्यर्थः। बौद्धश्शङ्कते—

यो हि येन यत्र यदैवोपलभ्यते स तेन तत्र तदैव नोपलभ्यत इति नानुभवो, नाप्यभ्युपगमः। एकावयवसहितस्योपलम्भेनान्यावयवसहितस्यानुपलम्भ इति चेत्, एवं तर्हि अवयविन्युपलभ्यमाने कश्चिदवयव उपलभ्यते कश्चिन्नेति वाक्यार्थः, सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायात्। तथा चावयवानामुपलम्भानुपलम्भाववयविनि सञ्चार्य प्रसङ्गस्तदलमनेन। एवं कस्यचिदवयवस्यावरणेऽप्यवयविनस्तदभावेनावृतानावृतत्वाभ्यामपि न भेदः, कतिपयावयवावरणेऽप्यवयविनस्तथाविधस्थौल्योपलम्भः किं न स्यादिति त्ववशिष्यते, तदप्यसत्, तस्य परिमाणगतसामान्यविशेषस्य ततोऽन्यस्य नियतसामग्रीवेद्यस्य तदभावे तदुपलम्भेऽप्यनुपलम्भात्। एतेन कम्पाकम्पसंसर्गोऽपि निरस्तः। अवयवकम्पेऽप्यवयविनो निष्कम्पत्वात्। नैवम्, अवयवे कर्मोत्पादेऽवयविनि कर्मोत्पत्तिध्रौव्यात्, अन्यथा सर्वावयवकम्पेऽपि निष्कम्पोऽवयव्युपलभ्येतेति। चलावयवावच्छेदेनावयविनि कर्म निश्चलावयवावच्छेदेन तत्र निश्चलत्वोपलम्भात् कर्माभावोऽपीति विरुद्धसंसर्गान-

त्प्रमाणाः प्रथमे कल्पे सौधर्माख्ये, द्वितीये च कल्पे ईशानाख्ये प्रत्येकं देवा भवन्ति। केवलं सौधर्मकल्पगतदेवापेक्षया ईशानकल्पगता देवाः संख्येयभागमात्रा द्रष्टव्याः। प्रज्ञापनायामीशानदेवापेक्षया सौधर्मकल्पदेवानां संख्येयगुणतयाभिधानात्। 'सेढिअसंखंससमा उवरिं तु'त्ति। तुर्वाक्यभेदे। उपरि पुनः सौधर्मेशानकल्पयोरुपरिष्टात्पुनः सनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारलक्षणेषु कल्पेषु प्रत्येकं देवा घनीकृतस्य लोकस्य एकप्रादेशिक्या एकस्याः श्रेणेरसंख्येयांशसमाः, असंख्येयतमे भागे यावन्तो नभःप्रदेशास्तावत्प्रमाणाः। 'जहोत्तरं तह य' त्ति–तथा चेति समुच्चये। यथा यथा उत्तरे उत्तरे देवाः उत्तरोत्तरकल्पगता देवास्तथा तथा पूर्वकल्पगतदेवापेक्षया असंख्येयभागमात्रा द्रष्टव्याः। इदमुक्तं भवति—यावन्तः सनत्कुमारकल्पगता देवास्तदपेक्षया माहेन्द्रकल्पे असंख्येयभागमात्राः; माहेन्द्रकल्पगतदेवापेक्षया सनत्कुमारकल्पगता देवा असंख्येयगुणा इत्यर्थः। एवं माहेन्द्रकल्पगतदेवापेक्षया ब्रह्मलोककल्पगतदेवा असंख्येयभागमात्राः। एवं लांतकमहाशुक्रसहस्रारकल्पेष्वपि भावनीयम्। 'तह य' इत्यत्र च शब्दस्यानुक्तार्थसमुच्चायकत्वादानतप्राणतारणाच्युतकल्पेषु अधस्तनमध्यमोपरितनग्रैवेयकेषु अनुत्तरविमानेषु च प्रत्येकं क्षेत्रपल्योपमस्यासंख्येयतमे भागे यावन्तो नभःप्रदेशास्तावत्प्रमाणा देवा अवगन्तव्याः, पूर्वपूर्वदेवापेक्षया चोत्तरोत्तरदेवाः संख्येयगुणहीनाः, तथा प्रज्ञापनायां महादण्डके पठितत्वात्। महादण्डकश्चायम्—"अह भन्ते! सव्वजीवअप्पाबहुमहादंडयं वत्तयिस्सामि, सव्वत्थोवा गब्भवक्कन्तियमणुस्सा १। मणुस्सीओ सङ्खेज्जगुणाओ २। बायरतेउकाइया पज्जत्तया असङ्खेज्जगुणा ३। अणुत्तरोववाइया देवा असङ्खेज्जगुणा ४। उवरिमगेवेज्जगा देवा सङ्खेज्जगुणा ५। मज्झिमगेवेज्जगा देवा सङ्खेज्जगुणा ६। हेट्ठिमगेवेज्जगा देवा सङ्खेज्जगुणा ७। अच्चुए कप्पे देवा सङ्खेज्जगुणा ८। आरणे कप्पे देवा सङ्खेज्जगुणा ९। पाणए कप्पे देवा सङ्खेज्जगुणा १०। आणए कप्पे देवा सङ्खेज्जगुणा ११। अहे सत्तमाए पुढवीए नेरइया

त्वेन तुल्ययोगक्षेमत्वात्, कर्मणो व्याप्यवृत्तित्वे संयोगस्यापि तथात्वापत्तेरिति चेत्।

नेति, तत्र हेतुमाह सामग्रीभेदेनेति, बौद्धश्शङ्कते अथेति, परंपरया स्वाश्रयवृत्तित्वसम्बन्धेन, तथात्वेन स्वाश्रयवृत्तित्वसम्बन्धेनावयविवृत्तित्वेन मूले वृक्षः कपिसंयोगी न शाखायामिति प्रतीतिविषयत्वोपपादनेन। तथात्वापत्तेः व्याप्यवृत्तित्वापत्तेः। अवयविनि संयोगानभ्युपगमे कपालद्वयसंयोगो न स्यात् कपालस्याप्यवयवित्वात्, एवं कपालिकासंयोगोऽपि न स्यात् तस्या अप्यवयवित्वात्. एवंरीत्या द्व्यणुकपर्यन्तसंयोगस्याभावे परमाणुमात्रवृत्तिरेव संयोगस्स्यात्, तथा चातीन्द्रियस्स्यात् स्वाश्रये परमाणौ प्रत्यक्षकारणीभूतस्य महत्त्वस्याभावेन स्वाश्रयसमवेतत्वसम्बन्धेन स्वस्मिन्नप्यभावात्, एवं घटादेरपि द्व्यणुकरूपत्वापत्त्या तत्प्रत्यक्षं न स्यात्, तत्कारणीभूतस्य महत्त्वस्य तत्राभावात्, एवं चक्षुरादिना घटस्यैकदेशावच्छेदेनैव संयोग इति व्याप्यवृत्तिसंयोगाऽभावेन प्रत्यक्षं न स्यात्, परमाणुना सह परमाण्वन्तरस्य यस्संयोगस्सोपि विवक्षितैकदिग्देशावच्छेदेनैवेति तत्रापि व्याप्यवृत्तिसंयोगाभावेनाऽसमवायिकारणस्य संयोगस्याभावाद् घटादेरनुत्पत्तिश्च स्यादित्युत्तरयति—

न, संयोगस्य व्याप्यवृत्तित्वेऽवयविन्यवयवपरम्परायां च क्षुद्रक्षुद्रतराद्यवयवावच्छेदेन तत्तत्संयोगाभावोपलम्भात् अणुमात्रवृत्तित्वेऽतीन्द्रियत्वं घटादेरप्रत्यक्षत्वमनुत्पत्तिश्च स्यादिति तस्याव्याप्यवृत्तित्वमास्थीयते, चले चावयवे कर्म व्यापकमेवोपलभ्यते, अवयविनि च तस्याव्यापकत्वे कर्मत्वस्य तदुभयवृत्तित्वे सविषयावृत्तिजातेर्व्याप्यवृत्त्यव्याप्यवृत्तिवृत्तित्वविरोधात्, वेपते पल्लवो न तु महीरुह इत्यादिप्रयोगाच्चेति सम्प्रदायः।

५० । तेइंदिया अपज्जत्तया विसेसाहिया ५१ । वेइंदिया अपज्जत्तया विसेसाहिया ५२ । पत्तेयसरीरबायरवणप्फइकाइया पज्जत्तगा असंखेज्जगुणा ५३ । बायरनिगोया पज्जत्तया असंखेज्जगुणा ५४ । बायरपुढविकाइया पज्जत्तया असंखेज्जगुणा ५५ । बायरआउकाइया पज्जत्तया असंखेज्जगुणा ५६ । बायरवाउकाइया पज्जत्तया असंखेज्जगुणा ५७ । बायरतेउकाइया अपज्जत्तया असंखेज्जगुणा ५८ । पत्तेयसरीरवणप्फइकाइया अपज्जत्तगा असंखेज्जगुणा ५९ । बायरनिगोया अपज्जत्तगा असंखेज्जगुणा ६० । बायरपुढविकाइया अपज्जत्तगा असंखेज्जगुणा ६१ । बायरआउकाइया अपज्जत्तगा असंखेज्जगुणा ६२ । बायरवाउकाइया अपज्जत्तगा असंखेज्जगुणा ६३ । सुहुमतेउकाइया अपज्जत्तगा असंखेज्जगुणा ६४ । सुहुमपुढविकाइया अपज्जत्तगा विसेसाहिया ६५ । सुहुमआउकाइया अपज्जत्तगा विसेसाहिया ६६ । सुहुमवाउकाइया अपज्जत्तगा विसेसाहिया ६७ । सुहुमतेउकाइया पज्जत्तगा संखेज्जगुणा ६८ । सुहुमपुढविकाइया पज्जत्तगा विसेसाहिया ६९ । सुहुमआउकाइया पज्जत्तगा विसेसाहिया ७० । सुहुमवाउइया पज्जत्तगा विसेसाहिया ७१ । सुहुमनिगोया अपज्जत्तगा असंखेज्जगुणा ७२ । सुहुमनिगोया पज्जत्तगा संखेज्जगुणा ७३ । अभवसिद्धिया अणंतगुणा ७४ । परिवडियसम्मदिट्ठी अणंतगुणा ७५ । सिद्धा अणंतगुणा ७६ । बायरवणस्सइकाइणा पज्जत्तगा अणंतगुणा ७७ । बायरा पज्जत्तगा विसेसाहिया ७८ । बायरवणस्सईकाइया अपज्जत्तगा असंखेज्जगुणा ७९ । बायरा अपज्जत्तगा विसेसाहिया ८० । बायरा विसेसाहिया ८१ । सुहुमवणप्फइकाइया अपज्जत्तगा असंखेज्जगुणा ८२ । सुहुम अपज्जत्तगा विसेसाहिया ८३ । सुहुमवणस्सइकाइया पज्जत्तगा संखेज्जगुणा ८४ । सुहुमपज्जत्तगा विसेसाहिया ८५ । सुहुमा विसेसाहिया ८६ । भवसिद्धिया विसेसाहिया ८७ । निगोयजीवा विसेसाहिया ८८ । वणस्सइजीवा विसेसाहिया ८९ । एगिंदिया विसेसाहिया ९० । तिरिक्खजोणिया विसेसाहिया ९१ । मिच्छादिट्ठी विसेसाहिया ९२ । अविरया विसेसा-

यविनि कर्मत्यभ्युपगमे यस्मिन्नवयवे कर्म तस्य तेन कर्मणाऽवयवान्तरेण विभागः तेन चासमवायिकारणावयवद्वयसंयोगनाशस्तस्माच्च द्रव्यनाशस्स्यात्, अवयविनि कर्मणोऽव्याप्यवृत्तित्वे त्ववयवे चलति सत्यवयव्यपि चलतीति यद्देशावच्छेदेनावयवस्य विभागस्तद्देशावच्छेदेनावयविनोऽपि विभाग इति न निष्कम्पावयवदेशं परित्यज्याऽन्यत्र गमनसंभावना निष्कम्पावयवसहितस्यैवावयविनोऽन्यत्र गमनादिति नावयविविनाशसंभव इत्याशयेन शङ्कते एवं तर्हीति। क्वचिदभ्युपगमादिति आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मस्थले संयोगनाशाद् द्रव्यनाशस्याभ्युपगमादित्यर्थः, युक्तेस्साम्यात्सर्वत्रावयविविनाशप्रसक्तिस्स्यात्, तथा चापसिद्धान्तस्स्यादिति चेत्, भवतु तथापि न तेनावयविविलोपः, तस्यापसिद्धान्तस्य पुरुषधर्मत्वादित्याह सर्वत्रेति। अबाधकत्वादिति पूर्वं प्रतियोगिनस्सत्त्व एव विनाशस्य सत्त्वादितिभावः। साधकत्वादेवेति प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्यसंबन्धेन प्रतियोगिनः कारणत्वेन कार्यविधया ध्वंसस्य साधकत्वादेवेतिभावः। अवयवकर्मणोऽवयवविभागादिना द्रव्यनाशकत्वं पूर्वमभ्युपगमवादेन स्वीकृतम्, अधुना तदपि परमार्थवृत्तिमभ्युपगम्य निरस्यति न चैवमिति, उक्तनियमानभ्युपगमे हेतुमाह अवयवेति, शङ्कते—

ननु कर्मत्वाविशेषेऽपि किञ्चिदेव कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते नेतरदिति कुत इति चेत्, कारणविशेषात् कस्यचिदेव कर्मणस्तथाभूतविशेषलब्धेः। एतेन पाणौ चलति तन्मूलपरमाणुरपि चलेत्, तस्मिन्नचलति तदारब्धावयविनश्चलनानुपपत्तेः, ततो चलाद् भुजपरमाणोर्विभागस्ततो द्व्यणुकादिविभागक्रमेण भुजादपि विभागः, यो येन संयुज्यते वियुज्यते वा स तत्कार्यद्रव्येणापीति न्यायात्, अनेनैव क्रमेण पाणिभुजाद्विभज्यत इति पाणिभुजविभागाच्छरीरनाश इति निरस्तम्।

(स्वो०)—षट्पञ्चाशदधिकशतद्वयाङ्गुलाद् भूयो भूयो विगृह्य–गृहीत्वा मूलत्रयं षोडशचतुर्द्विसङ्ख्यं राशयो यथोत्तरस्था गुणिताः क्रमेण यथोपन्यासं सूचयो भवन्ति । प्रथमपृथ्वीनारकाणां षण्णवतिचतुःसहस्राङ्गुलप्रमाणाः, भवनपतीनां चतुःषष्ट्यङ्गुलप्रमाणाः, सौधर्मदेवानामष्टाङ्गुलप्रमाणा इयदङ्गुलसूचिप्रदेशप्रमाणश्रेणीप्रदेशतुल्यास्ते । इति गाथार्थः ॥१८॥

(मलय०)—तदेव दर्शयति–षट्पञ्चाशदधिकशतद्वयप्रमाणस्याङ्गुलमात्रस्याङ्गुलक्षेत्रगतप्रदेशराशेर्भूयो भूयो वारंवारं विगृह्य, किमुक्तं भवति ? वर्गमूलानयनकरणेन एकवारं विगृह्य वर्गमूलमानीय भूयो विगृह्यते, ततो द्वितीयं वर्गमूलमागच्छति, ततो भूयोऽपि विगृह्यते, ततस्तृतीयं वर्गमूलमागच्छति, एवं भूयो भूयो विगृह्य मूलत्रिकं वर्गमूलत्रयमानीय यथोत्तरस्था राशयो गुण्यन्ते । ततो गुणिताः संतस्ते क्रमेण यथाक्रमं सूचयो भवन्ति, एतावत्प्रदेशराशिप्रमाणा यथाक्रमं रत्नप्रभानारकादिषु श्रेणिपरिमाणहेतवः सूचयो भवन्तीत्यर्थः । इयमत्र भावना–अङ्गुलमात्रे क्षेत्रे एकप्रादेशिकश्रेणिरूपे असंख्याता अपि प्रदेशाः किलासत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणाः कल्प्यन्ते । तेषां प्रथमं वर्गमूलं षोडश, द्वितीयं चत्वारि, तृतीयं द्वे । एते च राशय उपर्यधोभावेन क्रमेण व्यवस्थाप्यन्ते । तत्र प्रथमवर्गमूलेन षोडशलक्षणेन उपरितनः षट्पञ्चाशदधिकशतद्वयप्रमाणो राशिर्गुण्यते, गुणिते च सति तस्मिन् जातानि षण्णवत्यधिकानि चत्वारि सहस्राणि, एतावत्यः किल श्रेणयो रत्नप्रभानारकाणां परिमाणाय द्रष्टव्याः, एतावत्प्रमाणश्रेणिगताकाशप्रदेशराशिप्रमाणाः प्रथमपृथिवीनारका भवन्तीत्यर्थः । तथा द्वितीयेन वर्गमूलेन चतुष्कलक्षणेनोपरितनः षोडशकलक्षणो राशिर्गुण्यते, गुणिते च सति जाता चतुःषष्टिः, एतावत्यः श्रेणयो भवनपतीनां परिमाणावधारणाय द्रष्टव्याः । तथा तृतीयेन वर्गमूलेन द्विकलक्षणेनोपरितनश्चतुष्कलक्षणो राशिर्गुण्यते, ततो जाता अष्टौ, एतावत्यः श्रेणयः सौधर्मदेवानां परिमाणाय ज्ञातव्याः ॥१८॥

नन्नीति, पौनरुक्त्यनिरसनायाह पूर्वमिति, एवं तर्हि कम्पाकम्पयोरित्यादिग्रन्थेन, इदानीम् एतेन पाणौ चलतीत्यादिग्रन्थेन, तदनारम्भे द्रव्यारम्भकसंयोगविरोधिविभागानारम्भे, निरपेक्षमिति स्वोत्तरोत्पन्नभावभूतकारणानपेक्षमित्यर्थः, तेनोत्तरसंयोगजनने पूर्वसंयोगनाशापेक्षणेऽपि न क्षतिः। सङ्गत्या, तत्रत्याकाशदेशेन विभागमजनयित्वैव। अत एवेति कर्मलक्षणे जननयोग्यत्वलक्षणमेव कारणत्वं प्रविष्टं नतु कार्याव्यवहितप्राक्क्षणसम्बन्धलक्षणफलोपधानकारणत्वं प्रविष्टमितिहेतोरित्यर्थः। अवयवक्रियया विभागानन्तरमारम्भकसंयोगनाशक्षणे यत्रावयविनि यत्कर्म तस्य कर्मणो न विभागजनकत्वं संभवति, उत्तरक्षण एव द्रव्यस्य समवायिकारणस्य विनाशेन विभागोत्पत्त्यसंभवात्, न च तथापि कर्मलक्षणक्षतिः, कारणतावच्छेदकधर्मवत्त्वरूपजननयोग्यत्वस्य तत्र सत्त्वादितिभावः। उपगच्छतीत्यस्य स्वीकरोतीत्यर्थं कर्मोत्पादमिति कर्मण उत्पादमित्यर्थः, प्राप्नोतीत्यर्थे प्रापणक्रियायाः कर्त्ता कर्म, तस्याः कर्म चोत्पादः, तथा च कर्मोत्पादं प्राप्नोतीत्यर्थः। अन्यतरत्रापि आकाशदेशावयविनोर्मध्यादेकस्मिन्नपि। समवायसम्बन्धेनावयविसंयोगं प्रति स्वाश्रयसमवेतत्वसम्बन्धेनावयवकर्मणः कारणत्वमिति तेनैव निष्कम्पेऽप्यवयविन्याकाशसंयोगोपपत्तिरित्यन्तरा शङ्कते—

न नावयवकर्मैव तत्र कारणं कार्थप्रत्यासत्त्याऽसमवायिकारणं वाच्यम्, अवयवावयवादौ चलितेऽवयविनि संयोगाद्यनुत्पादप्रसङ्गात् इति चेत्, न, अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः। एतच्च सम्यग्बोद्धुं वैशेषिकमधीष्वेति। तर्हि चलदवयवसमाश्रितोऽप्यचलन्नेवावयव्युपलभ्येतेति चेत्, नेदमनिष्टं, पाणौ कम्पमाने शरीरं न कम्पत इति प्रत्ययात्। नन्वेवं निश्चलैकद्व्यवयवोऽप्यवयवी चलत्वेन नोपलभ्येतेति चेत्, यो

म्रियते किन्तु समयान्तरे तदा सोऽपि न गृह्यते किंत्वनन्तास्वप्युत्सर्पिण्यवसर्पिणीषु गतासु यदोत्सर्पिणीद्वितीयसमये एव मरिष्यति तदा स समयो गण्यते, एवमानन्तर्यप्रकारेण यावता कालेन सर्वेऽप्युत्सर्पिण्यवसर्पिणीसमया मरणव्याप्ता भवन्ति, तावान् कालविशेषः सूक्ष्मकालपुद्गलपरावर्त्तः ॥४०॥

अणुभागट्ठाणेसुं अणंतरपरंपराविभत्तीहिं । भावंमि बायरो सो सुहुमो सव्वेसुणुक्कमसो ॥४१॥

(स्वो०)—'अनुभागस्थानेषु' इति–शुभाशुभकर्मणो हीनमध्यमोत्तमरसस्य निकृष्टविभागानां समुदायो रसस्पर्द्धकं, स्पर्द्धकसमुदायोऽनुभागस्थानं, एवंभूतानि रसव्यक्तितोऽसंख्येयान्यनुभागस्थानानि। तेषु बन्धकत्वेन वर्त्तमानो जीवोऽनन्तरपरम्परप्रकाराभ्यां यावता कालेन सर्वेष्वनुभागस्थानेषु मृतो भवति, स बादरः भावपुद्गलपरावर्त्तो भवति। तेष्वेव यथोत्तरस्थानक्रमेणैको जीवो यावता कालेन बन्धकत्वेन वर्त्तमानो मृतो भवति, स सूक्ष्मभावपुद्गलपरावर्त्तः। अनुभागस्थानस्वरूपमुपरि न्यक्षेण वक्ष्यतीति गाथार्थः ॥४१॥

(मलय०)—उक्तो बादरसूक्ष्मभेदभिन्नः कालपुद्गलपरावर्त्तः, साम्प्रतं बादरसूक्ष्मभेदभिन्नं भावपुद्गलपरावर्त्तमाह–इहानुभागस्थानानि कर्मप्रकृतिसंग्रहाधिकारे बन्धनकरणे अनुभागबन्धविचारे "एकज्झवसायसमज्जियस्स, दलियस्स किं रसो तुल्लो" इत्यादिना ग्रन्थेन स्वयमेव वक्ष्यति, तानि चासंख्येयलोकाकाशप्रदेशप्रमाणानि, तेषां चानुभागस्थानानां निष्पादका ये कषायोदयरूपा अध्यवसायविशेषास्तेऽप्यनुभागस्थानमित्युच्यन्ते कारणे कार्योपचारात्, तेऽपि चानुभागबन्धाध्यवसाया असंख्येयलोकाकाशप्रदेशप्रमाणाः। संप्रत्यक्षरयोजना–अनुभागस्थानेषु अनुभागबन्धाध्यवसायस्थानेषु असंख्येयलोकाकाशप्रदेशप्रमाणेषु सर्वेष्वपि यावता कालनैको जीवोऽनन्तरपरंपराविभक्तीभ्यां अनन्तरपरंपरारूपे ये विभक्ती विभागौ, ताभ्यामानन्तर्येण पारम्पर्येण चेत्यर्थः मृतो भवति, तावान् कालवि-

सत्त्वे चेति, बुद्धेः परमार्थदृष्ट्या तद्रूपत्वे कथं बाधकत्वेनाभिमतं तत्र,सत्त्वबाधकत्वयोर्विरोधात्, बाधकत्वे कथं तदा बाधकत्वासिद्धिः सत्त्वमित्याशयेन समाधत्ते सत्त्वेपि यदीति,दृश्यते तावदेवमित्यस्यार्थमाह सत्त्वेति,सत्त्वसमानाधिकरणधर्मस्य बाधकत्वायोगाद् बाधकत्वमेव हेयं स्यादिति समाधत्ते सत्त्वैकार्थेति। योगप्रसङ्गादिति सत्त्वप्रसङ्गादित्यर्थः। बाधकस्य बाधकत्वं परमार्थपगमने तदा सत्त्वप्रसङ्गः,तस्य तन्नियतत्वेन तेन विना तदनुपपत्तेरितिभावः। अत्र त्यागप्रसङ्गादित्यपि पाठः,तस्य चायमर्थः-बाधकस्यार्थेपरत्वेनाधारस्याऽसत्त्वे कुत्र तिष्ठेतेति बाधकत्वमेव हेयं नतु बुद्धेस्सत्त्वमिति। उक्तमेव विवेचयति तस्येति बाधकस्येत्यर्थः। शून्यत्वायोगादिति बाधकस्य सत्त्वे तद्घटितसर्वस्य शून्यत्वाऽयोगेन सर्वं शून्यमिति माध्यमिकमतक्षतिस्स्यादितिभावः। तथाभूतयोः एकार्थसमवायिनोः। ननु बुद्धेर्निराकरणप्रयासे सति तन्निराकरणमेव स्यात् कथं तत्सिद्धिरित्याशङ्कायामाह—

तन्निवारणमपि बोद्धव्यमेवेति, असत्त्वेन ज्ञानस्य ज्ञापनस्य वा तस्य बाधज्ञानाधीनत्वात्, ज्ञानरूपत्वात् ज्ञानघटितमूर्त्तिकत्वाद्वेति भावः। तदेतदायातं प्रदीपान्तरेण प्रदीपं निर्वाप्य तिमिराऽऽपादनमिति।

तन्निवारणमपीति, बुद्धिनिवारणमपि बुद्ध्यैव, तदपि च बुद्धिरूपं बुद्ध्यनुकूलव्यापाररूपं वा, तथा च बुद्धेरभावे तन्निराकरणमपि कथं स्यादितिभावः। तदेव विवृणोति असत्त्वेनेति, बुद्धिरसतीत्येवं यज्ज्ञानं तदनुकूलव्यापारो वा बुद्धिनिवारणं, तदुभयमपि बाधज्ञानाधीनमेव साफल्यतामनुभवतीति बाधज्ञानस्य सत्त्वमपरिहार्यमेवेतिभावः। बुद्धिनिवारणस्य बुद्धिरूपत्वपक्षमाश्रित्याह ज्ञानरूपत्वादिति, व्यापाररूपत्वपक्षमाश्रित्याह ज्ञानघटितमूर्त्तिकत्वादिति, शून्यवादी हेतुफलभावानुपपत्तिमाशङ्कते—

स्यादेतत्-ज्ञानं ज्ञेयं वा जन्यमजन्यं वा, द्वितीये कादाचित्कत्वानुपपत्तिः। जन्यं चेत्, असतो जन्यत्वे-

(स्वो०)—असंख्येयसमयसमुदायः आवलिका, सहोपशमसम्यक्त्वस्याखादनेन वर्त्तत इति साखादनः, तत्साखादनत्वमुत्कृष्टतः षडावलिकामात्रं कालं एकस्मिन् जीवे भवति, जघन्यतस्त्वेकं समयं, यत उपशमाद्धायां जीवस्वाभाव्यात् कश्चित् षडावलिकाशेषायां साखादनत्वं गच्छति, एवं समयहान्या यावदेकसमयशेषायां, तदन्ते मिथ्यात्वोदयान्मिथ्यादृष्टिर्भवति, तद्भवेऽन्यभवगतो वा, यतः साखादनगुणे सर्वस्मिन् मरणमस्ति, न सम्यग्मिथ्यात्वगुणे। (मिश्रः) उपशमसम्यक्त्वगुणश्च जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तावधिकः। यद्यप्युपशमसम्यक्त्वगुणस्थो देशविरत्यादिगुणान्तराण्यनुभजति तथापि तस्यान्तर्मुहूर्त्तमेवावस्थानम्। क्षायिकसम्यग्दर्शनं अनन्तकालं भवति, यतस्तदुत्तरगुणसम्भवेऽपि न नश्यतीति गाथार्थः ॥४२॥

(मलय०)—तदेवमुक्तमेकजीवस्य मिथ्यादृष्टिगुणस्थानकालमानं, संप्रति सासादनमिश्रगुणस्थानकयोरौपशमिकसम्यक्त्वस्य क्षायिकसम्यक्त्वस्य च कालमानमाह—एकस्मात्समयादारभ्य यावदावलिकानां षट्कं तावत्सासादनो भवति। इयमत्र भावना—एकः सासादनो जीवः पूर्वं गुणस्थानकविचारनिर्दिष्टन्यायेन प्राप्तसासादनभावः कश्चित्समयमेकमवतिष्ठते, अन्यस्तु द्वौ समयौ, अपरस्तु त्रीन् समयान्, एवं यावत्कोऽपि षडावलिकाः, तत ऊर्ध्वमवश्यं मिथ्यात्वमुपगच्छति, तत एवमेकस्य जीवस्य सासादनगुणस्थानककालो जघन्यतः समयः प्राप्यते, उत्कर्षतः षडावलिकाः। तथा मिश्रोपशमौ मिश्रगुणस्थानकौपशमिकसम्यक्त्वे जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तप्रमाणे। तथाहि—सम्यग्मिथ्यादृष्टिगुणस्थानकं जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तप्रमाणं सुप्रसिद्धं 'संमामिच्छादिट्ठी अन्तोमुहुत्तं' इत्यादिवचनप्रामाण्यात्। केवलं जघन्यपदे तदन्तर्मुहूर्त्तं लघु द्रष्टव्यं, उत्कृष्टपदे तु तदेव बृहत्तरमिति। औपशमिकसम्यक्त्वमपि प्राथमिकमुपशमश्रेणिसंभवं वा जघन्यत उत्कर्षश्चान्तर्मुहूर्त्तप्रमाणम्। तत्र प्राथमिकमन्तर्मुहूर्त्तप्रमाणं प्रतीतम्। तथाहि—यदि तदानीं देशविरत्यादिक-

गिरन्वय ज्ञानप्रतिबन्धप्रतियोगिकत्वम्, अयोग्या त्वनुपलब्धिर्नियमेन नाभावसाधिका, अभावप्रतियोगिनस्सत्त्वेऽप्ययोग्यस्य तस्या-
योग्यानुपलम्भसम्भवात्, तथा च परमाणुसत्त्वाभावेन न योग्य इति तत्सत्त्वप्रसञ्जनरूपापादकस्याभावादुपलब्धेः प्रसञ्जनाऽस-
म्भवेन तावत् तत्र सम्भवति, द्वितीया तत्र यद्यपि सम्भवति तथापि तया न तदभावस्साधयितुं शक्यः, तस्या अभावनियतत्वाभावात्,
स्थूलैकत्वेन घटानुपलम्भस्यैव सर्वजनसिद्धस्य प्रतिबन्धकस्य सत्त्वात् योग्यस्य घटादेस्तु योग्यानुपलब्धिर्नास्त्येव, यया तदभाव-
सिद्धिरित्याशयेनाह—तथाहीति, ननु स्थूलैकत्वेनोपलम्भो विकल्पकरूपः, विकल्पश्चाऽप्रमाणत्वेन न वस्तुसाधक इति तदात्म-
कैकोपलम्भेन न घटादेस्सिद्धिरित्याशयेनाशङ्कते विकल्पमात्रमिति, यस्य धर्मोऽन्यत्रोपसङ्क्रामति स उपाधिः, उपाधिगतो
धर्मो योऽन्यस्मिन् प्रतिभासते स औपाधिक इत्युच्यते, तथा च स्थूलैकत्वेन घटाद्युपलम्भे यत्स्पष्टत्वं प्रतिभासते तस्य क उपाधिरिति
पृच्छति उपाधिरिति, समानाकारोऽनुभव इति समानाकारानुभवधर्मस्य स्पष्टत्वस्य विकल्पे प्रतिभासः, अन्याकारानुभ-
वधर्मस्य नेति विकल्पार्थः। तत एव समानाकारानुभवादेव, स्थूलैकसिद्धिः स्थूलस्यैकस्य घटादेस्सिद्धिः, विकल्पस्स्वतो न विष-
याधीन इति न तस्य स्वतःप्रामाण्यं, किन्तु समानविषयकानुभवद्वारा विषयजन्यत्वेन, भिन्नाकारस्यानुभवस्योपाधित्वे त्वनुभवद्वारापि
विकल्पस्य विषयाजन्यत्वेन निर्विकल्पात्मत्या घटादिविषयकनिश्चयात्मकस्य न स्यादिति विकल्पाविषयत्वेनानिश्चितरूपे घटादिवि-
षयेऽनुभवस्यापि प्रामाण्यरूपतया सिद्धिर्न स्यात्, 'यत्रैव जनयेदेनां तत्रैवास्य प्रमाणतेति' सिद्धान्तबलेन यद्विषयकोऽनुभवो यद्विषये
निश्चयात्मकां विकल्पवृत्तिं जनयेत्तद्विषय एवानुभवस्य प्रामाण्यमित्यभ्युपगमादित्याशयेन द्वितीयपक्षं निरस्यति द्वितीये त्विति,
प्रत्यक्षस्याप्रामाण्यमितीति, अत्र प्रामाण्येनेति शेषम्, स्थूलप्रतिभासोऽवयविन एव नतु परमाणूनां, विपरीताभ्युपगमे दण्डमाह

भ्यते ? इति चेत्, उच्यते–इह कश्चिदितः स्थानादुत्कृष्टस्थितिष्वनुत्तरविमानेषूत्पन्नः, तत्र चाविरतसम्यग्दृष्टित्वेन त्रयस्त्रिंशत्सागरोपमाणि स्थितिः, ततस्तस्मात्स्थानाच्च्युत्वाऽत्राप्यायातो यावदद्यापि सर्वविरत्यादिकं न प्रतिपद्यते तावदविरत एव, इत्येकस्य वेदकाविरतसम्यग्दृष्टेर्मनुष्यभवसंबद्धः, इति कतिपयवर्षाधिकानि त्रयस्त्रिंशत्सागरोपमाणि प्राप्यन्ते । तथा 'पुव्वकोडि देसो उ देसूणा'–देशसंयतः पुनः, तुर्वाक्यभेदे, उक्तं च–'तुः स्याद्भेदेऽवधारणे' जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतो देशोना पूर्वकोटी । तत्रान्तर्मुहूर्त्तभावना इयं–कोऽप्यविरतादिरन्तर्मुहूर्त्तमेकं देशविरतिं प्रतिपद्य पुनरप्यविरतादित्वमेव प्रतिपद्यते । देशोनपूर्वकोटिभावना त्वेषा–इह किल कोऽपि पूर्वकोट्यायुष्को गर्भस्थो नवमासान्सातिरेकान् गमयति, जातोऽप्यष्टौ वर्षाणि यावद्देशविरतिं सर्वविरतिं वा न प्रतिपद्यते, वर्षाष्टकादधो वर्त्तमानस्य सर्वस्यापि तथास्वाभाव्यात् देशतः सर्वतो वा विरतिप्रतिपत्तेरभावात्, भगवद्वज्रस्वामिना व्यभिचार इति चेत् ? तथाहि–भगवान् वज्रस्वामी षाण्मासिकोऽपि भावतः प्रतिपन्नसर्वसावद्यविरतिः श्रूयते, तथा च सूत्रं–"छम्मासियं छसु जयं माऊए समन्नियं वंदे" इति । सत्यमेतत्, किंत्वियं शैशवेऽपि भगवद्वज्रस्वामिनो भावतश्चरणप्रतिपत्तिराश्चर्यभूता कादाचित्कीति न तया व्यभिचारः । अथ कथमवसीयते येयं वज्रस्वामिनः शैशवेऽपि चरणप्रतिपत्तिः, सा कादाचित्कीति ? उच्यते–पूर्वसूरिकृतव्याख्यानात् । तथा च पञ्चवस्तुके प्रव्रज्याप्रतिपत्तिकालनियमविचाराधिकारे गाथा–"तयहो परिभवक्खेत्तं न चरणभावो वि पायमेएसिं । आहच्च भावकहगं सुत्तं पुण होइ नायव्वं ॥१॥" अस्या व्याख्या–तेषामष्टानां वर्षाणामधो वर्त्तमाना मनुष्याः परिभवक्षेत्रं भवन्ति, येन तेन वातिशिशुत्वात्परिभूयन्ते, तथा चरणभावोऽपि चरणपरिणामोऽपि प्राय एतेषां वर्षाष्टकादधो वर्त्तमानानां न भवति, यत्पुनः सूत्रं 'छम्मासियं छसु जयं माऊए समन्नियं वन्दे' इत्येवंरूपं, तत् 'आहच्चभावकहगं' कादाचित्कभावकथकं, ततो वर्षाष्टकादधः परिभवक्षेत्रत्वाच्चरणपरिणामाभा-

न हि करचरणचिबुकनासिकादिपरमाणूनामैक्यं कश्चिदारोपयेत्। न च तेषु भेदेन प्रथमानेषु न स्थूलप्रत्ययः। न च तत्त्वे स्फुरत्येव तद्विपरीतातत्त्वसमारोपसम्भवः। अपि चैवमेकपरमाण्वात्मना परमाणुकोटिरप्यारोपिता परमाणुमात्रतयैव परिस्फुरेन्न स्थूलतया, न च नानादिग्देशव्यापित्वस्यैव महिमा यत् परमाणुत्वेनाऽस्फुरणं स्फुरणं च स्थूलत्वेनेति साम्प्रतं, विरोधात्, यदि हि नानादिक्काः परमाणवो देशतया भासेरन् नैकतया देशितया आरोप्येरन्, तत्कथं कस्य नानादिग्देशव्यापिता, देशिनोरपरिस्फुरणात्। अथ तथाऽऽरोप्येरन् न नानात्वेन देशत्वेन न भासेरन्, तथा न कस्य नानादिग्देशव्यापिता, नानादेशानामपरिस्फुरणात्। तस्मादेकत्वारोपे परमाणुमात्रावभास एव स्यादिति।

नहीति, कश्चिदारोपयेदिति–कश्चित् कचिदारोपयतीत्यपि पाठः, अवयवेषु भेदग्रहदशायामैक्यारोपाभावेऽप्येकस्स्थूलोऽवयवीति प्रत्ययो भवतीति व्यभिचारेण नैक्यारोपः कारणं स्थौल्यप्रत्ययस्येत्याह–न च तेष्विति, तत्त्वे भेदे, अतत्त्वेति एकत्वेत्यर्थः। परमाणुकोटिरप्यारोपितेति–कोटिरप्येकपरमाणुतारोपित इत्यर्थः। विरोधमेवोद्घाटयति यदि हीति, देशतया भिन्नभिन्नावयवरूपतया, देशितया अवयवितया। नानादिग्देशव्यापितेति, अत्र ज्ञायेतेतिशेषः। तथाऽऽरोप्येरन् एकतया देशितया नाऽऽरोप्येरन्, यदि हि नानादिक्का इत्यादेः फलितार्थमाह–

यदि हीत्यस्यायमर्थः–नानादिग्देशव्यापित्वैव स्थौल्यं, परिमाणभेदो वा। नाना, दिग्देशा हि भवतां परमाणव एव, ते यदि नानात्वेन देशत्वेन न गृह्यन्ते, न तर्हि तेष्वेकत्वस्य देशित्वस्य चारोपः, न चान्यस्य

परतः। तथा चोक्तं शतकबृहच्चूर्णौ—"इत्थ संकिलिस्सइ विसुज्झइ वा विरओ अंतमुहुत्तं जाव कालं, न परओ। तेणं संकिलिस्संतो संकिलेसठाणेसु अंतोमुहुत्तं कालं जाव पमत्तसंजओ होइ, विसुज्झंतो विसोहिठाणेसु अंतोमुहुत्तं कालं जाव अपमत्तसंजओ होइ" इति। अथ प्रमत्ताप्रमत्तभावपरावृत्तीः कियन्तं कालं यावन्निरन्तरं करोतीत्यत आह—'देसुण' इत्यादि—देशोनां पूर्वकोटिं यावदिमौ प्रमत्ताप्रमत्तभावावन्योन्यं परस्परं भजन्तौ तिष्ठतः। प्रमत्तभावोऽन्तर्मुहूर्त्तानन्तरमप्रमत्तभावं भजन्, अप्रमत्तभावोऽन्तर्मुहूर्त्तानन्तरं प्रमत्तभावं भजन् निरन्तरं तावद्भवति, यावद्देशोनां पूर्वकोटिमित्यर्थः। देशोनता च पूर्वकोटिः बालत्वभाविवर्षाष्टकापेक्षया द्रष्टव्या ॥४४॥

**समयाओ अंतमुहू, अपुव्वकरणाउ जाव उवसंतो। खीणाजोगीणंतो देसस्सव जोगिणो कालो ॥४५॥**

(स्वो०)—जघन्यतः समयमेकं समयवृद्ध्योत्कृष्टतोऽन्तर्मुहूर्त्तं–भिन्नद्विघटिकामात्रं कालं यावदिति, अपूर्वकरणबादरकषायसूक्ष्मकषायोपशान्ताः स्वस्वगुणस्था भवन्ति। क्षपकश्रेण्यां त्वजघन्योत्कृष्टमन्तर्मुहूर्त्तमेव, तस्यां मरणाभावात्, उपशमश्रेण्यां त्वनियमः। क्षीणकषायायोगिनोस्त्वन्तर्मुहूर्त्तमेवोभयतोऽपि, तयोः प्रतिपाताभावात् क्षीणकषायस्य मरणाभावाच्च। देशविरतस्येव सयोगिनो अन्तर्मुहूर्त्ताद्देशोनपूर्वकोटिं यावत्स्थितिर्भवतीति गाथार्थः ॥४५॥

(मलय०)—संप्रति शेषगुणस्थानकानामेकं जीवमधिकृत्य कालमानमाह—अपूर्वकरणादारभ्य यावदुपशान्तः, किमुक्तं भवति? अपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहाः प्रत्येकं समयादारभ्योत्कर्षतो अन्तर्मुहूर्त्तं यावद्भवन्ति। तत्र समयमात्रभावना—कश्चिदुपशमश्रेण्यामपूर्वकरणत्वं समयमात्रमनुभूयापरः कोऽपि अनिवृत्तिबादरसंपरायत्वं प्राप्य तत्समयमात्रमनुभूय, तदन्यः कोऽपि सूक्ष्मसंपरायत्वं सम्प्राप्य तदपि समयमात्रमनुभूय, परः कोऽपि पुनरुपशान्तमोहत्वमवाप्य तदपि समयमात्रमनुभूय, द्वितीये समये-

परमाणुष्वनेकेषु नैकत्वस्थूलत्वारोपः, कथं तर्हि अनारब्धद्रव्यराशिषु तत्प्रत्यय इति चेत्, तावद्देशव्याप्तिसाम्येन तावत्परिमाणद्रव्यत्वारोपात्, स चैतज्जन्मानुभूतस्यापि तादृशद्रव्यस्य जन्मान्तरानुभूतस्य वा दैवादिवशेन स्मरणादिति गृहाण। न चैवं परमाणुष्वपि तावत्परिमाणद्रव्यत्वारोपः स्यात्, अन्यत्राप्रसिद्धेः। न चासन्नेवैकः स्थूलः परिस्फुरति, बाधकानामपास्तत्वात्।

द्वितीये परिमाणभेदो वा स्थौल्यमिति पक्षे, तदसम्भवेन महत्त्वपरिमाणवत्त्वरूपस्थौल्यस्याऽसम्भवेन, ननु परमाणुषु प्रत्येकं व्यासज्यवृत्तित्वावच्छेदेन स्थौल्यं न वर्तते, वर्तते च पर्याप्तिसम्बन्धेन बहुत्वावच्छेदेनेति तद् व्यासज्यवृत्त्येवेत्येवमभ्युपगम्यत इति चेत्, तर्हि अवयवेष्ववयविनो व्यासज्यवृत्तितयाऽभ्युपगम एव श्रेयान्, सिद्धान्तविरोधस्तूभयत्र सम एवेति किमेकत्र पक्षपातेनेत्याशयेनाह परमाणुष्विति, ननु धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायात् अवयविनमभ्युपगम्य तत्र परिमाणविशेषस्य कल्पनापेक्षया किन्तु परमाणुषु तस्य कल्पनायां लाघवमित्याशङ्क्य निषेधति न चेति, निषेधे बाधकमाह एतावतीति, संयोगस्येव स्थौल्यस्यापि व्यासज्यवृत्तित्वाभ्युपगमे संयोगप्रतीतिवत् स्थौल्यप्रतीतिरपि यावदाश्रयभेदोल्लेखिन्येवाभ्युपगन्तव्या स्यादित्यत्र हेतुमाह व्यासज्यवृत्तिधर्मग्रह इति, तावद्देशव्याप्तिसाम्येनेति अनेन साधारणधर्मग्रहः आरोपहेतुः, स चात्र वर्तत इति तद्बलादारोप इति ध्वनितम्। ननु सामग्री वै जनिकेति न्यायान्न साधारणधर्मग्रहमात्रं कारणं, किन्तु स्मरणद्वाराऽऽरोप्यानुभवोऽपि, स चात्र नास्तीत्याशङ्कायामाह स चेति, तावत्परिमाणद्रव्यत्वारोपश्चेत्यर्थः। दैवादिवशेनेति दैवं तत्तत्कार्यविशेषनियामकोऽदृष्टविशेषः, आदिपदात्कालविशेषादिकं बोधकान्तरस्योपग्रहः। अन्यत्राप्रसिद्धेरिति, अवयविनोऽनभ्युपगमेन तावत्परिमाणद्रव्यान्तरस्य चाभा-

न्तर्गतत्वादप्रधानत्वाच्चानर्थकं सप्तकग्रहणं ? अत्रोच्यते–संख्येयवर्षायुषोऽधिकृत्य सप्त भवा उभयानष्टौ, केवलानामसंख्येयवर्षायुषां कायस्थितिरेव नास्ति, अस्यार्थस्य ख्यापनाय सप्तग्रहणमिति गाथार्थः ॥४६॥

(मलय०)—तदेवमुक्तं गुणस्थानकेषु विभागे कालमानम् , संप्रति कायस्थितिकालमानमाह–एकेन्द्रियाणां कायस्थितिर्भूयोभूयस्तस्मिन्नेवैकेन्द्रियभवे उत्पत्तिरतराणां सागरोपमाणामनन्ताः सहस्राः अनन्तसागरोपमसहस्रप्रमाणाः, अनन्तोत्सर्पिण्यवसर्पिणीप्रमाणा इत्यर्थः । तथा चोक्तं प्रज्ञापनायां–एगिंदिएणं भंते ! एगिंदिए त्ति कालओ केवचिरं होइ ? गोयमा जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं अणंत कालं, अणंताओ उस्सप्पिणिओसप्पिणिओ कालओ । खेत्तओ अणंता लोगा असंखेज्जा पोग्गलपरियट्टा । तेणं पोगलपरियट्टा आवलियाए असंखेज्जइ भागो" इति । इयं चानन्तसागरोपमसहस्रप्रमाणा कायस्थिरेकेन्द्रियाणामवसेया वनस्पत्यपेक्षया, न शेषपृथिव्याद्यपेक्षया । पृथिव्यादिषु सर्वेष्वपि प्रत्येकमसंख्येयमेव कालमवस्थानात् । तथा चोक्तं प्रज्ञापनायामेव–"पुढविकाइएणं भंते । पुढविकाइए त्ति कालओ केवच्चिरं होइ ? गोयमा जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं असंखेज्जं कालं, असंखेज्जाओ उसप्पिणिओसप्पिणिओ कालओ। खेत्तओ असंखेज्जा लोगा एवं आउतेउवाउकाइयावि। वणप्फइकाइएणं भंते ! वणप्फइकाइए त्ति कालओ केवच्चिरं होइ? । गोयमा ! जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं अणंतं कालं, अणंताओ उस्सप्पिणीओसप्पिणीओ कालओ । खेत्तओ अणंता लोगा असंखेज्जा पोग्गलपरियट्टा, तेणं पोग्गलपरियट्टा आवलियाए असंखेज्जइ भागो" इति । अत्र 'खेत्तओ असंखेज्जा लोगा' इत्यस्यायमर्थः–असंख्येयेषु लोकाकाशेषु प्रतिसमयप्रदेशापहारे क्रियमाणे यावत्योऽसंख्येया उत्सर्पिण्यवसर्पिण्यो भवन्ति तावतीर्यावत्पृथिवीकायः पृथिवीकायत्वेनावतिष्ठते । एवं च वनस्पतिकायस्थितिविचारेऽपि यदुक्तं 'खेत्तओ अणंता लोगा इति' तदपि भावनीयम् । तथा त्रसानां भूयोभूय

ऽवयवावयविनोः स्थूलद्रव्योत्पत्तेरुपगमात् । किञ्चोक्तयोत्पादोपि क्षणिकत्वसिद्ध्युत्तरकालावच्छेदेनैव सिद्ध्यति, नचाद्यापि क्षणिकत्वं सिद्धमित्याशयेनाशङ्कोत्तराभ्यामाह विशिष्टोत्पादादेवेति, क्षणभङ्गपक्षे प्रत्यक्षाऽकुर्वद्रूपत्वविशिष्टलक्षणाऽदृश्यात्प्रत्यक्षकुर्वद्रूपत्वविशिष्टलक्षणदृश्योत्पादस्वीकारो न युक्त इत्याह—

क्षणभङ्गेऽपि विशिष्टस्याजनकाद्व्यावृत्तस्योत्पादो वक्तव्यः, व्यावृत्तिश्च जातिभेदो जातिसङ्करप्रसङ्गादेवासम्भवी, व्यक्तिभेदस्तु नानुगतरूपकार्यप्रयोजक इत्यन्वयव्यतिरेकाभ्यां स्थौल्यमेव प्रत्यक्षप्रयोजकं वाच्यम्, अन्यथा स्थूलतामप्राप्नुवन्नेकोऽपि परमाणुः प्रत्यक्षतामियादिति। न च बहुत्वमेव स्थौल्यं, तद्विपर्यय एव सूक्ष्मता, भिन्नदेशानामपि प्रत्यक्षत्वप्रसङ्गात्, नैरन्तर्यमपि विवक्षितमिति चेत्, न, तस्य प्रकृतेऽप्यसम्भवात्,

क्षणभङ्गेऽपीति, अजनकात् प्रत्यक्षाऽकुर्वद्रूपात्मकात्, प्रत्यक्षाजनकपरमाणुव्यावृत्तिः प्रत्यक्षकुर्वद्रूपात्मकपरमाणुव्यावृत्तिः प्रत्यक्षकुर्वद्रूपत्वात्मकव्यावृत्तिर्जातिविशेषो न सम्भवति, परमाणुव्यावृत्तिरूपत्वादिना साङ्कर्यात्, तथाहि रूपत्वाभाववति प्रत्यक्षकुर्वद्रूपात्मकपरमाणुपुञ्जे प्रत्यक्षकुर्वद्रूपत्वस्य प्रत्यक्षकुर्वद्रूपत्वाभाववत्यऽदृश्यरूपपरमाणुपुञ्जे रूपत्वस्य च सद्भावः, प्रत्यक्षकुर्वद्रूपात्मके रूपे च तयोस्समानाधिकरण्यमित्याह व्यावृत्तिश्चेति, अजनकव्यावृत्तव्यक्तिविशेषलक्षणव्यावृत्तिस्त्वननुगतत्वान्नानुगतप्रत्यक्षकारणम्, कार्यमात्रं प्रति कारणसामान्यस्यैव प्रयोजकत्वादित्याह व्यक्तिभेदस्त्विति, अन्यथा—स्थौल्यमन्तरेण प्रत्यक्षकुर्वद्रूपत्वस्य जातिविशेषस्य कारणत्वे. प्रकृतेऽपीति प्रत्यक्षतयाऽभिमते परमाणुपुञ्जे इत्यर्थः, तत्र हेतुमाह—

रूपपरमाणूनां रसादिपरमाणुभिरन्तरितत्वात्। न चारोप्यते नैरन्तर्यम्, इतरेतराश्रयप्रसङ्गात्, नैर-

'कालतः' कालमधिकृत्य तिर्यग्नराणां कायस्थितिर्भवति। नानाप्रकारा अपर्याप्तकानेकमनुष्यकायस्य तत्सन्ततेरव्यवच्छिन्नाया उत्कृष्टतः पल्योपमासंख्येयभागमात्रा स्थितिः, एकस्य त्वन्तर्मुहूर्त्तं, जघन्यतः उत्कृष्टतश्च सर्वत्रान्तर्मुहूर्त्तमिति गाथार्थः ॥४७॥

(मलय०)—संप्रत्येतेषामेव मनुष्यसंज्ञिपञ्चेन्द्रियतिरश्चां सप्ताष्टभवानामुत्कर्षतः कालमानमाह—पर्याप्तनराणां पर्याप्तसंज्ञिपञ्चेन्द्रियतिरश्चां वा प्रत्येकमष्टानामपि भवानां समुदायमाश्रित्य कालेन सर्वोत्कृष्टकालसंख्यया कायस्थितिः पूर्वकोटिपृथक्त्वं पल्योपमत्रिकं च। तथाहि—यदा मनुष्याः संज्ञिपञ्चेन्द्रियतिर्यञ्चो वा सप्तस्वपि पूर्वभवेषु पूर्वकोट्यायुष्केषूत्पद्यन्ते अष्टमे तु भवे त्रिपल्योपमायुष्केषु, तदा भवति तेषां पूर्वकोटिपृथक्त्वाभ्यधिका पल्योपमत्रयप्रमाणा कायस्थितिः। तथा 'नाणेत्यादि' इह यथासंख्येन पदघटना, ततोऽयमर्थः—नानाजीवानामपर्याप्तमनुष्याणां निरन्तरमुत्पद्यमानानामविच्छेदेन काल उत्कर्षतः पल्योपमासंख्येयभागः, एकस्य पुनरपर्याप्तमनुष्यस्य भूयो भूय उत्पद्यमानस्याविच्छेदेन कालो जघन्यतोऽप्यन्तर्मुहूर्त्तमुत्कर्षतोऽप्यन्तर्मुहूर्त्तम् ॥४७॥

**पुरिसत्तं सन्नित्तं, सयपुहुत्तं तु होइ अयराणं। थी पलियसयपुहुत्तं, नपुंसगत्तं अणंतद्धा ॥४८॥**

(स्वो०)—(पुरुषत्वं) द्रव्यपुरुषवेदोदयत्वं 'संज्ञित्वं' समनस्कत्वं सागरोपमशतपृथक्त्वं यावद् भवति, यद्यपि भवान्तरे पुरुषाकारस्याभावः चित्ताभावश्च, तथापि भाविनि भूतवदुपचारादिति न्यायतः तुशब्दाधिक्याच्च तत्राप्येवमेव प्रतिपत्तव्यम्। द्रव्यस्त्रीवेदोदयः पल्योपमशतपृथक्त्वं यावदुत्कृष्टतो भवति। द्रव्यनपुंसकवेदोदयोऽनन्तं कालं, यतः स सर्वजीवस्थानेषु लभ्यत इति गाथार्थः ॥४८॥

(मलय०)—पुरुषत्वं पुरुषवेदो निरंतरं भवन् जघन्यतोंतर्मुहूर्त्तमुत्कर्षतोऽतराणां सागरोपमाणां शतपृथक्त्वं भवति। केवलं तुशब्दस्याधिकार्थसंसूचनात्तदपि सागरोपमशतपृथक्त्वं मनाक् सातिरेकं द्रष्टव्यम्। तथा चोक्तं प्रज्ञापनायां—"पुरिसवेए णं भंते। पुरिसवेए त्ति

…र्निर्बीजेभ्यो जायमानानामुत्तरधामाङ्कुराणामेकोपादानकत्वप्रसङ्गः, उत्तरधामादीनामेव धामादय उपादानम्, अङ्कुरस्य तु बीजमिति चेत्, तदेतत् कुतो विशेषात्, कार्यसमवायित्वस्यानभ्युपगमात्, कारणत्वस्य चाविशिष्टत्वात्।

हन्त गदीति, पटभङ्गे तन्तूनामुत्पाद इति अनेन पटकाले न तन्तुसम्भवः, तन्तुकाले न न पटसम्भवः, द्वयोर्मध्यान्तर्भागाद् एकत्र स्थितावपि तद्वयोस्सप्रतिघत्वं तत्तयोस्समानोपादानत्वेन व्याहतम्, अत्र पटतन्तवो न सप्रतिघाः समानोपादानत्वादित्यनुमानं पर्यवसन्नीतिभावः। तथा च सप्रतिघत्वव्याघाते च सति, पटोपादानीभूतेभ्यस्तन्तुभ्यः पट एवोत्पद्यते, न तन्तव इति द्वयोस्समानोपादानत्वाभावान्न सप्रतिघत्वव्याहतिः, न चाशङ्क्यं तन्तुपटयोर्युगपदुपलम्भो न स्यादिति, इष्टत्वात्, शतपत्रवेधन्यायेन क्षणिकोत्पत्त्योर्यौगपद्यभ्रान्तेः, न चैवं पटोत्पादकाले तन्तूपलम्भो मास्तु पटनाशकाले कथं स्यात् पूर्वक्षणे तन्त्वभावेन तदानीं तन्तूनामुत्पत्तिरिति वाच्यं, तदानीं पटादपि तन्तूत्पत्त्यभ्युपगमादित्यभिप्रायकं परमतं प्रदर्श्य स्थलान्तरे द्वयोस्समानोपादानत्वप्रसङ्गेनेन तन्मतनिराकरणायाह अथेति. धामेति धाम अङ्कुरगतपाकजरूपादिनियामकस्तेजोविशेषः, तस्याङ्कुरस्य रूपादिपरमाणुपुञ्जात्मकत्वेन बीजस्यानेनाङ्कुरप्रयोजकत्वम्। विशेषाभावप्रदर्शनायाह—कार्यसमवायित्वस्यानभ्युपगमादिति, उपादाने निमित्तकारणभिन्नोपादानत्वस्य यस्मिन् कार्यं समवैति तस्य तदुपादानत्वमित्यस्य विशेषस्यानभ्युपगमादित्यर्थः, तदेतत्कुतो विशेषादिति यदुक्तं तत्र विशेषप्रदर्शनाय चोद्यमङ्क्ते—

साक्षात्स्वाभाव्यात् प्रकृतिविकारभावात। यथोक्तम् "अभ्रान्तमनेकान्तस्याग्रः प्रकृतिविक्रिये च तावपि," तौ

ततो भूयो द्वितीयं वारमीशानदेवलोके पञ्चपञ्चाशत्पल्योपमप्रमाणोत्कृष्टायुष्कास्वपरिगृहीतासु देवीषु मध्ये देवीत्वेनोत्पन्नः, ततः परमवश्यं वेदान्तरमेव गच्छति । एवं दशोत्तरं पल्योपमशतं पूर्वकोटिपृथक्त्वाभ्यधिकं प्राप्यते । अत्र पर आह–ननु यदि देवकुरूत्तरकुर्वादिषु पल्योपमत्रयस्थितिकासु स्त्रीषु मध्ये समुत्पद्यते, ततोऽधिकापि स्त्रीवेदस्यावस्थितिरवाप्यते, ततः किमेतावत्येवोपदिष्टा ? तदयुक्तमभिप्रायापरिज्ञानात् । तथाहि–इह तावद्देवीभ्यश्च्युत्वा असंख्येयवर्षायुष्कासु स्त्रीषु मध्ये स्त्रीत्वेन नोत्पद्यते, देवयोनेश्च्युतानामसंख्येयवर्षायुष्केषु मध्ये उत्पातप्रतिषेधात् । नाप्यसंख्येयवर्षायुष्का सती योषिदुत्कृष्टायुष्कासु देवीषु मध्ये जायते । यत उक्तं प्रज्ञापनाटीकाकृता–"जओ असंखेज्जवासाउया उक्कोसठिई न पावेइ इति ।" ततो यथोक्तप्रमाणैव स्त्रीवेदस्योत्कृष्टा स्थितिरवाप्यते । द्वितीयादेशवादिनः पुनरेवमाहुः–नारीषु तिरश्चीषु वा पूर्वकोट्यायुष्कासु मध्ये पञ्चषान् भवाननुभूय पूर्वप्रकारेणेशानदेवलोके वारद्वयमुत्कृष्टस्थितिकासु देवीषु मध्ये समुत्पद्यमाना नियमतः परिगृहीतास्वेवोत्पद्यते, नापरिगृहीतासु । ततस्तन्मतेन स्त्रीवेदस्योत्कृष्टमवस्थानमष्टादश पल्योपमानि पूर्वकोटिपृथक्त्वं च । तृतीयादेशवादिनां तु मतेन सौधर्मदेवलोके परिगृहीतदेवीषु सप्तपल्योपमप्रमाणोत्कृष्टायुष्कासु मध्ये वारद्वयं समुत्पद्यते, ततस्तन्मतेन चतुर्दशपल्योपमानि पूर्वकोटिपृथक्त्वाभ्यधिकानि स्त्रीवेदस्य स्थितिः । चतुर्थादेशवादिनां तु मतेन सौधर्मदेवलोके पञ्चाशत्पल्योपमप्रमाणोत्कृष्टायुष्कास्वपरिगृहीतदेवीष्वपि मध्ये पूर्वप्रकारेण वारद्वयं देवीत्वेनोत्पद्यते, ततस्तन्मतेन पल्योपमशतं पूर्वकोटिपृथक्त्वाभ्यधिकमवाप्यते । एष एव चादेशो ग्रन्थकृता परिगृहीतः, प्रायोऽस्यैव बहुभिः सूरिभिः परिगृहीतत्वात् । पञ्चमादेशवादिनः पुनरित्थमाहुः–नानाभवभ्रमणद्वारेण यदि स्त्रीवेदस्योत्कृष्टमवस्थानं चिन्त्यते, तर्हि पल्योपमपृथक्त्वमेव पूर्वकोटिपृथक्त्वाभ्यधिकं प्राप्यते न ततोऽभ्यधिकम् । तत्र नारीषु तिरश्चीषु वा पूर्वकोट्यायुष्कासु मध्ये सप्त भवाननुभूयाष्टमे भवे देवकुर्वादिषु

नोच्यते तत्र प्रकृतिनित्यत्वाभ्युपगम एवेत्याशयेन बौद्ध आह—

ओमिति चेन्न, न, पटदशायां तन्तुजातीयानुच्छेदस्य सर्वानुभवसिद्धत्वेन तन्तोः पटानुपादानत्वप्रसङ्गात्, सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलसिद्धौ क्षणभङ्गभङ्गः, अभ्युपगतवाक्यार्थसिद्धिनान्तरीयकसिद्धिकोऽर्थोऽधिकरणसिद्धान्तः। तथा च वार्त्तिकं—वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति, येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जन्यमानायां योऽन्योऽर्थः सिद्ध्यति स तथेत्यर्थः। हेतुरीदृशः पक्षश्च वाक्यार्थं इति, प्रकृते क्षणभङ्गनिरासको हेतुरधिकरणसिद्धान्तसिद्धः, स्थूलोऽवयवी वाक्यार्थः पक्ष इति गुणानन्दः, उपलक्षणमेतत्, उदाहरणं भाष्ये—'इन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति, अत्र हेतु प्रतिसन्धानं सिद्धत् स्वानुषङ्गिगुणव्यतिरिक्तद्रव्यादिलक्षणार्थान्तरान्वितमेव सिद्ध्यतीति।

ओमिति चेदिति, पटानुपादानत्वप्रसङ्गादिति पटं प्रति प्रकृतिरूपोपादानकारणत्वं न स्यादित्यर्थः। तथेति अधिकरणसिद्धान्त इत्यर्थः। एवम्भूतलक्षणाक्रान्तः को भवतीत्यपेक्षायामाह हेतुरीदृश इति, ईदृशःअधिकरणसिद्धान्तस्य विषयः। वाक्यार्थसिद्धावित्यत्र वाक्यार्थः क इत्याकाङ्क्षायामाह पक्षश्च वाक्यार्थ इति। प्रकृत इति यस्स्थूलोऽवयवी वाक्यार्थस्तस्य सिद्धौ योऽन्योऽर्थः स्थूले तदतिरिक्तानुगामिन्यन्यः क्षणभङ्गनिरासकहेतुस्सिद्ध्यति सोऽधिकरणसिद्धान्तसिद्ध इति भावः। हेतुरिवान्योऽप्यधिकरणसिद्धान्तविषय इत्याशयेनाह उपलक्षणमेतदिति, भाष्ये न्यायभाष्ये, प्रतिसन्धानमिति योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्याकारकमनुसन्धानमित्यर्थः। उक्तोदाहरणे वाक्यार्थः प्रतिसन्धानलक्षणो हेतुरेव तन्निरूढार्थानसिद्धिकश्च हेतुर्न किन्तु

पामपि नपुंसकवेदाद्धाऽनादिसपर्यवसाना । अथ किमसांव्यवहारिकराशेर्निर्गत्य सांव्यवहारिकराशावागच्छन्ति येनैवं प्ररूपणा क्रियते ? उच्यते–आगच्छन्ति । कथमवसीयते इति चेत्, पूर्वाचार्योपदेशात् । तथा चाह दुःषमान्धकारनिमग्नजिनप्रवचनप्रदीपो भगवान् जिनभद्रगणिक्षमाश्रमणो विशेषणवत्याम्–"सिज्झंति जत्तिया किर, इह संववहारजीवरासीओ । इंति अणाइवणस्सइरासीओ तत्तिया तंमि ॥१॥ अयं च विचारो विशेषतः प्रज्ञापनाटीकायामभिधास्यते, इति नेह विस्तार्यते, इति कृतं प्रसंगेन ॥४८॥

बायरपज्जेगिंदियविगलाण य वाससहस्स संखेज्जा । अपज्जंतसुहुमसाहारणाण पत्तेगमंतमुहू ॥४९॥

(स्वो०)–बादराणां पर्याप्तकनामविशेपितानां संख्येया वर्षसाहस्र्यः प्रत्येकं पृथिवीजलाग्निवायुवनस्पतिप्रत्येकैकेन्द्रियाणां संख्येया वर्षसाहस्र्यः कायस्थितिः, विकलानामपि द्वित्रिचतुरिन्द्रियाणां प्रत्येकं संख्येयवर्षसाहस्र्यः कायस्थितिः, एतेषामसंज्ञिसंज्ञिनां चापर्याप्तनामोदयिनां सूक्ष्मसाधारणनामोदयिनां च पर्याप्तनामोदयविशेपितानामपर्याप्तनामोदयविशेपितानां च प्रत्येकं त्रयाणामप्यन्तर्मुहूर्त्तमात्रा कायस्थितिर्भवतीति गाथार्थः ॥४९॥

(मलय०)—बादरपर्याप्तानामेकेन्द्रियाणां भूयो भूयः पर्याप्तबादरैकेन्द्रियत्वेनोत्पद्यमानानां कायस्थितिर्जघन्यतोऽन्तर्मुहूर्त्तं, उत्कर्षतः संख्येयानि वर्षसहस्राणि । उक्तं च–"बायरेगिंदियपज्जत्तए णं भंते ! बायरेगिंदियपज्जत्तए त्ति कालओ केवचिरं होइ ? गोयमा ! जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं संखेज्जाइं वाससहस्साइं इति ।" इयं च बादरपर्याप्तकेन्द्रियकायस्थितिचिन्ता बादरपर्याप्तैकेन्द्रियत्वं सामान्यमात्रमधिकृत्य कृता । यदि पुनर्विभागतो बादरपर्याप्तपृथिवीकायिकत्वाद्यधिकृत्य कायस्थितिश्चिन्त्यते, तदैवमवसेया–बादरपर्याप्तपृथिवीकायिकस्य भूयो भूयः पर्याप्तबादरपृथिवीकायिकत्वेनोत्पद्यमानस्य जघन्यतोन्तर्मुहूर्त्तमुत्कर्षतः संख्येयानि वर्षसहस्राणि ।

वि अंतोमुहुत्तं ।" तथा सूक्ष्माणां सामान्यतः सूक्ष्मजीवानां पृथिव्यादिसूक्ष्माणां, साधारणानां—सूक्ष्मनिगोदानां बादरनिगोदानां च पर्याप्तविशेषणेनापर्याप्तविशेषणेन च पृथग् विशिष्यमाणतया विवक्षितानां प्रत्येकं कायस्थितिर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतोऽप्यन्तर्मुहूर्त्तम्। तथा चोक्तं प्रज्ञापनायां—"सुहुमे णं भंते ! अपज्जत्तए सुहुमअपज्जत्तए त्ति कालओ केवचिरं होइ? गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं । पुढविकाइयआउकाइयतेउकाइयवाउकाइयवणस्सइकाइयाण वि एवं चेव । पज्जत्तयाण वि एवं । बायरनिगोयपज्जत्तए य बायरनिगोयअपज्जत्तए य पुच्छा, गोयमा ! दुन्निवि जहन्नेण उक्कोसेण वि अंतोमुहुत्तं ।" यदि पुनः पर्याप्तापर्याप्तरूपे विशेषणे अनपेक्ष्य सामान्यतः सूक्ष्माणां कायस्थितिश्चिन्त्यते तदैवमवसेया—सूक्ष्मपृथिवीकायस्य भूयो भूयः सूक्ष्मपृथिवीकायत्वेनोत्पद्यमानस्य जघन्यतोऽन्तमुहूर्त्तं कायस्थितिः, उत्कर्षतोऽसंख्येया उत्सर्पिण्यवसर्पिण्यः । एवं सूक्ष्माप्कायिकतेजस्कायिकवायुकायिकवनस्पतिकायिकानामपि भावनीया । तथा चाह—"सुहुमपुढविकाइए णं भंते ! सुहुमपुढविकाइए त्ति कालओ केवचिरं होइ ?। गोयमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं असंखिज्जं कालं असंखिज्जाओ उस्सप्पिणीओसप्पिणीओ कालओ, खेत्तओ असंखिज्जा लोगा । एवं सुहुमआउकाइए सुहुमतेउकाइए सुहुमवाउकाइए सुहुमवणस्सइकाइए ॥४९॥

**पत्तेय बायरस्स उ परमा हरियस्स होइ कायठिई । ओसप्पिणी असंखा साहारत्तं रिउगइयत्तं ॥५०॥**

(स्वो०)—प्रत्येकबादरस्य 'हरितस्य' वनस्पतिजीवस्य पर्याप्तापर्याप्तकविशेषणाभ्यामप्रधानस्य 'परमा' उत्कृष्टा असंख्येया उत्सर्पिण्यवसर्पिण्यः कायस्थितिर्भवति। इयत्कालमेव साहारकत्वं भवान्तरेपु संसरतः ऋजुगतित्वमपि। तत्कालमेव भवान्तरेपु कुतोऽनुमीयते? उच्यते—अक्षराधिक्यादर्थाधिक्यं परिकल्प्यते प्रत्येकवनस्पतीनां सूक्ष्मत्वाभावात् सिद्धं बादरत्वम्, सिद्धेऽपि यद्ग्रहणं तदस्यार्थस्य

कत्वभावात् । तद् ऋजुगतित्वमपि निरन्तरमुत्कर्षतः साहारत्वमित्रासंख्येययोत्सर्पिण्यवसर्पिणीर्यावल्लभ्यते ॥५०॥

**मोहठिइबायराणं सुहुमाण असंखया भवे लोगा । साहारणेसु दोसड्ढपुग्गला निव्विसेसाणं ॥५१॥**

(स्वो०)–मोहनीयकर्मणो यावन्मात्रा स्थितिः सागरोपमाणां सप्ततिकोटाकोट्यः तावन्मात्रा 'बादराणां' सामान्यतः पर्याप्तापर्याप्तरूपाणां पृथिवीजलाग्निवायुकायिकानां पृथक्, वनस्पतेः पृथक् भणनादवसीयते, एषामेव सूक्ष्माणामसंख्येयलोकाकाशप्रदेशतुल्या कायस्थितिः । साधारणानां बादरसूक्ष्मपर्याप्तापर्याप्तविशेषणनिरपेक्षाणां द्वौ सार्धौ पुद्गलपरावर्त्तौ कायस्थितिरिति गाथार्थः ॥५१॥

(मलय०)—अत्र मोहशब्देन दर्शनमोहनीयकर्म विवक्षितं, बादराणामिति च यद्यपि सामान्येनोक्तं, तथापि पृथिव्यप्तेजोवायुप्रत्येकसाधारणबादरवनस्पतीनामिति द्रष्टव्यं, न तु सामान्यतो बादराणां बादरवनस्पतिकायिकानां वा, तेषां कायस्थितेः प्रागेवाभिधानात् । तत एवमक्षरार्थः–बादराणां पृथिव्यप्तेजोवायुप्रत्येकसाधारणवनस्पतीनां निर्विशेषाणां पर्याप्तापर्याप्तविशेषणरहितानां कायस्थितिर्जघन्यतोऽन्तर्मुहूर्त्तं, उत्कर्षतो मोहस्थितिर्मोहस्थितिप्रमाणा सप्ततिसागरोपमकोटीकोटीप्रमाणा इत्यर्थः । उक्तंच–"बायरपुढविकाइए णं भंते ! बायरपुढविकाइए त्ति कालओ केवच्चिरं होइ ? । गोयमा ! जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं सत्तरिं सागरोवमकोडाकोडीओ, एवं बायर आउकाइएवि, एवं जाव बायरवाउकाएवि । पत्तेयबायरवणस्सइकाइए णं भंते ! पुच्छा, गोयमा ! जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं सत्तरिं सागरोवमकोडाकोडीओ । तथा बायरनिगोए णं भंते ! बायरनिगोएत्ति कालओ केवच्चिरं होइ ? गोयमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं सत्तरिं सागरोवमकोडाकोडीओ इति" तथा सूक्ष्माणां भूयो भूयः सूक्ष्मत्वेनोत्पद्यमानानां निर्विशेषाणां पर्याप्तापर्याप्तविशेषणरहितानां कायस्थितिर्जघन्यतोऽन्तर्मुहूर्त्तं, उत्कर्षतोऽसंख्येया लोकाः, असंख्येयेषु लोकाकाशेषु प्रतिसमयं प्रदेशापहारेणापह्रियमाणेषु यावत्य उत्स-

स्थूलत्वेन परमाणुत्वेन च पक्षत्वं सम्भवति, आद्ये बाधात्, द्वितीये च सिद्धसाधनादिति भावः। यत्सत् तन्निरवयवमित्यादिप्रसङ्ग साधनमिति द्वितीयपक्षं निरस्यति नापि द्वितीय इति, अत्रापि विपर्ययोऽस्त्येवेति बौद्धमतमाशङ्क्य निषेधति न चेति, वाच्यमित्युत्तरेण सम्बन्धः। प्रसङ्गमूलभूताया आपाद्येन सहापादकस्य व्याप्तेः प्रदर्शनपूर्वकं विपर्ययस्वरूपमाह यत्सत्तन्निरवयवमिति, इत्यर्थ इति न च विवादविषयो निरवयव इत्यस्यार्थ इत्यर्थः, यद्वा उदाहरणोपनयावयवद्वयाभ्युपगन्तॄणां बौद्धानां मते यत्सत्तन्निरवयवं यथा विज्ञानमित्याकारकं विपर्ययानुमाने व्यतिरेकोदाहरणं न चायं निरवयवो घटादिरित्याकारक उपनय इत्यर्थः, अवयवद्वयाभ्युपगन्तॄणां बौद्धानां मते तस्मान्न सन्निति निगमनं न सम्भवतीत्यत आह स्वमतावष्टम्भेनेति, न्यायमतावलम्बनेनेत्यर्थः। निगमनोपन्यासप्रयोजनमाह सावयवत्वस्येति, परेण बौद्धेन, पक्षीभूतघटे स्थूलत्वमनिच्छता बौद्धेन सावयवत्वं नाभ्युपगतमिति तस्य हेतोः स्वरूपासिद्धतया न सत्त्वाभावसाधकत्वमित्यभिप्रायेण हेतुमाह—

पक्षस्य सावयवत्वमनिच्छता तस्य प्रवर्त्तयितुमशक्यत्वात्। न च तत्त्वयेष्यते। न च तस्येष्टौ तेनासत्त्वं शक्यसाधनम्, आश्रयासिद्धेर्विरोधादसाधारण्याद्वा, घटादेरसिद्धावाश्रयासिद्धिः, सिद्धौ धर्मिग्राहकप्रमाणबाधः, विपक्षाद्विज्ञानादेः सपक्षाच्च शशविषाणादेर्व्यावृत्तत्वादसाधारण्यमितिभावः। न च विपर्ययोऽपि प्रसङ्गवत्परेच्छया प्रवर्त्तते, सर्वविरुद्धत्वात्। कः पुनरवयविनि न्यायः, किं प्रत्यक्षान्न्यायो गरीयान्, यद्येवं, बुद्धावेव कोऽसौ, तस्मादसारमेतत्।

पक्षस्येति, घटादेरित्यर्थः। तस्य, विपर्ययस्य, तत् पक्षस्य सावयत्वम्; पक्षीभूते घटे स्वरूपासिद्धिपरिहाराय सावयवत्व-

(स्वो०)—साखादनाः सम्यग्मिथ्यादृष्टयश्च 'सन्तता' अव्यवच्छिन्नाः, पल्योपमासंख्येयभागमात्रं कालमुत्कृष्टतः एकानेकविकल्पोत्पत्त्या विनश्यन्तोऽपि इयत्कालं भवन्ति, स्वगुणस्थानमशून्यं कुर्वन्तीत्यर्थः। जघन्यतः साखादनाः समयमेकमितरे अन्तर्मुहूर्तमित्ययमेककालः। तुशब्दादुपशामनयोग्या अपूर्वकरणाः, बादरसूक्ष्मकषाया उपशान्तकषायाश्च जघन्यतः समयमेकं स्वगुणस्थानमशून्यं कुर्वन्ति परतो विनश्यन्ति देवत्वेनोत्पद्यन्ते, उत्कृष्टतोऽन्तर्मुहूर्तं स्थित्वा गुणान्तरं व्रजन्ति, तत्परतः श्रेणीशून्यतया भाव्यमिति गाथार्थः ॥५२॥

(मलय०)—उक्तः कायस्थितिकालः, इह पूर्वं गुणस्थानकेषु चिन्त्यमानं कालमानमेकजीवाश्रितमुक्तम्। संप्रति तदेव नानाजीवाश्रितमाह—सासादनाः सम्यग्मिथ्यादृष्टयश्च प्रत्येकमुत्कर्षतः संतता निरन्तरा भवन्ति पल्योपमासंख्येयभागं क्षेत्रपल्योपमासंख्येयभागं कालं, जघन्यस्त्वेककालाः, एकस्य जीवस्य यो जघन्यः काल उक्तः—सासादनस्य समयः, सम्यग्मिथ्यादृष्टेरन्तर्मुहूर्तं, स एव नानाजीवसन्ततावित्यर्थः। इयमत्र भावना—सासादनसम्यग्दृष्टयो जघन्यतः समयमात्रं प्राप्यन्ते, उपशमसम्यक्त्वाद्धायाश्चरमसमये सासादनभावप्रतिपत्तितो द्वितीयसमयेऽपगमनादपरेषां च तस्मिन् द्वितीये समये सासादनप्रतिपत्तॄणामभावात्, उत्कर्षतः क्षेत्रपल्योपमासंख्येयभागवर्तिप्रदेशराशेः प्रतिसमयं प्रदेशापहारेण यावान् कालो भवत्यसंख्येयोत्सर्पिण्यवसर्पिणीमानस्तावन्तं कालं, परतोऽवश्यमन्तरं भवति। सम्यग्मिथ्यादृष्टयः पुनर्जघन्यतोऽन्तर्मुहूर्तं कालं यावन्निरन्तरं प्राप्यन्ते, तद्गुणस्थानकस्य जघन्यतोऽप्यन्तर्मुहूर्तप्रमाणत्वात्, उत्कर्षतः क्षेत्रपल्योपमासंख्येयभागापहारोपलक्षितं कालम्। तथा उपशमका उपशमश्रेण्यन्तर्गता अपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपराया उपशान्ता उपशान्तमोहाः प्रत्येकं सर्वेऽपि निरन्तरं जघन्यतः समयमात्रं लभ्यन्ते यदाऽपूर्वकरणादौ प्रविश्य द्वितीये समये म्रियन्तेऽन्ये

नोरप्येकताव्यवहारस्स्यादिति भेदव्यवहार एव विलुप्तस्स्यादितिभावः। नित्यसन्देह इति सत्त्वासत्त्वाभ्यामितिशेषः, द्विधा तथ्यातथ्यविभागस्यानुपपत्तिः सर्वज्ञानानां यथार्थत्वमेवेतिप्रभाकरमतमाश्रित्य, अयथार्थत्वमेवेति शून्यवादिमतमाश्रित्य च, नच द्वयमपि सम्भवति, कस्यचिज्ज्ञानस्य यथार्थत्वं कस्यचिच्चायथार्थत्वमिति तथ्यातथ्यविभागस्य कर्तुं शक्यत्वादिति ये यथार्थज्ञानविषयास्ते सन्त एव, ये चाऽयथार्थज्ञानविषयास्ते भासमानरूपेणाऽसन्त एवेति बाह्येष्वर्थेषु सत्त्वासत्त्वाभ्यां न नित्यसंदेह इत्यभिप्रायवान् समाधत्ते—न तावदिति, सर्वस्य सर्वज्ञानस्य, ज्ञानविषयिका विपरीतमवगतं मयेति लौकिकी प्रतीतिरन्यथाऽवगतमित्यन्यथाख्यातिरिति च वैनयिकी प्रतीतिर्यथार्था नवेति प्रश्ने यदि यथार्थेत्युत्तरं तदेदंरजतमित्याकारकप्राथमिकज्ञानस्य स्वविषयीभूतस्याऽयथार्थत्वम्, प्राथमिकज्ञानविशेष्यकायथार्थत्वप्रकारकप्रतीतेश्च यथार्थत्वम्, यदि च न यथार्थेत्युत्तरं तदा प्राथमिकज्ञानस्य यथार्थत्वं प्राथमिकज्ञानविशेष्यकायथार्थत्वप्रकारकप्रतीतेश्चाऽयथार्थत्वमिति तथ्यातथ्यविभागोपपत्तेस्सर्वज्ञानस्य यथार्थत्वादेव विभागोऽनुपपन्न इति न सम्भवतीत्याह—

तथा हि विपरीतमवगतं मयेति लौकिकी प्रतीतिरन्यथाख्यातिरिति च वैनयिकी, विनयः शास्त्रार्थज्ञानं तदधीना, इदमुक्तं भवति—लौकिकपरीक्षकाणां व्यवहारमात्रे वैचित्र्यं प्रतीतिस्तुल्यैवेति तदियमुभयेषां विपरीतज्ञानविषया प्रतीतिर्यथार्था न वा, यथार्था चेत्, स्वविषयीभूतज्ञानायथार्थत्वग्राहिणः प्रत्ययस्य यथार्थत्वेन विषयज्ञानस्यायथार्थत्वसिद्धिः, नेति पक्षे तस्यैवायथार्थत्वान्न सर्वयाथार्थ्यमिति। शब्दसंलापमात्रमेतत् न प्रतीतिरिति चेत्, न, नहि व्यवहारमात्रे परीक्षकाणां वादः, न च नायमस्तीति।

प्रतिपत्तिकालमाह—

**एगिंदित्तं समयं तसत्तणं सम्मदेसचारित्तं। आवलियासंखंसं अडसमय चरित्तसिद्धी य ॥५४॥**

(स्वो०)—'एकेन्द्रियत्वं' सततमव्यवच्छिन्नं सदा जीवाः प्रतिपद्यन्ते, तद्भावेनोत्पद्यन्त इति, 'त्रसत्वं' द्वीन्द्रियादिभावं, सम्यक्त्वं देशविरतिगुणं चावलिकासमयानां असंख्येयभागमात्रसमयान् यावत्प्रतिपद्यन्ते, तदुत्तरकालमवश्यं व्यवच्छेदेन भाव्यम्, सर्वविरतिं सिद्धत्वं चाष्टौ समयान् सातत्येन प्रतिपद्यन्ते अव्यवच्छेदेनेति गाथार्थः ॥५४॥

(मलय०)—तदेवं भवे काये चैकैकजीवस्य गुणस्थानकेष्वेकानेकजीवानामवस्थानकालमभिधाय साम्प्रतं नानाजीवापेक्षया निरन्तरोत्पत्तिकालमानमाह—सततमनवरतं नानाजीवानधिकृत्यैकेन्द्रियत्वमेकेन्द्रियत्वेनोत्पत्तिः प्राप्यते। किमुक्तं भवति ? एकेन्द्रियत्वेनोत्पद्यमानाः सकलमपि कालं जन्तवः प्राप्यन्ते। तथाहि—एकेन्द्रियाः पञ्चविधाः। तद्यथा—पृथिवीकायिका अप्कायिकास्तेजस्कायिका वायुकायिका वनस्पतिकायिकाश्च। एते च प्रत्येकमपि सकलकालमुत्पद्यमानाः प्राप्यन्ते, किं पुनः सामान्यत एकेन्द्रियाः ?। अथ पृथिव्यादयः प्रत्येकं सकलमपि कालमुत्पद्यमानाः प्राप्यन्ते, इति कथमवसेयम् ? उच्यते—सूत्रप्रामाण्यात्। तच्चेदं सूत्रम्—"पुढविकाइयाणं भंते ! केवइयं कालं अविरहिया उववाएणं पन्नत्ता ? गोयमा ! अणुसमयं अविरहिया उववाएणं पन्नत्ता। एवं आउकाइयावि तेउकाइयावि वाउकाइयावि वणस्सइकाइयावि अणुसमयं अविरहिया उववाएणं पन्नत्ता इति।" ननु यदि पृथिव्यादयः प्रतिसमयमुत्पद्यन्ते, तर्हि समये समये कियन्त उत्पद्यन्ते ? उच्यते—पृथिव्यप्तेजोवायवः प्रत्येकमसंख्येया असंख्येयलोकाकाशप्रदेशराशिप्रमाणाः, वनस्पतयस्त्वनन्ता अनन्तलोकाकाशप्रदेशराशिमानाः। उक्तञ्च—"चयणुववाओ एगिंदिएसु अविरहियमेव अणुसमयं। हरियाणंता लोगा सेसा काया

ख्यातित्वस्य प्रतीतिः कथं, तथा चोभयवादिसिद्धत्वात् न विवादावसरः। अथान्यथात्वं व्यधिकरणप्रकारत्वं ख्यातौ निषिध्यते तच्चेच्छादौ प्रतीतम्, न च निषेधाधिकरणे निषेध्यप्रतीतिरङ्गं, मानाभावात्, शुक्त्यादौ रजतत्वादिप्रकारकज्ञानाभावे कथं तत्र रजतार्थिप्रवृत्तिरिति चेत्, रजतादिगोचरादेव प्रमुष्टतत्तांशकाद्रजतमित्यादिस्मरणादिति चेत्, न, अन्यज्ञानादन्यत्र प्रवृत्त्यसम्भवात्, अन्यथाऽतिप्रसङ्गात्।

शब्दार्थे विवाद इति, वाक्यार्थे इति, अस्यान्यथाख्यातित्वे इत्यनेनान्वयः, कथमिति, अत्र यदि तस्य क्वचित्सत्त्वं न स्यादिति शेषः, तथा चेति तस्य क्वचित्सत्त्वाभ्युपगमे चेत्यर्थः। ज्ञानस्य कस्यचिदयथार्थत्वे तद्दृष्टान्तेन ज्ञानान्तरेऽपि ज्ञानत्वहेतुनाऽयथार्थत्वस्य शून्यवादिना व्यवस्थापयितुं शक्यत्वान्न कस्यचिद्वस्तुनो व्यवस्थितिस्स्यात् तद्भयात् परतः प्रामाण्यापत्तिभयाच्च ज्ञानमात्रस्य यथार्थत्वं प्रभाकरैस्स्वीक्रियते, इच्छायां प्रयत्ने च नोक्तभयः, तयोर्वस्त्वसाधकत्वादिति तत्र प्रसिद्धस्यायथार्थत्वस्यान्यथात्वरूपस्य ज्ञाने निषेध इति न विवादाभाव इत्याशयेनाशङ्कते अथेति, अन्यथात्वमिति, अस्यैव स्वरूपोपवर्णनमाह व्यधिकरणप्रकारत्वमिति विशेष्यत्वाऽसमानाधिकरणो यः प्रकारस्तस्य भावस्तत्त्वम्, विशेष्यताविशिष्टप्रकारताकत्वमिति पर्यवसितोऽर्थः। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वाश्रयाऽवृत्तिवृत्तित्वोभयसम्बन्धेन, इदं रजतमिति ज्ञानद्वयम्, इदमिति प्रत्यक्षं रजतमिति च स्मरणम्, न च तत्तोल्लेखाभावात्कथं तत्स्मरणमिति वाच्यम्, दोषवशात्तत्तायाः प्रमोषस्योपगमात्, तदेव च स्मरणं प्रवर्त्तकमिति प्रभाकर आह— रजतादिगोचरादेवेति, प्रवृत्त्यसम्भवादिति सामान्यतो विषयतासम्बन्धेन प्रवृत्तिम्प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वं विशेषतश्चोपादानत्वाख्यविषयतासम्बन्धेन प्रवृत्तिं प्रति विशेष्यत्वाख्यविषयतासम्बन्धेन ज्ञानस्य कारणत्वमिति रजतस्मरणाच्छुक्तौ

(मलय०)—उपशमश्रेणिमुपशांततां च, मनुजत्वं पञ्चेन्द्रियगर्भजमनुष्यत्वं, तथानुत्तरसुरत्वं, उपलक्षणमेतत् अप्रतिष्ठाननरकावासनारकत्वं, तथा क्षपकश्रेणिं च, नानाजीवा निरन्तरं प्रतिपद्यमानाः जघन्यतः समयमात्रं, उत्कर्षतः संख्येयान् समयान् यावत्प्रतिपद्यन्ते, परतोऽवश्यमन्तरभाजः ॥५५॥

**बत्तीसा अडयाला सट्ठी बावत्तरी य चुलसीई । छन्नउइ दुअट्ठसयं एगाए जहुत्तरे समए ॥५६॥**

(स्वो०)—एकादयो रूपवृद्ध्या यावद् द्वात्रिंशज्जीवाः प्रथम (क्षपक)श्रेण्याद्यसमये क्षपकत्वं प्रतिपद्यन्ते, न तेभ्योऽभ्यधिकाः तदुत्तरसमये एकादयो रूपवृद्ध्या यावदष्टचत्वारिंशन्न तेभ्योऽप्यधिकास्तृतीयसमये एकादयो रूपवृद्ध्या षष्टिं यावदेवं चतुर्थसमये द्विसप्ततिं यावत्, पञ्चमसमये चतुरशीतिं यावत्, षष्ठसमये षण्णवतिं यावत्, सप्तमसमये द्व्यधिकं शतम्, अष्टमसमये एकादयो रूपवृद्ध्या अष्टाभ्यधिकशतपर्यन्ता जीवाः श्रेणीं सिद्धत्वं वा प्रतिपद्यन्ते, तत्परतः प्रतिपत्तिरेव नास्ति, एते चोत्कृष्टतः सर्वेऽपि द्व्यधिकषट्शतप्रमाणा इति गाथार्थः ॥५६॥

(मलय०)—इह प्रागिदमुत्कर्षतोऽष्टौ समयान्यावन्निरन्तरं सिद्धत्वं प्रतिपद्यमानाः प्राप्यन्ते, तत्र कतिसंख्या निरन्तरमष्टौ समयान् यावत्प्राप्यन्ते ? कति वा सप्तादिसमयानिति विनेयप्रश्नमाशङ्क्य विशेषनिर्धारणार्थमाह—एकादयो द्वात्रिंशत्पर्यन्ता निरन्तरमष्टौ समयान् यावत्प्राप्यन्ते । इयमत्र भावना—प्रथमसमये जघन्यत एको द्वौ वा सिद्ध्यतः, उत्कर्षतो द्वात्रिंशत्सिध्यन्ति, द्वितीयसमयेऽपि जघन्यत एको द्वौ वा सिद्ध्यतः, उत्कर्षतो द्वात्रिंशत् । एवं तृतीयचतुर्थसमयेऽपि यावदष्टमेपि समये जघन्यत एको द्वौ वा सिद्ध्यतः, उत्कर्षतो द्वात्रिंशत्, परतोऽवश्यमन्तरम् । तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिद्ध्यन्तः सप्त समयान्

वृत्तिहेतू इति चेत्, रजतयो रङ्गरजतयोर्वा इमे रजतारजते इति ग्रहादेकत्र युगपत्प्रवृत्तिनिवृत्त्यापत्तिः।

आद्य इति, असौ इष्टाऽभेदाग्रहः, भेदग्रह इष्टभेदज्ञानम्, भावे वा विपरीतख्यातिरिति, तवाप्यभ्युपगता स्यादिति दृश्यम्, इदमित्याकारकधर्मिविषयकप्रत्यक्षोपस्थितिगोचरे प्रवृत्तिविषये धर्मिज्ञानातिरिक्ता येष्टोपस्थितिस्तद्विषयस्येष्टस्य भेदाग्रहः प्रवृत्तिहेतुः, एवमुपस्थितिगोचरे निवृत्तिविषये निवृत्तिविषयविषयकज्ञानातिरिक्ता याऽनिष्टोपस्थितिस्तद्विषयस्यानिष्टस्याऽभेदाग्रहः निवृत्तिहेतुरिति प्रवृत्तिकाले न निवृत्तिप्रसङ्गदोषः, अनिष्टोपस्थितेरभावादित्याशङ्कते अथोपस्थित इति, युगपत्प्रवृत्तिनिवृत्त्यापत्तिरिति, यद्यपि रजतेऽरजताऽभेदग्रहोऽन्यथाख्यातिमतेऽस्त्येव तथाप्युपस्थिते रजतेऽन्यथाख्यातिभयात्पृथगुपस्थितस्यारजतस्याऽभेदग्रहः प्रभाकरमते नास्तीति भवत्येव प्रवृत्तिकाले निवृत्तिप्रसङ्ग इति भावः। यद्व्यक्तिसाकाङ्क्षेष्टस्य रजतस्योपस्थितिस्तस्यां व्यक्तौ प्रवृत्तिः, नतु निवृत्तिः, तद्व्यक्तिसाकाङ्क्षाया अनिष्टाऽरजतव्यक्त्युपस्थितेरभावात्, यद्व्यक्तिसाकाङ्क्षाऽनिष्टस्यारजतस्योपस्थितिस्तस्यां निवृत्तिः, नतु प्रवृत्तिः, तद्व्यक्तिसाकाङ्क्षाया इष्टरजतोपस्थितेरभावात्, आकाङ्क्षा च भवताप्युपेया, यद्वशाद् विशेष्यतया रजतव्यक्त्योरुपस्थितौ विशेषणतया रजताऽरजतयोरुपस्थितावेकस्य रजतस्य रजतव्यक्तौ विशेषणत्वं, अरजतस्य च रजतान्तरे, नान्यत्रेत्याशङ्कते—

अथ यद्धर्मिसाकाङ्क्षेष्टस्योपस्थितिस्तत्र प्रवर्त्तते, यद्धर्मिसाकाङ्क्षा चानिष्टस्य सा तत्र निवर्त्तते, आकाङ्क्षा चोपस्थितिवृत्तिधर्मान्तरं, यद्वशादुपस्थितस्य विशेषणस्योपस्थितेषु विशेष्येषु क्वचिदेव भवतां विशिष्टबुद्धिरिति चेत्, न, अतिरिक्ताकांक्षायां मानाभावात्, यथायथं व्याप्यपरामर्शादिरन्ततो भवतामाकांक्षानियामक-

त्रिचतुरिन्द्रियाणामसंज्ञिनां च प्रत्येकमन्तर्मुहूर्त्तं, एकेन्द्रियाणां सदोत्पत्तेरेवान्तरं नास्ति इति गाथार्थः ॥५७॥

(मलय०)—तदेवमुक्तं सप्रपञ्चं कालद्वारं, संप्रत्यन्तरद्वारमाह–गर्भजानां तिर्यग्मनुष्याणां, तथा सुराणां देवानां, नारकाणां निरन्तरमुत्पद्यमानानामुत्पादमधिकृत्य विरहोन्तरमुत्कर्षतो द्वादश मुहूर्त्ताः। इयमत्र भावना--गर्भव्युत्क्रान्तानां पंचेन्द्रियतिरश्चां मनुष्याणां चोत्पादमधिकृत्यान्तरं जघन्यतः एकं समयमुत्कर्षतो द्वादश मुहूर्त्ताः। उक्तं च—"गब्भवक्कंतियपंचिंदियतिरिक्खजोणियाणं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं बारस मुहुत्ता। गब्भवक्कंतियमणुस्साणं पुच्छा, गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं बारसमुहुत्ता।" तथा देवानां सामान्यतो देवगतावुत्पद्यमानानामुत्पादमधिकृत्यान्तरं जघन्यतः समयमात्रमुत्कर्षतो द्वादश मुहूर्त्ताः। उक्तं च—"देवगई णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहण्णेणं एगं समयं, उक्कोसेणं बारस मुहुत्ता।" यदि पुनरसुरकुमारादिभेदेन देवगतौ विशेषचिन्ता क्रियते, तदैवमन्तरमवसेयं–असुरकुमारनागकुमारसुवर्णकुमारविद्युत्कुमारवायुकुमाराग्निकुमारस्तनितकुमारोदधिकुमारद्विपकुमारदिक्कुमारव्यन्तरज्योतिष्कसौधर्मकल्पेशानकल्पदेवानां प्रत्येकमुत्पादमधिकृत्य जघन्यत एकं समयमुत्कर्षतश्चतुर्विंशतिमुहूर्त्ताः, सनत्कुमारकल्पदेवानां जघन्यत एकं समयमुत्कर्षतो नव रात्रिंदिवानि विंशतिमुहूर्त्ताः, माहेन्द्रकल्पदेवानामुत्कर्षतो द्वादश रात्रिन्दिवानि दश मुहूर्त्ताः, ब्रह्मलोककल्पदेवानां सार्द्धद्वाविंशतिरात्रिन्दिवानि, लान्तककल्पदेवानां पञ्चचत्वारिंशद्रात्रिन्दिवानि, महाशुक्रकल्पदेवानामशीतिरात्रिन्दिवानि, सहस्रारकल्पदेवानां रात्रिंदिवशतं, आनतकल्पदेवानां संख्येया मासाः, प्राणतकल्पदेवानामपि संख्येया मासाः, केवलमानतकल्पदेवापेक्षया प्रभूता वेदितव्याः, आरणकल्पदेवानां संख्येयानि वर्षाणि, अच्युतकल्पदेवानामपि संख्येयानि वर्षाणि, नवरमारणकल्पदेवापेक्षया प्रभूतानि, अधस्तनग्रैवेयकदेवानां संख्येयानि

प्रतीतिप्रसङ्गः, येन युगपत्प्रवृत्तिनिवृत्ती स्यातामिति नैयायिकः प्रतिविधत्ते न केवलमिति, नच पुरुषे पुरुषत्वाग्रहदशायां दूरत्वादि-दोषविशेषाद् यथा पुरुषे स्थाणुरयमिति स्थाण्वभेदभ्रमबुद्धिस्तथा पुरुषे पुरुषत्वग्रहदशायामपि सा किन्न स्यादिति वाच्यम्, तत्त्व-निश्चयस्यातत्त्वारोपबुद्धौ प्रतिबन्धकत्वेन तदभावः कारणमिति तत्त्वमसाधारणधर्मलक्षणं पुरुषे पुरुषत्वरूपं तच्च स्थाणुभेदात्मक-मिति तन्निश्चयस्य प्रतिबन्धकस्य सत्त्वे कथं स्थाण्वभेदप्रतीतिः पुरुषे स्यादित्याह न चैवमिति, न च क्वचिदिति भेदस्य वैधर्म्य-लक्षणत्वात् पुरुषे स्थाणुभेदः पुरुषत्वं,स्थाण्वभेदः पुरुषत्वाभावः स्थाणुत्वं वा, विरोधिस्वभावत्वात् तदुभयं नैकस्मिन् पुरुषे तत्त्वरूपम् येनैकत्रोभयप्रतीतिस्स्यादित्यर्थः।

नापि सर्वस्यायथार्थत्वाद्विभागः, तद्ग्राहकस्य यथार्थत्वायथार्थत्वाभ्यामुत्तरविरोधात्। तस्मात् किञ्चित् प्रमाणमप्रमाणं च किञ्चिदिति विभाग एव वस्तुगतिः। न चासौ प्रतीतिमवधूय व्यवहारगोचरः, कथंता तु निरू-प्यते केन प्रकारेण प्रामाण्यविशिष्टप्रतीतिरिति तु विचार्यत इत्यर्थः, स्वतः परतो वेति,

सर्वस्य सर्वज्ञानस्य, विभाग इति तथ्यातथ्यविभाग इत्यर्थः। अनुपपन्न इत्यनुषज्यते, निषेधे हेतुमाह–तद्ग्राहकस्येति अयथार्थत्वग्राहकस्य सर्वं ज्ञानमयथार्थमिति ज्ञानस्येत्यर्थः। उत्तरविरोधादिति सर्वज्ञानमयथार्थमिति ज्ञानस्य यथार्थत्वे सर्वान्तर्गतं तदिति सर्वज्ञानमयथार्थमित्यसङ्गतं स्यात्, अयथार्थत्वे च तद्विशेष्यीभूतस्य सर्वज्ञानस्य यथार्थत्वप्रसक्त्योक्तमसङ्गतं स्यादिति भावः। उपसंहरति तस्मादिति, तथा च न सत्त्वासत्त्वाभ्यां नित्यसंदेहादपि बाह्यार्थलोप इति भावः। प्रसङ्गाज्ज्ञानस्य यत्स्वप्रकाशत्वं प्रामा-ण्यस्य च स्वतो ग्राह्यत्वं मीमांसकाद्यभिमतं तस्य प्रतिक्षेपार्थमवतरणिकामाह नैयायिकः नचासाविति,असौ,किञ्चित् प्रमाणमप्रमाणं

जहण्णेणं एगं समयं, उक्कोसेणं असंखेज्जं कालं। सव्वट्ठसिद्धदेवा णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं उक्कोसेणं पलिओवमस्स संखेज्जइभागं।" तथा नारकाणां सामान्यतो नरकगतौ निरन्तरमुत्पद्यमानानामुत्पादमधिकृत्यान्तरं जघन्यत एकं समयमुत्कर्षतो द्वादश मुहूर्त्ताः। उक्तं च–"निरयगई णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयमुक्कोसेणं बारस मुहुत्ता।" इदमन्तरं सामान्यतो नरकगतावुत्पादमधिकृत्य चिन्तितम्। यदि पुनरत्रापि रत्नप्रभानारकादिविशेषचिन्ता क्रियते, तदैवमवसेयं–रत्नप्रभानारकाणामुत्पादमधिकृत्योत्कृष्टमन्तरं चतुर्विंशतिर्मुहूर्त्ताः। शर्कराप्रभानारकाणां सप्त रात्रिन्दिवानि। वालुकाप्रभानारकाणां पञ्चदश दिनानि। पङ्कप्रभानारकाणां मासः। धूमप्रभानारकाणां द्वौ मासौ। तमःप्रभानारकाणां चत्वारो मासाः। तमस्तमःप्रभानारकाणां षण्मासाः। जघन्यतः सर्वत्राऽप्येकः समयः। उक्तं च–"रयणप्पभापुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं चउवीसं मुहुत्ता। सक्करप्पभापुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं उक्कोसेणं सत्त राइंदियाइं। वालुयप्पभापुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं अद्धमासं। पंकप्पभापुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहण्णेणं एगं समयं, उक्कोसेणं मासो। धूमप्पभापुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं दो मासा। तमप्पभापुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहण्णेणं एगं समयं, उक्कोसेणं चत्तारि मासा। अहेसत्तमपुढविनेरइया णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं छम्मासा।" तथा संमूर्च्छिमनराणां संमूर्च्छिममनुष्याणां निरन्तरमुत्पद्यमानानामुत्पादमधिकृत्य सकलेऽपि मनुष्यक्षेत्रेऽन्तरं जघन्यत एकः समयः, उत्कर्षतश्चतुर्विंशतिर्मुहूर्त्ताः। उक्तं च–"संमुच्छिममणुस्सा णं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता? गोयमा! जहन्नेणं एगं समयं, उक्कोसेणं चउवीसं मुहुत्ता।" तथा विकलानां

तात्वात्, या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या, यथा पटे पटत्वप्रकारिका ज्ञाततेति, मुरारिमिश्रमतश्चैवम्, अयं घट इत्यादिज्ञानं नातीन्द्रियम्, तदव्यवहितोत्तरक्षणोपजायमानतद्विषयकानुव्यवसायेन गृह्यमाणत्वात्, तथाहि घटोऽयमित्याद्याकारं प्रत्यक्षज्ञानं घटमहं जानामीत्याद्याकारानुव्यवसायेन पर्वतो वह्निमानित्याद्यनुमितिः पर्वते वह्निमनुमिनोमीत्याद्यनुव्यवसायेन घटादिशाब्दबोधादिरपि घटं शाब्दयामीत्याद्यनुव्यवसायेन च गृह्यते, तद्गतप्रामाण्यमपि तदनुव्यवसायेनैव गृह्यत इति, एवमुपमित्यादिरपि, स्वेन ज्ञानेन स्वस्य ग्रहणवत् स्वगतप्रामाण्यग्रहणं तदा स्यात् यदि स्वेनैव स्वस्य प्रकाशस्स्यात्, अन्यथा प्रामाण्याश्रयस्य धर्मिणो ज्ञानस्य स्वेन ग्रहणाऽभावेप्रामाण्यस्यापि ग्रहणं न स्यात्, धर्मिज्ञानाभावे धर्मज्ञानस्याप्यसम्भवात्, न च स्वेनैव स्वस्यप्रकाशस्सम्भवति तत्र प्रमाणाभावादित्याशयेनाह स्वसंवेदनस्याऽसिद्धेरिति, स्वसंवेदनाऽसिद्ध्या स्वेन ज्ञानेन स्वस्याग्रहणे प्रामाण्यप्रकारेणापि कथं न ग्रहणमित्यतस्तदुक्तेर्भावार्थमाह धर्म्यग्रह इति ज्ञानरूपविशेष्यस्याऽग्रह इत्यर्थः, विशिष्टग्रहेति प्रामाण्यप्रकारकज्ञानविशेष्यकग्रहेत्यर्थः। असाधारण्यमिति ज्ञानत्वहेतोर्ज्ञानरूपपक्षमात्रवृत्तित्वेन सपक्षविपक्षव्यावृत्तत्वादसाधारण्यमिति भावः। अत्र प्रदीपे ज्ञानत्वहेत्वभावाद् दृष्टान्तासिद्धिरपि ज्ञेया, न च ज्ञानप्रदीपोभयस्यापि प्रकाशरूपैकशब्देन व्यवह्रियमाणत्वादुभयसाधारणं प्रकाशत्वमेव हेतूक्रियत इत्यपि वक्तुं शक्यम्, यतो नात्र हेतुः शब्दात्मा व्यधिकरणत्वात्, किन्त्वर्थात्मा, स च भिन्न एव, तत्र चोक्त एव दोष इत्याह शब्दाऽभेदेऽपीति, अप्रयोजकत्वादिति, प्रकाशशब्दवाच्यत्वहेतुरस्तु स्वप्रकाशत्वसाध्यं मास्त्वित्याकारकव्यभिचारशङ्कानिवर्तकतर्काभावादितिभावः। पशुत्वापत्तेरिति तथा च वाणीकीरणपृथिव्यादिः पशुः गोपदवाच्यत्वात् गोवत्, पृथिवीकीरणादिकं वाण्याद्यात्मकं गोपदवाच्यत्वात् वाणीवदित्याद्यनुमानमपि प्रमाणं स्यादिति

(असंख्येय) पुद्गलपरावर्त्तमात्रः कायस्थितिकालः स इतरेषां पृथिव्यादीनां विरहकालः । यः पृथिव्यादीनां असंख्येयलोकाकाशप्रदेशात्मकः कायस्थितिकालः स हरितजीवस्यान्तरकालः । एवमेवान्यत्रापि उत्कृष्टतो नेतव्यः । चशब्दाधिक्याज्जघन्योऽन्तर्मुहूर्त्तिकोऽन्यत्र जघन्यायुर्भवं स्थित्वा तत्रैवोत्पद्यत इति गाथार्थः ॥५८॥

(मलय०)—तदेवं जीवस्थानेष्वनेकजीवाश्रयमुत्पादमधिकृत्यान्तरमुक्तम् । सांप्रतं तेष्वेव जीवस्थानेषु तदेवान्तरमेकजीवाश्रितं प्रतिपिपादयिषुराह—त्रसबादरसाधारणासंज्ञिनपुंसकानां प्रत्येकं यः स्थितिकालः, स यथासंख्यमितरेषां प्रतिपक्षाणां स्थावरसूक्ष्मप्रत्येकशरीरसंज्ञिस्त्रीपुंवेदानामुत्पादमधिकृत्योत्कर्षतो विरहो विरहकालः । इयमत्र भावना—स्थावरभावं परित्यज्य भूयः स्थावरभावं प्रतिपद्यमानानामन्तरं जघन्यन्तोन्तर्मुहूर्त्तं, उत्कर्षतस्त्रसकायस्थितिकालः, स चोत्कर्षतः कतिपयवर्षाधिकसागरोपमसहस्रद्वयमानः । तथा सूक्ष्मभावं परित्यज्यान्यत्रोत्पद्य भूयः सूक्ष्मभावं प्रतिपद्यमानानामन्तरं जघन्यन्तोर्मुहूर्त्तमुत्कर्षतो बादरकायस्थितिकालः, स चोत्कर्षतः सप्ततिसागरोपमकोटीकोटीमानः । तथा प्रत्येकशरीरत्वं परित्यज्यान्यत्रोत्पद्य भूयः कालान्तरे प्रत्येकशरीरत्वं प्रतिपद्यमानानां जघन्यतोन्तरमन्तर्मुहूर्त्तं, उत्कर्षतः साधारणकायस्थितिकालः, स चोत्कर्षतोऽर्द्धतृतीयपुद्गलपरावर्त्तमानः । तथा संज्ञिनां संज्ञित्वं परित्यज्यान्यत्रोत्पद्य भूयः संज्ञित्वमागच्छतामन्तरं जघन्यतोन्तर्मुहूर्त्तं, उत्कर्षतोऽसंज्ञिकायस्थितिकालः, स चोत्कर्षतोऽसंख्येयपुद्गपरावर्त्तमानः । असंज्ञी हि संज्ञिव्यतिरिक्तः सर्वोऽप्येकेन्द्रियादिरुच्यते, ततो वनस्पतीनामुत्कर्षतो यः कायस्थितिकालोऽसंख्येयपुद्गलपरावर्त्तप्रमाणः सोऽप्यसंज्ञिनः काल इत्यसंज्ञिकायस्थितिकालोऽसंख्येयपुद्गलपरावर्त्तमानः । तथा पुरुषवेदं स्त्रीवेदं वा परित्यज्यान्यत्र वेदान्तरे गत्वा भूयः पुरुषवेदं स्त्रीवेदं वा प्रतिपद्यमानानां पुरुषवेदस्य स्त्रीवेदस्य चान्तरं जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतो द्वयोरप्युत्कृष्टो नपुंसकवेदकायस्थितिकालोऽसंख्ये-

तेन रूपेण प्रदीपजातीयं तेजोन्तरमेव तद्भिन्नज्ञानजातीयप्रदीपज्ञानापेक्षव्यवहारगोचरत्वात्प्रदीपदृष्टान्तस्योक्तसाध्यविकलत्वेन दृष्टान्तासिद्धिस्स्यादित्याशयेनाह ज्ञानजातीयापेक्षत्वादिति। अथाद्यपक्ष एवाद्रियते, न च सत्त्वादिना साजात्यं विवक्षितं, किन्तु तेजस्त्वादिनाऽवान्तरसामान्येनैवेति नोक्तदोष इत्युच्यते तदापि स्वत्वं न पक्षदृष्टान्तोभयानुगतमिति पक्षे साध्यसङ्गमनार्थं स्वपदेन यदि ज्ञानं साजात्यं च ज्ञानत्वेन तदा तद्घटितसाध्यं न दृष्टान्ते इति दृष्टान्तासिद्धिरेव, यदि च दृष्टान्ते साध्यसङ्गमनार्थं तेजस्तदा तद्घटितसाध्यं ज्ञानरूपपक्षे बाधितमित्याह तेजोजातीयेति, ननु बुद्धिस्थत्वेन रूपेण स्वत्वमनुगतमेवाभ्युपगम्यते इति पक्षे यदा साध्यसङ्गमनं तदा स्वपदेन ज्ञानस्योपादानं, यदा च दृष्टान्ते तत्तदा तेजस इति नोक्तदोष इत्युक्तौ दोषान्तरमाह ज्ञानव्यवहारस्यापीति, व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्येवेष्टसाधनत्वादिज्ञानस्यापि कारणत्वेन स्वपदग्राह्यं यज्ज्ञानं तद्भिन्नं ज्ञानत्वेन तज्जातीयमिष्टसाधनताज्ञानं तदपेक्षव्यवहारगोचरत्वस्यैव तज्ज्ञानपक्षे सत्त्वेनोक्तसाध्यस्य बाध एवेतिभावः। योगिनस्तत्प्रत्यक्षस्य च तत्र स्वविषयकप्रत्यक्षत्वस्य चासिद्ध्या दृष्टान्तासिद्धिर्नेत्यावेदयितुमाह योगीति, तथा स्वविषयकम्, ननु भवन्मते नेश्वरज्ञानं सिद्धम्, अस्मन्मते च मैत्रज्ञानं स्वविषयकं न सिद्धमित्युभयमतसिद्धत्वाभावान्न दृष्टान्तत्वं तयोरित्यत आह उभयसिद्धस्येति, नैयायिकस्समाधत्ते—

न, अप्रयोजकत्वात्, इन्द्रियप्रत्यासत्तिमन्तरेण प्रत्यक्षत्वासम्भवात्, स्वत्वस्याननुगतत्वाच्चेति। न च घटं जानामीत्यादिकमध्यक्षमेव स्वसंवेदनं विनानुपपद्यमानमत्र प्रमाणं, यदि हि नयनादिसन्निकर्षादुपजायमानं घटं जानामीत्याद्याकारं घटज्ञानं घटज्ञानान्तराग्राहकं स्वात्मानं न गृह्णीयात् न गृह्णीयादेवात्मनो घटज्ञा-

येयराणं च' एवं पूर्वोक्तप्रकारेण य एकस्य स्थितिकालः, स इतरस्य विरहकाल इत्येवंरूपेण हरितानां वनस्पतीनां, इतरेषामवनस्पतीनां विरहो वाच्यः। इयमत्र भावना—वनस्पतित्वं परित्यज्यान्यत्र पृथिव्यादिषु गत्वा भूयो वनस्पतित्वं प्रतिपद्यमानानामन्तरं जघन्यतोऽन्तर्मुहूर्त्तं, उत्कर्षत उत्कृष्टोऽवनस्पतिकायस्थितिकालोऽसंख्येयलोकाकाशप्रदेशराशिप्रतिसमयापहारनिर्वृत्तासंख्येयोत्सर्पिण्यवसर्पिणीरूपः। तथा इतरेषामवनस्पतीनामवनस्पतिभावं परित्यज्य वनस्पतिमध्ये गत्वा भूयोऽप्यवनस्पतित्वं प्रतिपद्यमानानां जघन्यतोऽन्तरमन्तर्मुहूर्त्तं, उत्कर्षत उत्कृष्टो वनस्पतिकालोऽसंख्येयपुद्गलपरावर्त्तरूपः। 'हरियेयराणं च' इत्यत्र चशब्दोऽनुक्तसमुच्चयार्थः, तेन सर्वत्रापि जघन्यमन्तरमन्तर्मुहूर्त्तमवसेयं तच्च तथैव प्रत्येकं भावितम्। एवं पञ्चेन्द्रियाणामपञ्चेन्द्रियकायस्थितिकालमपञ्चेन्द्रियाणां पञ्चेन्द्रियकायस्थितिकालं, तथा मनुष्याणाममनुष्यकायस्थितिकालममनुष्याणां मनुष्यकायस्थितिकालं ग्रन्थपौर्वापर्यपर्यालोचनया सम्यक् परिभाव्योत्कृष्टं विरहकालं स्वयमेवाभिदध्यात्। जघन्यं सर्वत्राप्यन्तर्मुहूर्त्तम् ॥५८॥

**आईसाणं अमरस्स अंतरं हीणयं मुहुत्तंतो। आसहसारे अच्चुयणुत्तर दिण मास वास नव ॥५९॥**

(स्वो०)—भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानेभ्यश्च्युतोऽमरोऽन्तर्मुहूर्त्तेन तत्रैवोत्पद्यते, सनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकशुक्रसहस्रारेभ्यश्च्युतोऽमरः नवभिर्दिनैस्तत्रैवोत्पद्यते। आनतप्राणतारणाच्युतेभ्यः च्युतोऽमरो नवभिर्मासैः तत्रैवोत्पद्यते। ग्रैवेयकविजयादिभ्यश्च्युतोऽमरो नवभिर्वर्षैः तत्रैवोत्पद्यते। यतो मनःपर्याप्त्या पर्याप्तस्याविरतसम्यग्दृष्टेः तत्प्रभावादेव किञ्चिद्विशुद्धाध्यवसायस्येशानगमनं, नवभिर्दिनैः पुनर्मनसो जरठत्वादतिविशुद्धाध्यवसायस्याविरतस्य सहस्रारगमनम्, नवमासिकस्यास्मादेवाच्युतगमनाद्देशविरतिरिति। पञ्चोत्तरविमानगमनं तु द्रव्यभावचरणप्राप्तौ नववर्षग्रहणादवसीयत इति गाथार्थः ॥५९॥

सिद्धसाधनं, नह्यनुपलब्धउपलब्धो भवति, न चैवं सत्यर्थोऽपि नोपलभ्येत, न ह्युपलम्भप्रतीतिरर्थवेदनमपि तूपलम्भनिष्पत्तिः।

अप्रत्यक्षोपलम्भस्येति, अर्थसिद्धौ स्वरूपतोऽर्थज्ञानमुपयुज्यते, नतु ज्ञातं, मानाभावादित्याशयेन नैयायिकस्समाधत्ते नेति, दृष्टेः अर्थदृष्टिरित्यत्र दृष्टिशब्दवाच्यायाः, यदुपलम्भस्य नियमेन प्रत्यक्षं तस्यैव निष्पत्तिरित्यभ्युपगमेऽनागतो योऽर्थोपलम्भस्तत्प्रत्यक्षस्यार्थोपलम्भनिष्पत्तौ कारणत्वमायातमित्यर्थोपलम्भनिष्पत्तेः पूर्वमेव तस्य नियमेन सत्त्वप्रसङ्ग इत्याशयेनाह आद्य इति, ननु भावी य उपलम्भस्तस्य प्रत्यक्षमपि भाव्येव, भाविना प्रत्यक्षेण भाविन उपलम्भस्य वेदनं ततः पूर्वं कथं न स्यादित्याशङ्कयामाह नचाऽविद्यमानेनेति, नचाऽविद्यमानेन प्रत्यक्षेणाऽविद्यमानस्योपलम्भस्य वेदनं सम्भवति पूर्वं द्वयोरप्यसत्त्वादित्यर्थः। द्वितीयेत्विति, अर्थोपलम्भस्याऽप्रत्यक्षेऽर्थोपलब्धिर्नप्रतीयेतेत्यऽर्थके द्वितीयपक्षे त्वित्यर्थः, सिद्धसाधनमिति स्वसिद्धान्तेन सह न विरोधः, नैयायिकेनापि तथाभ्युपगमादितिभावः। तत्र हेतुमाह—न ह्यनुपलब्ध उपलब्धो भवतीति, हि यतः, न्यायमतेप्यनुपलब्धः उपलब्ध्यविषयः अर्थोपलम्भः उपलब्धः उपलब्धिविषयो न भवतीत्यर्थः। अत्र न ह्यनुपलब्धोपलम्भ उपलब्धीभवतीति बौद्धाधिकारे पाठः, नच घटाद्यात्मकार्थज्ञानस्याप्रत्यक्षे घटाद्यात्मकार्थोपि न ज्ञायेते वाच्यम्, अर्थज्ञानतज्ज्ञानयोर्भेदेनार्थज्ञानज्ञानाभावेपि निष्पत्स्यतएवार्थज्ञानं, तेन च स्वरूपसता स्यादेवार्थसिद्धिरित्याशयेनाह न चैवं सत्यर्थोपीति, स्वप्रकाशवादी शङ्कते—

उपलम्भादृष्टाद्युपलम्भनिष्पत्तिरित्येव व्यवहारः कुत इति चेत्, माभूत्, नह्यव्यवहारादेव निष्पन्नस्य वस्तुनो निवृत्तिः, तथा च तन्निबन्धनोऽर्थव्यवहारो दुर्वार इति, न चानवस्था, विषयान्तरसञ्चारादिना प्रति-

**थावरकालुक्कोसो सव्वट्ठे बीयओ न उववाओ। दो अयरा विजयाइसु नरएसु वि याणुमाणेणं ॥६०॥**

(स्वो०)—सर्वस्थानेभ्यश्च्युतस्य उत्कृष्टमन्तरं जीवस्य व्यावहारिकस्थावरकायस्थितिकालोऽसंख्येयाः पुद्गलपरावर्त्ताः, एतदेवापवदति, सर्वार्थसिद्धौ नास्त्यन्तरं, द्वितीयोत्पत्तेरभावात्। विजयवैजयन्तजयन्तापराजितेषूत्कृष्टता द्विसागरोपमस्थितिकवैमानिकेषु स्थित्वा तेष्वेवोत्पद्यते, नरकेष्वप्यनेनैवानुमानेन जघन्यमुत्कृष्टमन्तरमवगन्तव्यमिति गाथार्थः ॥६०॥

(मलय०)—संप्रत्येतेष्वेव स्थानेषूत्कृष्टमन्तरमाह–नवमग्रैवेयकदेवान् यावत्सर्वत्रापि भूयः स्वदेवनिकाये उत्पद्यमानस्योत्कृष्टमन्तरं स्थावरकालः, आवलिकाऽसंख्येयभागवर्त्तिसमयराशिप्रमाणाऽसंख्येयपुद्गलपरावर्त्तमानः। तथा सर्वार्थे सर्वार्थसिद्धमहाविमाने द्वितीय उत्पादो न भवति, एकावतारत्वात्सर्वार्थसिद्धमहाविमानवासिनां देवानां ततस्तत्र जघन्यमुत्कृष्टं चान्तरं न किमपि भवतीति नोच्यते। तथा विजयादिषु विजयवैजयन्तजयन्तापराजितेषूत्कृष्टमन्तरं द्वे सागरोपमे, विजयादिभ्यश्च्युतो भूयोऽपि यदि विजयादिषूत्पद्यते, तत उत्कर्षतो मनुष्यसौधर्मादिभवेषु सागरोपमद्वयं गमयित्वोत्पद्यते। जीवाभिगमे तु भवनवासिन आरभ्यासहस्राराज्जघन्यमन्तरमन्तर्मुहूर्त्तं, आनतकल्पादारभ्यासर्वार्थसिद्धमहाविमानवर्जशेषविजयादिविमानचतुष्टयाद्वर्षपृथक्त्वं, उत्कर्षत आनवमग्रैवेयकात्सर्वत्र वनस्पतिकालो, विजयादिषु तु संख्येयानि सागरोपमाणि। तथा च तद्ग्रन्थः–"भवणवासिदेवपुरिसाणं जाव सहस्सारो, ताव जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं वणस्सइकालो। आणयदेवपुरिसा णं भंते! केवइयं कालं अंतरं होइ? गोयमा! जहन्नेणं वासपुहुत्तं, उक्कोसेणं वणस्सइकालो। एवं गेवेज्जदेवपुरिसस्सवि अणुत्तरोववाइयदेवपुरिसस्स जहन्नेणं वासपुहुत्तं, उक्कोसेणं संखिज्जाइं सागरोवमाइं इति।" तत्त्वं पुनः केवलिनो विदन्ति। तथा नरकेष्वपि अनेनैवानुमानेन प्रकारेण जघन्यमुत्कृष्टं चान्तरं विजानीहि। तत्र जघन्यं सर्वास्वपि पृथिवीषु प्रत्येकमन्तर्मु-

त्वेनागृहीतः स्वकार्यं कुर्यादेवेत्युत्तानार्थः। छिदावदिति तु दृष्टान्तमात्रं, ज्ञानं न ज्ञानान्तरकर्म तज्जातीयक्रियात्वात्, या यज्जातीयक्रिया नासौ तज्जातीयक्रियाकर्म यथा च्छिदा च्छिदान्तरस्येति तु न्यायविप्लवः।

यथेति, ताद्रूप्यस्य निश्चयत्वस्य, तथात्वेन उपलम्भत्वेन, स्वकार्यम् अर्थग्रहणरूपम्, दृष्टान्तमात्रमिति, तथाचाऽप्रमाणत्वान्न प्रकृतसाधनोपयोगीति भावः। तज्जातीयेति ज्ञानान्तरजातीयेत्यर्थः, न्यायविप्लवः न्यायाभासः, तत्र हेतुभूतं बाधदोषमाह—

ज्ञाने ज्ञानान्तरकर्मत्वाभावज्ञानस्य ज्ञानान्तरस्य विषयताया अवर्जनीयत्वात्। किञ्च छिदावत् सर्वथा सजातीयाकर्मत्वे साध्ये बाधः, पुरुषान्तरज्ञानस्य पुरुषान्तरज्ञानवेद्यत्वात्, स्वयमपि स्मृत्यादिगोचरत्वाच्च। स्वकर्मत्वे साध्ये दृष्टान्तस्य साध्यविकलतया हेतोर्विरुद्धत्वमिति। अथ व्यवहारस्य व्यवहर्त्तव्यज्ञानसाध्यत्वाद् व्यवहारानुरोधात् तदेव ज्ञानं तद्विषयकं कल्प्यते, ज्ञानान्तरकल्पने गौरवात्, तदेव च जानामीत्याद्याकारं, तच्च बाह्ये यथायथं प्रत्यक्षादिरूपमात्मनि च प्रत्यक्षमेव।

ज्ञाने इति, ज्ञानविशेष्यकज्ञानान्तरकर्मत्वाभावप्रकारकानुमित्यात्मकज्ञानस्य पक्षीभूतज्ञानव्यतिरिक्तस्य विषयत्वलक्षणकर्मतायाः पक्षीभूतज्ञाने सत्त्वादितिभावः। छिदा न कस्याश्चिच्छिदायाः कर्म तथा ज्ञानं न कस्यचिदपि ज्ञानस्य कर्म, तथा च ज्ञानत्वेन स्वसंजातीयज्ञानान्तरस्यापि न कर्मेतिपर्यवसितोर्थ इति साधनं यद्यभिमतं तदापि बाधदोष इत्याह किञ्चेति, बाधदोषे हेतुमाह— पुरुषान्तरज्ञानस्येति चैत्रमैत्रयोर्मध्ये मैत्रवर्त्तिज्ञानस्येत्यर्थः, पुरुषान्तरज्ञानवेद्यत्वादिति, चैत्रवर्त्तिना वक्तृत्वचेष्टावत्त्वादि लिङ्गज्ञानोत्तरजायमानेनायं ज्ञानवानित्याकारानुमित्यात्मकज्ञानेन विषयीकरणादित्यर्थः। ननु ज्ञानं स्वसमानाधिकरणज्ञानान्तर-

पमासंख्येयभागः। इदमुक्तं भवति-इह सासादनभावमनुभूय भूयोऽपि यदि सासादनभावं भजते, तर्हि नियमाज्जघन्यतोऽपि पल्योपमासंख्येयभागेऽतिक्रान्ते सति,नार्वाक्। कथमेतदवसेयम्? इति चेदुच्यते-इह सासादनभावमासादयति नियमादौपशमिके सम्यक्त्वे वर्त्तमानो नान्यथा, सासादनभावानुभावतश्च मिथ्यात्वं गतोऽवश्यं भूयः सम्यक्त्वमासादयति, षड्विंशतिसत्कर्मा सन् करणत्रयपूर्वमौपशमिकं नान्यं(न्यः), षड्विंशतिसत्कर्मा च भवति मिश्रसम्यक्त्वपुञ्जयोरुद्वलितयोः, तदुद्वलना च पल्योपमासंख्येयभागरूपेण कालेन नान्यथा, ततो भूयः सासादनभावप्रतिपत्तेरन्तरं जघन्यतोऽपि पल्योपमासंख्येयभागः। तथा शेषकाणां मिथ्यादृष्टिसम्यग्मिथ्यादृष्ट्यविरतदेशविरतप्रमत्ताप्रमत्तोपशमश्रेणिगतापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहरूपाणां जघन्यमन्तरमन्तर्मुहूर्तम्। तथाहि-मिथ्यादृष्ट्यादयः स्वं स्वं गुणस्थानं परित्यज्य गुणस्थानकान्तरे गत्वा भूयोऽपि स्वं स्वं गुणस्थानकं जघन्यतोऽन्तर्मुहूर्त्ते गते सति प्रतिपद्यन्ते उपशमश्रेण्यन्तर्गतानामपूर्वकरणादीनां कथमन्तर्मुहूर्त्तमात्रमन्तरम्? इति चेदुच्यते-इह सकलोऽप्युपशमश्रेणिकालोऽन्तर्मुहूर्त्तप्रमाणः, उपशमश्रेणिप्रतिपातानन्तरं च भूयोऽपि कश्चिदन्तर्मुहूर्तानन्तरमुपशमश्रेणिं प्रतिपद्यते, अन्तर्मुहूर्त्तस्य वाऽसंख्येया भेदाः, ततो विवक्षितादपूर्वकरणादिगुणस्थानकादनन्तरं शेषेष्वनिवृत्तिबादरसूक्ष्मसंपरायादिगुणस्थानकेषु प्रत्येकमन्तर्मुहूर्त्तमन्तर्मुहूर्त्तमवस्थानेऽपि श्रेणिप्रतिपातानन्तरमन्तर्मुहूर्त्तेऽपि च गते भूयः प्रत्येकमान्तर्मौहूर्त्तिकानि त्रीणि करणान्यपि यथायोगं कृत्वा विवक्षितमपूर्वकरणादिकं गुणस्थानं प्रतिपद्यमानस्य यदि परिभाव्यते अन्तरं, तदा तदन्तर्मुहूर्त्तमात्रमेव लभ्यते, नाधिकमिति। अथ कस्मादिहापूर्वकरणादय उपशमश्रेण्यन्तर्गता विवक्षिताः? उच्यते-क्षपकश्रेण्यन्तर्गतानां प्रतिपाताभावतो भूयः प्रतिपत्त्यभावादन्तरासम्भवात्, अत एव क्षीणमोहसयोगिकेवल्ययोगिकेवलिनामन्तरं न चिन्तितमसम्भवात्। न चैकवेलमुपशमश्रेणिं प्रतिपद्य द्वितीयवेलायां क्षपकश्रेणिमारभते,

अथास्त्विति, मनोयोगेति आत्ममनस्संयोगेत्यर्थः। तत् अर्थज्ञानम्, स्वात्मनि अर्थज्ञानांशे, अर्थज्ञानरूपविषयस्य स्वोत्पत्तेः पूर्वमभावेपि समवायस्य नित्यत्वेन मनस्संयुक्तात्मसमवायस्य पूर्वं सद्भावात्तस्य सन्निकर्षविधया तत्प्रत्यक्षे कारणत्वात्स्वसंवेदनं भविष्यत्येवेति परस्य प्रश्नोत्तरमाशङ्कते मनस्संयुक्तेति, प्रत्यक्षविषयत्वेनाभिमतस्य समवेतस्य ज्ञानस्य पूर्वमभावेन तत्कालावच्छेदेन तदवृत्तेरपि मनस्संयुक्तात्मसमवायस्य सन्निकर्षस्य कारणत्वे व्यवहितपूर्वोत्तरक्षणभाविज्ञानस्यापि ग्रहणप्रसङ्ग इति नोक्तोत्तरं युक्तियुक्तमित्याशयेन तटस्थस्समाधत्ते, न, प्रत्यक्षेति, अथास्त्वित्यादिशङ्कां गुरुः प्रतिविधत्ते तद्विषयत्वे इति, ज्ञानमात्रस्य स्ववृत्तिज्ञानीयविषयतायां ज्ञानानपेक्षत्वात् स्वांशे प्रत्यक्षत्वमेवेति स्वविषयकज्ञानं प्रत्यक्षमेव ज्ञानाऽकारणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणसङ्गतेरिति भावः, तदेव विवृणोति–यज्ज्ञानमिति, स्वविषयत्वं ज्ञानत्वमिव सर्वज्ञानानुगतत्वेन स्वाभाविकं, यच्चानुगतं तदनुगतकारणप्रयोज्यम्, अनुगतकारणं चात्र ज्ञानसामान्योत्पादकसामग्र्येवेति न तत्तदरिक्तसामग्रीप्रयोज्यं, कादाचित्कस्यैव तथात्वादित्याशयेनाह स्वविषयत्वं चेति, आगन्तुकस्यैव कादाचित्कस्यैव, तथात्वात् ज्ञानसामान्योत्पादकसामग्र्यतिरिक्तसामग्रीनियम्यत्वात्।

तादृसं तत्तद्विषयत्वं तु न तवानुगतकारणनियम्यम्, अनुमित्यादिसाधारणतत्तद्विषयत्वे तदभावात्, अस्माकं तु सम्भवेदपि एकशक्तिमत्त्वेन हेतुत्वोपगमादिति। अत्राहुः–प्रत्यक्षत्वं हि न ज्ञानानपेक्षविषयताशालित्वं, तदप्रतिसन्धानेऽपि साक्षात्करोमीति प्रत्ययात्, परन्तु जातिः, जन्ये च ज्ञाने तन्नियामकमिन्द्रियसन्निकर्षजन्यत्वमेव, जातेश्च नांशिकत्वमतो नानुमित्यादेरात्मनि च प्रत्यक्षत्वम्, अत एव प्रत्यभिज्ञापि न ग्रहण-

(मलय०)—तदेवमुक्तमेकजीवाश्रयं गुणस्थानेष्वन्तरम्। साम्प्रतं तदेवानेकजीवाश्रयमाह—उपशमकानामुपशमश्रेण्यन्तर्गतानामपूर्वकरणादीनामुपशान्तमोहान्तानां नानाजीवेषु नानाजीवविषयमन्तरमुत्कृष्टं वर्षपृथक्त्वं भवति। किमुक्तं भवति ? उपशमकेषु जगत्येकदा सर्वथा व्यवच्छिन्नेषु भूयोऽप्युपशमका उत्कर्षतो वर्षपृथक्त्वे गते सति प्राप्यन्ते इति। तथा क्षपकाणां क्षपकश्रेण्यन्तर्गतानामपूर्वकरणादीनां क्षीणमोहपर्यन्तानां उपलक्षणमेतत् अयोगिकेवलिनां च, नानाजीवापेक्षया उत्कृष्टमन्तरं षण्मासाः, षण्मासान् यावत् सकलेऽपि जीवलोके कदाचित्क्षपकाः क्षीणमोहा अयोगिकेवलिनो वा न प्राप्यन्ते इत्यर्थः। तथा सासादनानां मिश्राणां प्रत्येकमुत्कृष्टमन्तरं पल्योपमासंख्येयभागं कदाचित्सर्वस्मिन्नपि लोके पल्योपमासंख्येयभागमात्रं यावत् सासादना मिश्रा वा न प्राप्यन्ते इत्यर्थः। मिथ्यादृष्टि-अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतसयोगिकेवलिनां सदैव लोके सम्भवादन्तरं न भवतीति न प्रतिपादितम् ॥६२॥

**सम्माई तिन्नि गुणा कमसो सगचोद्दपन्नरदिणाणि। छम्मास अजोगित्तं न कोवि पडिवज्जए सययं॥**

(स्वो०)—अविरतत्वगुणं प्राक्प्रतिपत्तेरुत्कृष्टतोऽन्यः सप्त दिनानि यावत् न कश्चित्प्रतिपद्यते, देशविरतिगुणं चतुर्दशदिनानि सर्वविरतिगुणं पञ्चदशदिनानि यावन्न प्रतिपद्यते, तत्परतः प्रतिपद्यत एव। अयोगित्वं तु षड्मासान्यावत् 'सन्ततम्' अव्यवच्छिन्नं इयन्तं कालं न कश्चित्प्रतिपद्यते, सततमनवरतं वाऽतीतानागतवर्त्तमानकालेष्वनेन न्यायेनान्तरं भवति, मिथ्यादृष्टेस्तु पल्योपमासंख्येयभागमात्रं उत्कृष्टतोऽन्तरं, यतः सास्वादनेनोत्तरकाले मिथ्यादृष्टिना भाव्यम्, तस्यान्यगुणाभावादिति भावः। एतच्च सुज्ञानमेव। जघन्यतः समयमेकं स्थित्वा सर्वेऽपि गुणा भूयोऽपि प्रादुर्भवन्ति इति गाथार्थः ॥६३॥

(मलय०)—साम्प्रतमविरतसम्यग्दृष्ट्यादिगुणस्थानकेषु प्रतिपत्तिमधिकृत्यान्तरं निरूपयति—सम्यक्त्वादीनि अविरतसम्यग्दृष्ट्या-

स्वग्राहकेण वेति विकल्पद्वयमध्यादाद्यविकल्पं प्रतिक्षिप्य प्रभाकरमतं निरस्तम्, अधुना भट्टमुरारिमिश्रमतनिरसनाय द्वितीयविकल्पं प्रतिक्षिपति—नापि स्वग्राहकेणेति, प्रामाण्यविशिष्टप्रतीतिरित्यनुषञ्जनीयम्, विवेचनानुपपत्तेरिति, संवादिप्रवृत्तिजनकत्वादिलिङ्गज्ञानरूपविशेषदर्शनं विना प्रामाण्याश्रयज्ञानग्राहकमात्रेणेदं ज्ञानं प्रमाणमेवेति निश्चयानुपपत्तेरित्यर्थः। तदेवाह प्रमाणमेवेति, घटज्ञानस्य स्वग्राहकेण ग्रहणे तद्गतं सामान्यतः प्रामाण्यं गृह्यत एव प्रामाण्यग्रहविषयत्वरूपविशेषदर्शनात्तु प्रमाणमेवेत्यवधारणात्मकविवेचनं स्यादेवेत्याशङ्कते—

अथ प्रामाण्यग्रहविषयत्वरूपविशेषदर्शनात् तद्भविष्यति, मैवम्, अप्रमाणेऽपि प्रामाण्याभिमानात्, यद्यप्रमायां न प्रामाण्यग्रहस्तदाऽप्रामाण्यसंशय इव प्रामाण्यनिश्चयेऽपि भ्रमान्निष्कम्पा प्रवृत्तिर्न स्यात्, प्रामाण्यग्रहेण भ्रमासंस्पर्शात्, ततो यदि प्रामाण्यमापाततः स्फुरेदपि तथापि नियमहेतोरभावात् प्रमाणमेवेदमिति निश्चयः कुतः, स च मृग्यते पारलौकिकव्यवहाराङ्गत्वात्,

अथेति, शुक्तौ यदिदं रजतमिति भ्रमात्मकज्ञानं तद्विशेष्यकप्रामाण्यप्रकारकमिदं रजतमितिज्ञानं प्रमाणमित्याकारकं भ्रमात्मकज्ञानमपि प्रामाण्यग्रहरूपमिति तद्विषयत्वस्येदं रजतमिति भ्रमात्मकज्ञाने सत्त्वेन तत्र च प्रामाण्याभावेन तस्य प्रामाण्यव्याप्यत्वाभावान्न विशेषदर्शनत्वमित्याशयेनोत्तरयति मैवमिति, भ्रमे इदं प्रमाणमिति प्रामाण्यग्रहाभावेन प्रामाण्यग्रहविषयत्वस्य प्रमायामेव सत्त्वेन प्रामाण्यव्याप्यस्य तस्य दर्शनात्प्रामाण्यनिश्चयो भविष्यत्येवेति यदि ब्रूयात्तदा भ्रमज्ञाने इदं ज्ञानं प्रमा न वेति प्रामाण्यसंशयाद्यथा न निष्कम्पप्रवृत्तिस्तथा भ्रमे इदं ज्ञानं प्रमेति भ्रमात्मकप्रामाण्यनिश्चयात्तत्कालेऽपि निष्कम्पप्रवृत्तिर्न स्यात्, भ्रमविशेष्यक-

उक्तम्—"लोभाणू वेयंतो जो खलु उवसामगो व खवगो वा"इत्यादि, उपशान्तकषायस्य तु यदा सम्यक्त्वचारित्रे औपशमिके भवतः, तदा चत्वारो भावाः, यदा तु क्षायिकसम्यक्त्वं औपशमिकचारित्रं प्रतिपद्यते प्रतिपातियथाख्यातं, तदा पञ्च भावाः, क्षीणकषायस्य तु पूर्वोक्तास्त्रयः क्षायिकसम्यक्त्वचारित्रभावयुक्ताः,क्षपकापूर्वकरणादीनां तु क्षायिकसम्यक्त्वभावयुक्ताश्चत्वारः, औपशमिकभावाभावादिति। शेषगुणजीवानां भावत्रयं भवति। मिथ्यादृष्टेरौदयिकपारिणामिकौ सम्पूर्णौ भवतः, क्षायोपशमिकस्य तु अज्ञानत्रयं चक्षुरचक्षुदर्शने, दानलाभभोगोपभोगवीर्यलब्धयः, एते दश भेदा भवन्ति, न शेषाः। सास्वादनस्यापि अभव्यत्वमिथ्यात्वे विहाय शेषं तथैव। सम्यग्मिथ्यादृष्टेस्तु मिथ्यात्वं सम्यग्मिथ्यात्वभावोपगतं उदये भवति, नान्यो विशेषः। सयोग्ययोगिनोरपि भावत्रयं क्षायोपशमिकौपशमिकयोरभावादिति, तत्र औदयिके मनुष्यगत्यसिद्धत्वे शुक्ललेश्याप्याद्यस्य पारिणामिके जीवभव्यत्वे, क्षायिके नवापि संपूर्णाः, सम्यक्त्वचारित्रे केवलज्ञानदर्शने पञ्च लब्धय इति। तुशब्दाज्जीवस्थानेष्वपि यदेव मिथ्यादृष्टेर्भावत्रयं तदेव द्वादशस्थानेषु स्त्रीपुरुषवेदशुभलेश्यात्रयदेवनरकमनुष्यगतिविभङ्गवर्जं यथासम्भवं चक्षुर्दर्शनवर्जं च तथैव मन्तव्यम्। संज्ञ्यपर्याप्तकस्तु मिथ्यादृष्टिसास्वादनाविरतत्वभावयुक्तो वक्तव्यः, संज्ञिपर्याप्तकस्तु सर्वगुणस्थानान्तर्गत एवाभिहितो नोच्यत इति गाथार्थः ॥६४॥

(मलय०)—तदेवमुक्तमन्तरम्। सम्प्रति भागद्वारावसरः, तच्चाल्पबहुत्वद्वारान्तर्गतमिति न पृथगुच्यते। सांप्रतं भावद्वारमाह—सम्यक्त्वादिषु अविरतसम्यग्दृष्ट्यादिष्वप्रमत्तसंयतपर्यन्तेषु चतुर्षु गुणस्थानकेषु त्रयश्चत्वारो वा भावा भवन्ति। तत्र त्रय औदयिकपारिणामिकक्षायोपशमिकरूपाः, चतुर्थस्त्वौपशमिकः क्षायिको वा। तत्रौदयिको यथायोगं मनुष्यत्वादिका गतिर्वेदः कषाया आहारकत्व (अविरतत्व ) मित्यादिरूपः, पारिणामिको भव्यत्वजीवत्वे, क्षायोपशमिको मतिज्ञानादिज्ञानं चक्षुर्दर्शनादिदर्शनं वेदकसम्यक्त्वं दाना-

दस्तु स्वतः, मास्तु प्रामाण्यनिश्चयः स्वतः, तावतापि नस्समीहितसिद्धिस्स्यादेवेत्याशयेन मीमांसकः शङ्कते—स्फुरणमात्रमपीति, नापि स्वग्राहकेणेत्यादिप्रबन्धेन भट्टमुरारिमिश्रोभयमतसाधारणखण्डनं कृतम्, अधुना भट्टमतं प्रतिक्षेप्तुमुपदर्शयति घटो ज्ञात इत्यारभ्य भाक्त्या इत्यन्तेन, घटांशे संयोगलक्षणलौकिकप्रत्यासत्त्या ज्ञानांशे च स्वसंयुक्तमनस्संयुक्तात्मसमवेतघटमहं जानामीत्याकारकज्ञानलक्षणालौकिकप्रत्यासत्त्योपजायमानं विषयतासम्बन्धेन ज्ञानप्रकारकं घटविशेष्यकं घटो ज्ञात इतिचाक्षुषज्ञानमिति नैयायिकमते उक्तज्ञानं घटेन सह घटज्ञानस्य विषयत्वसम्बन्धरूपवैशिष्ट्यमवगाहते, तद्वन्न मीमांसकमते तत्तथा, तन्मते अलौकिकप्रत्यासत्तेः स्वप्रत्यक्षजनकत्वानभ्युपगमात्, किन्तु ज्ञातताप्रकारकं घटविशेष्यकं चाक्षुषज्ञानमिति नोक्तज्ञानमुक्तवैशिष्ट्यमवगाहते इत्याशयेनाह—

घटो ज्ञात इति प्रत्यक्षं न ज्ञानस्य वैशिष्ट्यमवगाहते, नयनादेरात्मगुणाग्राहकत्वान्मनसश्च बहिरस्वातन्त्र्यात्, अतीन्द्रियत्वाच्च ज्ञानस्य, परन्त्वतिरिक्ताया एव ज्ञाततायाः, सा च विशेषणप्रकारिका विशेष्यवृत्तिः रूपं घटत्वेन ज्ञात इत्यनुभवात्, जन्यते च समानप्रकारेण स्वाश्रयविशेष्यकेण ज्ञानेन, तया चानुमीयमानं ज्ञानं अनुमानेनैव सिध्यति, तथाहि—इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटनिष्ठघटत्वप्रकारकज्ञाततात्वात्, यन्निष्ठा यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या, यथा पटनिष्ठा पटत्वप्रकारिका ज्ञातता पटविशेष्यकपटत्वप्रकारकज्ञानजन्येति सामान्यतः, विशेषतो वा यथा घटान्तरे घटत्वप्रकारिका ज्ञाततेति; अवगाहते चेन्द्रियसन्निकर्षादिवशात् प्राथमिकमिव ज्ञाततावगाह्यपि प्रत्यक्षं धर्मिणो विशे-

तस्मिन् क्षीणसप्तकानां क्षायिकसम्यक्त्वस्य, केपाञ्चिद्देवानामौपशमिकसम्यक्त्वस्यापि सम्भवादौदयिकक्षायिकक्षायोपशमिकपारिणामिकरूपमौपशमिकौदयिकक्षायोपशमिकपारिणामिकरूपं वा भावचतुष्टयमवसेयम् । पर्याप्ते तु संज्ञिनि प्रागुक्तेन गुणस्थानकक्रमेण सर्वे भावा भावनीयाः ॥६४॥

उक्तं भावद्वारम् । अल्पबहुत्वमाह, तच्च तावज्जीवस्थानेषु—

**थोवा गब्भयमणुया तत्तो इत्थीओ तिघणगुणियाओ । बायरतेउक्काया तासिमसंखेज्ज पज्जत्ता ॥६५॥**

(स्वो०)—सर्वजीवेभ्यः स्तोका गर्भजा मनुष्याः संज्ञिनस्तेभ्योऽपि तद्युवत्यस्त्रिघनगुणा–सप्तविंशतिगुणा इत्यर्थः, ताभ्योऽपि बादराः पर्याप्तकास्तेजस्कायिका असंख्येयगुणा इति गाथार्थः ॥६५॥

(मलय०)—तदेवमभिहितं भावद्वारम् । संप्रत्यल्पबहुत्वद्वारमाह–स्तोकाः सर्वस्तोका गर्भजमनुष्याः, गर्भव्युत्क्रान्तमनुष्याः, पुरुषरूपा इति सामर्थ्याल्लभ्यते । स्त्रीणामनन्तरं पार्थक्येन वक्ष्यमाणत्वात्, सर्वस्तोकता च पुरुषरूपमनुष्याणां संख्येयकोटीकोटीमात्रप्रमाणत्वात् । 'तत्तो इति' तेभ्यो गर्भजमनुष्येभ्यः पुरुषरूपेभ्यः स्त्रियो मनुष्यरूपास्त्रिघनगुणिताः, त्रयाणां घनस्त्रिघनः सप्तविंशतिः तेन गुणितास्त्रिघनगुणिताः सप्तविंशतिगुणिता इत्यर्थः केवलं सप्तविंशतिरूपाधिका इति द्रष्टव्यम् । उक्तं च वृद्धाचार्यैः—"तिगुणा तिरूवअहिया, तिरियाणं इत्थिया मुणेयव्वा । सत्तावीसगुणा पुण, मणुयाणं तदहिया चेव ॥१॥ बत्तीसगुणा बत्तीसरूवअहियाओ होंति देवाणं । देवीओ पन्नत्ता, जिणेहिं जियरागदोसेहिं ॥२॥" तथा 'तासिमिति' 'व्यत्ययोऽप्यासामिति' प्राकृतलक्षणवशात्पञ्चम्यर्थे षष्ठी, ततोऽयमर्थः–ताभ्यो मनुष्यरूपाभ्यः स्त्रीभ्यः पर्याप्तबादरतेजस्कायिका असंख्येयगुणाः, कतिपयवर्गन्यूनावलिकाघनसमयप्रमाणत्वात्तेषाम् ॥

पर्यकभ्रमात्मकप्रत्यक्षानुभवरूपलिङ्गज्ञानेन घटत्ववद्घटविशेष्यकघटत्वप्रकारकज्ञानजन्यत्वमनुमीयते तया चानुमित्या घटत्ववद्घटविशेष्यकत्वे सति घटत्वप्रकारकत्वलक्षणप्रामाण्यप्रकारेणैव घटज्ञानं विषयीक्रियत इति सा प्रामाण्यमादायैव पर्यवस्यतीति स्वग्राहकेणैव प्रामाण्यग्रह इति सिद्धम्, यत्रापि पटे घटोऽयमिति प्राथमिकज्ञानस्य पटे घटत्वसम्बन्धावगाहित्वेन भ्रमत्वमिव तेन ज्ञानेन पटे घटज्ञाततायामुत्पन्नायां सत्याम् तद्विषयकस्य पटे घटो घटत्वेन ज्ञात इत्याकारकस्य द्वितीयप्रत्यक्षस्य पटात्मके धर्मिणि घटत्वरूपासद्विशेषणसम्बन्धावगाहित्वेनैव भ्रमत्वमिति घटत्वप्रकारकघटवृत्तिज्ञाततात्वलिङ्गभ्रमात्मकप्रत्यक्षेण पटवृत्तिघटत्वप्रकारकज्ञाततापक्षे घटत्ववद्विशेष्यकघटत्वप्रकारकत्वरूपेण घटज्ञानजन्यत्वमनुमीयते तत्रापि तयानुमित्या घटज्ञानं घटत्वाभाववति पटे घटत्वसम्बन्धावगाहकत्वेनाऽप्रमाणमपि घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकत्वलक्षणप्रामाण्यप्रकारेणैव दोषवशाद्विषयीक्रियत इति सा भ्रमात्मकघटज्ञानविशेष्यिकोक्तप्रामाण्यप्रकारिकेति भ्रमात्मकघटज्ञानरूपधर्मिग्राहिकया तयैव प्रामाण्यं गृहीतमित्यतो न प्रामाण्यग्रहे क्वचिदपि स्वाश्रयग्राहकसामग्र्यतिरिक्तसामग्र्यपेक्षेत्याशयेनाह—

अत एव चाप्रमापि प्रमेत्येव गृह्यते, दोषवशात् प्राथमिकस्येव चरमस्यापि प्रत्यक्षस्य धर्मिण्यसद्विशेषणवैशिष्ट्यावगाहित्वेन लिङ्गभ्रमादिति भाट्टाः। तदसत्, ज्ञानातिरिक्तायां ज्ञाततायां मानाभावात्, अयं मया ज्ञात इत्यत्र कर्त्तुरिव क्रियाया अप्युपनयबलेनैव भानसम्भवात्। अन्यथाख्यातिवादिनामुपनीतभानस्यावश्यकत्वाच्च। अत एवायमिष्ट इत्यादिरनुभवः। नहीष्टतापि पदार्थान्तरं परैः स्वीक्रियते। न वा ज्ञानमतीन्द्रियं, मानाभावात्।

भाव्या। आरणकल्पदेवेभ्योऽपि प्राणतकल्पदेवाः संख्येयगुणाः, तेभ्योऽप्यानतकल्पदेवाः संख्येयगुणाः, सर्वे चैतेऽनुत्तरविमानवास्यादय आनतकल्पवासिपर्यन्ता देवाः प्रत्येकं क्षेत्रपल्योपमासंख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणा द्रष्टव्याः, आणयपाणयमाई पल्लस्सासंखभागो उ'इति वचनप्रामाण्यात्। 'तत्तो'इत्यादि। तत आनतकल्पवासिभ्यो देवेभ्यः सप्तमपृथिवीनारका असंख्येयगुणाः,घनीकृतस्य लोकस्य एकप्रादेशिक्याः श्रेणेरसंख्येयतमे भागे यावन्तः प्रादेशास्तावत्प्रमाणत्वात्तेषाम्, तेभ्योऽपि षष्ठपृथिवीनारका असंख्येयगुणाः, षष्ठपृथिवीनारकापेक्षया सप्तमपृथिवीनारकाणामसंख्येयतमभागमात्रतया प्रागेव प्रतिपादितत्वात्। तेभ्योऽपि सहस्रारकल्पदेवा असंख्येयगुणाः, षष्ठपृथिवीनारकपरिमाणहेतुश्रेण्यसंख्येयभागापेक्षया सहस्रारकल्पदेवपरिमाणहेतोः श्रेण्यसंख्येयभागस्यासंख्येयगुणत्वात् ॥६६॥

**सुक्कंमि पंचमाए लंतयचोत्थीए बंभतच्चाए। माहिंदसणंकुमारे दोच्चाए मुच्छिमा मणुया ॥६७॥**

(स्वो०)—सहस्रारदेवेभ्योऽप्यसंख्येयगुणाः शुक्रकल्पनिवासिनो देवास्तेभ्योऽपि पञ्चम्यां पृथिव्यां नारका असंख्येयगुणास्तेभ्योऽपि लान्तककल्पदेवा असङ्ख्येयगुणाः, तेभ्योऽपि चतुर्थपृथिव्यां नारका असङ्ख्येयगुणाः, तेभ्योऽपि ब्रह्मकल्पदेवा असङ्ख्येयगुणास्तेभ्योऽपि तृतीयपृथिव्यां नारका असङ्ख्येयगुणाः, तेभ्योऽपि माहेन्द्रदेवाः असङ्ख्येयगुणाः, तेभ्योऽपि सनत्कुमारदेवा असङ्ख्येयगुणाः, तेभ्योऽपि द्वितीयनरकपृथिव्यां नारका असङ्ख्येयगुणाः, तेभ्योऽपि सम्मूर्च्छिममनुष्या उत्कृष्टपदभाविनः असङ्ख्येयगुणा भवन्तीति गाथार्थः ॥६७॥

(मलय०)—सहस्रारदेवेभ्यः शुक्रे महाशुक्राभिधे कल्पे देवा असंख्येयगुणाः, विमानबाहुल्यात्। तथाहि–षट्सहस्राणि विमानानां सहस्रारकल्पे चत्वारिंशत्सहस्रा महाशुक्रे। अन्यच्चाधोऽधो विमानवासिनो देवा बहुबहुतराः, स्तोकस्तोकतराश्चोपरितनोपरितनविमान-

क्तसमवायरूपलौकिकप्रत्यासत्त्या भानं न सम्भवतीति स्मरणलक्षणालौकिकप्रत्यासत्त्यैव भानमङ्गीकर्त्तव्यम्, तद्वत्प्रकृतेप्युपनीतभानमङ्गीकार्यमित्याशयः। अत एवायमिति, चाक्षुषप्रत्यक्षे ज्ञानादेर्ज्ञानलक्षणप्रत्यासत्त्या भानोपगमादेवेदमिच्छामीति इदं साक्षात्करोमीति च इदमनुमीनोमीति च इदमुपलभे इत्याद्यनुव्यवसायलक्षणप्रत्यासत्त्याऽयमिष्टः अयं साक्षात्कृतः अयमनुमितः अयमुपलब्ध इत्यादिरनुभवः प्रमाणकोटिमाटीकते नान्यथेति भावः। इष्ट इत्यादिरिति, अत्रादिपदेन साक्षात्कृतः अनुमित उपलब्ध इत्यादेरुपग्रहः। नन्वयमिष्ट इत्यत्रापीच्छा न विशेषणं किन्त्विष्टतैव, एवमनुमिततादिरेव यथासम्भवं भासत इत्यत आह नहीष्टतापीति, परैः भाट्टैः, अत्रातीतानागतघटादिज्ञाने जाते घटो ज्ञात इति प्रतीतिर्भवति तत्र धर्मिणो घटस्य तदानीमसत्त्वेन ज्ञाततायाः उत्पत्त्यसम्भवेन नोक्तप्रतीतिविषयत्वं तस्या इति ज्ञानस्य विशेषणतया भानमावश्यकमिति ध्येयम्। अतीन्द्रियत्वाच्च ज्ञानस्येति यदुक्तं तदुपक्षिपति नवेति, यथेच्छा प्रत्यक्षसिद्धा तथा ज्ञानमपीत्यत्रानुभवप्रमाणमाह—

घटमिच्छामीतिवत् घटं जानामीति प्रत्यक्षस्य सर्वानुभवसिद्धत्वात् इत्यन्यत्र विस्तरः। सामान्यतो व्याप्तिः यत्तदर्थयोरनुगतयोरभावेनासम्भविनी, विशेषतो व्याप्तिश्च रूपादिपदार्थप्रमाया दुरवधारणेति। अनुव्यवसायेन व्यवसाये गृह्यमाणे तदुपनीतं यथोपस्थितमेव विशेष्यं विशेष्यत्वेन भासते, विशेषणं च प्रकारत्वेन, तत्र विशेषणीभूय उपस्थिते विशिष्टे विशेषणपरित्यागे हेत्वभावात्, विशेष्यत्वप्रकारत्वयोः पूर्वानुपस्थितयोरेव प्रकारतयोभयत्रादिसिद्धत्वात्।

घटमिच्छामीतिवदिति, अन्यथेच्छाया अपि ज्ञानस्येवातीन्द्रियत्वं स्यात्, विनिगमकाभावादिति भावः, सामान्यतो व्याप्तिः,

असंख्येयगुणाः, ते हि अङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि तृतीयवर्गमूलेन गुणिते प्रथमवर्गमूले यावान् प्रदेशराशिरेतावत्प्रमाणानि खण्डानि यावन्त्येकस्यामेकप्रादेशिक्यां श्रेणौ भवन्ति, तावत्प्रमाणाः कतिपयकोटीकोटीप्रमाणगर्भजमनुष्यहीनाः ॥६७॥

**ईसाणे सव्वत्थवि बत्तीसगुणाओ होंति देवीओ। संखेज्जा सोहम्मे तओ असंखा भवणवासी ॥६८॥**

(स्वो०)—तेभ्यः सम्मूर्च्छजमनुष्येभ्योऽसङ्ख्येयगुणा ईशानदेवास्तेभ्यस्तद्देव्यो द्वात्रिंशद्गुणाः, ताभ्यो देवीभ्यः सङ्ख्येयगुणाः सौधर्मदेवास्तेभ्यस्तद्देव्यो द्वात्रिंशद्गुणाः, ताभ्योऽप्यसङ्ख्येयगुणा भवनपतयस्तेभ्योऽपि तद्देव्यो द्वात्रिंशद्गुणा इति गाथार्थः ॥६८॥

(मलय०)—सम्मूर्च्छिममनुष्येभ्य ईशानकल्पे देवा असंख्येयगुणाः, यतोऽङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि द्वितीये वर्गमूले तृतीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति, तावत्प्रमाणासु घनीकृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाण ईशानगतदेवदेवीसमुदायः, तद्गतैकरूपहीनद्वात्रिंशत्तमभागकल्पाश्च ईशानदेवास्ततो भवति सम्मूर्च्छिममनुष्येभ्योऽसंख्यातगुणाः, तेभ्योऽपि तद्वासिन्यो देव्यः संख्येयगुणाः, द्वात्रिंशद्गुणत्वात्। तथा चाह—'सव्वत्थवी'त्यादि। सर्वत्रापि सौधर्मकल्पज्योतिष्कादौ द्वात्रिंशद्गुणा देव्यो भवन्ति, तु शब्दोऽधिकार्थसंसूचकः, ततो द्वात्रिंशद्रूपाधिका इति द्रष्टव्यम्। तथा चोक्तं जीवाभिगमे—"तिरिक्खजोणियपुरिसेहिंतो तिरिक्खजोणियइत्थीओ तिगुणाओ तिरूवाहियाओ। तथा मणुस्सपुरिसेहिंतो मणुस्सीओ सत्तावीसगुणाओ सत्तावीसरूवाहियाओ य। देवपुरिसेहिंतो देवीओ बत्तीसगुणाओ बत्तीसरूवुत्तराओ यइ ति।" ईशानदेवीभ्योऽपि सौधर्मकल्पे देवाः संख्येयगुणाः, तत्र विमानबाहुल्यात्। तथाहि—अष्टाविंशतिः शतसहस्राणि विमानानामीशानकल्पे, द्वात्रिंशत्सौधर्मकल्पे, अपि च दक्षिणदिग्वर्त्ती सौधर्मकल्पः, ईशानकल्पश्चोत्तरदिग्वर्त्ती, दक्षिणस्यां च दिशि बहवः कृष्णपाक्षिका उत्पद्यन्ते, तत ईशानदेवीभ्यः सौधर्मदेवाः संख्येयगुणाः।

प्रामाण्यं गृह्यते, अन्यथा तु घटत्ववद्घटनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकारतानिरूपकत्वप्रकारकेण ज्ञानविशेष्यकेणानुव्यवसायेन प्रामाण्यं गृह्यते इति मुरारिमिश्रमतं प्रतिक्षेप्तुमुपदर्शयति अनुव्यवसायेनेति, तदुपनीतम्, अयं घट इत्यादिव्यवसायोपनीतम्, एतच्च विशेष्यमित्यनेन विशेषणमित्यनेन चान्वयि, विशेष्यम् घटादि, विशेषणम् घटत्वादि, तत्र अनुव्यवसाये व्यवसायांशे, विशिष्टे घटत्वादिविशिष्टे घटादौ, विशेषणपरित्यागे इति, एतेन घटघटत्वयोस्सम्बन्धोऽपि भासतेऽनुव्यवसाय इति सूचितम्, ननु घटत्वस्य विशेषणस्य भाने तत्सम्बन्धस्य भानावश्यम्भावाद् घटत्ववतो घटत्वस्य च व्यवसाये भानात्तल्लक्षणप्रत्यासत्त्याऽस्त्वनुव्यवसाये भानं, घटत्ववन्निष्ठं यद्विशेष्यत्वं घटत्वनिष्ठं च यत्प्रकारत्वं तयोर्व्यवसायेनानुपस्थितेः कथं भानमित्याशङ्कायामाह—विशेष्यत्वप्रकारत्वयोरिति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेनानुपस्थितभानाऽनुपगमे नैयायिकमतेऽपि इमं घटत्वेन जानामीत्यनुव्यवसाये इदंलक्षणविशेष्यघटत्वप्रकारयोः प्रागुपस्थितत्वेन भानेऽपीदन्त्वावच्छिन्नविशेष्यत्वघटत्वनिष्ठप्रकारत्वयोः प्रकारविधया भानं कथं स्यात्, पूर्वमनुपस्थितेः, तस्मादुक्तनियमस्य सङ्कोचेनानुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानमनुव्यवसाये प्रकारविधया यथा भवताऽभ्युपगतं तथैवास्मन्मते तयोर्भानमुपपद्यत एवेति मुरारिमिश्राशयः। तत्र लौकिकानुभवसंवादमाह—

अत एवेमं घटत्वेन पर्वतं वह्निमत्त्वेन जानामीत्यादिकोऽनुभवो लोकानां, तथा च तद्वदेव घटं घटत्वेन जानामीत्यनुव्यवसायात् घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वादिकं प्रामाण्यं तेन गृह्यत इति मिश्राः। अत्र वदन्ति—अनभ्यासदशायामनुव्यवसायानन्तरं प्रामाण्यसन्देहस्य सर्वानुभवसिद्धत्वान्निश्चिते सन्देहस्य सर्वथैवानुपपत्तेः, तद्धर्मविशिष्टविशेष्यकत्वावच्छेदेन तत्प्रकारकत्वमनुव्यवसायेन न गृह्यत इत्येव कल्प्यते,

(मलय०)—भवनवासिदेवीभ्योऽसंख्येयगुणा रत्नप्रभिका-रत्नप्रभाभाविनो नारकाः, अङ्गुलमात्रक्षेत्रप्रदेशराशौ प्रथमवर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति, तावत्प्रमाणासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणत्वात्तेषाम्। तेभ्योऽप्यसंख्येयगुणाः खचरपञ्चेन्द्रियतिर्यग्योनिकाः पुरुषाः, प्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगतनभःप्रदेशराशिमानत्वात्तेषाम्। तेभ्योऽपि तत्तिरश्च्यः खचरपञ्चेन्द्रियतिर्यग्योनिक्यो युवतयः संख्येयगुणास्त्रिगुणास्त्रिरूपाधिका इत्यर्थः। एवं सर्वत्रापि स्वजातिषु पुरुषापेक्षया तिरश्च्यः संख्येयगुणा वक्तव्याः, तथैव वक्ष्यन्ते। ततस्ताभ्यः खचरपञ्चेन्द्रिययुवतिभ्यः संख्येयगुणाः पुंवेदोदयिनः स्थलचराः, बृहत्तरप्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्तेषाम्। तेभ्योऽपि तद्युवतयस्त्रिगुणास्त्रिरूपाधिकाः। ताभ्योऽपि पुंवेदोदयिनो जलचरा मत्स्यमकरादयः संख्येयगुणाः, बृहत्तरप्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्। तेभ्यस्तद्युवतयस्त्रिगुणास्त्रिरूपाधिकाः। ताभ्योऽपि व्यन्तराः पुंवेदोदयिनः संख्येयगुणाः, यतः संख्येययोजनकोटीकोटीप्रमाणानि सूचिरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति, तावन्तः सामान्यतो व्यन्तराः, केवलमिह पुरुषा विवक्षिता इति, ते सकलसमुदायसंख्यापेक्षया एकरूपहीनद्वात्रिंशत्तमभागकल्पा वेदितव्याः, ततो घटन्ते जलचरयुवतिभ्यो व्यन्तराः संख्येयगुणाः। तेभ्योऽपि व्यन्तर्यो द्वात्रिंशद्गुणा द्वात्रिंशद्रूपाधिकाः। तेभ्योऽपि ज्योतिष्कदेवाः पुरुषाः संख्येयगुणाः, ज्योतिष्कदेवा हि सामान्यतः षट्पञ्चाशदधिकशतद्वयाङ्गुलप्रमाणानि सूचिरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणाः, केवलमिह पुरुषरूपा ज्योतिष्का विवक्षिताः, ततस्ते सकलसमुदायसंख्यापेक्षया एकरूपहीनद्वात्रिंशत्तमभागकल्पा द्रष्टव्याः, ततो भवन्ति व्यन्तरीभ्यो ज्योतिष्कपुरुषाः संख्येयगुणाः। तेभ्योऽपि ज्योतिष्कदेव्यो द्वात्रिंशद्गुणा द्वात्रिंशद्रूपाधिकाः "सव्वत्थवि बत्तीसगुणाओ होंति देवीओ" इति वचनप्रामाण्यात् ॥७९॥

कतत्प्रकारकनिश्चयस्य प्रतिबन्धकत्वेन प्रामाण्यनिश्चयसत्त्वे तत्तद्भावप्रकारकसंशयज्ञानानुपपत्तिस्स्यादिति भावः। यद्यपि ज्ञाने प्रामाण्यनिश्चयो ज्ञानत्वरूपधर्मितावच्छेदकसामानाधिकरण्येन जायते, संशयस्तु ज्ञानत्वरूपधर्मितावच्छेदकसामानाधिकरण्येन प्रामाण्याभावस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यस्य चावगाहीति तयोः प्रतिबध्यप्रतिबन्धकभावाऽभावेन संशयानुपपत्तिर्न स्यात्, सामानाधिकरण्येन तद्धर्मिकतत्प्रकारकनिश्चयस्यावच्छेदकावच्छेदेन तद्धर्मिकतदभावप्रकारकसंशयम्प्रति प्रतिबन्धकस्य अवच्छेदकावच्छेदेन तद्धर्मिकतत्प्रकारकनिश्चयस्यापि च सामानाधिकरण्येनावच्छेदकावच्छेदेन वा तद्धर्मिकतदभावप्रकारकसंशयप्रतिबन्धकस्य प्रकृतेऽभावात्, तथापि विषयतासम्बन्धेन प्रवृत्तिं प्रति विषयतासम्बन्धेन ज्ञानत्वावच्छिन्नं कारणम्, तदपि प्रामाण्यसंशयास्कंदितं न, किन्तु तन्निश्चयविशिष्टमित्यभ्युपगतं मीमांसकैः, तथा च प्रवृत्त्युपयुक्तस्य ज्ञानत्वरूपधर्मितावच्छेदकावच्छेदेन प्रामाण्यग्रहस्य स्वतस्त्वे संशयानुपपत्तिर्दूषणं बोध्यम्, नच यैव ज्ञानग्राहकसामग्री सैव ज्ञानत्वस्येव प्रामाण्यस्यापि ग्राहिकेति प्रामाण्यग्राहकसामग्रीसत्त्वात्कथं तदग्रह इति वाच्यं, तत्राग्रिमसंशयानुरोधेन संशयजनकदोषस्यैव प्रामाण्यनिश्चयप्रतिबन्धकत्वकल्पनादिति ध्येयम्। अत्रैवानुभवानुरोधस्संवादकतयोपदर्शयति—

तेनेमं घटत्वेन जानामीत्यनुभवो न विरुध्यते, प्रमुष्टतत्तांशकस्य च स्मरणस्य घटं स्मरामि घटत्वेन वा स्मरामीत्यादिकोऽनुभवो, न तु घटं घटत्वेन स्मरामीत्यादिकः, तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोरनुपस्थितयोः प्रकारत्वायोगात्, सम्बन्धविधयैवानुव्यवसायेन ग्रहात्, तेन तत्प्रकारकः प्रामाण्यसन्देहो न विरुध्यत इति। तदिदमाह—न च तदपि, अननुसंहितोपाधेरुपहितप्रत्यक्षायोगात्। न च विषयोपधानमात्रं प्रामाण्यं, तदाभा-

केवलं ज्योतिष्कदेव्यपेक्षया तु ते असंख्येयगुणा एव, तदयुक्तं, शून्यप्रलापमात्रत्वात् । तथाहि—यदि देव्यपेक्षया देवाः असंख्येयगुणा भवेयुस्ततो देवापनयने केवलदेव्यपेक्षया खचरपञ्चेन्द्रियनपुंसकानामसंख्येयगुणत्वमुपपद्येत, यावता देव्यपेक्षया द्वात्रिंशत्तमभागकल्पा एव देवाः, ततस्तदपनयनेऽपि संख्येयगुणत्वमेव, नासंख्येयगुणत्वमिति । खचरपञ्चेन्द्रियनपुंसकेभ्योऽपि स्थलचरपञ्चेन्द्रियनपुंसकाः संख्येयगुणाः । तेभ्योऽपि जलचरपञ्चेन्द्रिया नपुंसकाः संख्येयगुणाः । तेभ्योऽपि पर्याप्तचतुरिन्द्रियाः संख्येयगुणाः । तेभ्योऽपि पर्याप्तसंज्ञ्यसंज्ञिभेदभिन्नाः पञ्चेन्द्रियाः किञ्चिदधिका विशेषाधिकाः । तेभ्योऽपि पर्याप्तद्वीन्द्रिया विशेषाधिकाः । तेभ्योऽपि पर्याप्तत्रीन्द्रिया विशेषाधिकाः । यद्यपि पर्याप्तचतुरिन्द्रियादीनां पर्याप्तद्वीन्द्रियपर्यन्तानां प्रत्येकमङ्गुलसंख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति, तावत्प्रमाणत्वमविशेषेण वर्ण्यते, तथाप्यङ्गुलसंख्येयभागस्य संख्येयभेदभिन्नत्वादित्थं विशेषाधिकत्वमुच्यमानं न विरुध्यते ॥७०॥

**असंखा पण किंचि(च)हिय सेस कमसो अपज्ज उभयओ । पंचेंदिय विसेसहिया चउतियबेइंदिया तत्तो ॥**

(स्वो०)—'असंख्येयाः पञ्चेन्द्रियाः किञ्चिदधिकाः शेषाः क्रमशः अपर्याप्ता इति, अतः पञ्चेन्द्रिया उभये विशेषाधिकाश्चतुस्त्रिद्वीन्द्रियास्तेभ्यः' इति पदानि । उभयशब्दः छन्दोवशादस्थाने प्रयुक्तः । पर्याप्तत्रीन्द्रियेभ्यः पञ्चेन्द्रिया अपर्याप्तका असंज्ञिनोऽसंख्येयगुणाः, तेभ्योऽपि चतुरिन्द्रिया अपर्याप्ता विशेषाधिकाः, तेभ्योऽपि अपर्याप्ताः त्रीन्द्रियाः विशेषाधिकाः, तेभ्योऽपि द्वीन्द्रिया अपर्याप्तका विशेषाधिकाः, तेभ्योऽपि पञ्चेन्द्रिया 'उभये' इति पर्याप्तापर्याप्ताः सर्वे विशेषाधिकाः, तेभ्योऽपि चतुरिन्द्रिया उभये, तेभ्योऽपि त्रीन्द्रिया उभये, तेभ्योऽपि द्वीन्द्रिया उभये, विशेषाधिका इति सर्वत्र सम्बन्धनीयमिति गाथार्थः ॥७१॥

तदपीति ग्रन्थः, तथाच तत्पदेन स्फुरणमात्रपरामर्शात्प्रामाण्यस्य चानुपङ्गात्प्रामाण्यस्फुरणमात्रमपि न चेत्यर्थः। तत्र हेतुमाह अननुसंहितेति, अज्ञातविशेपणस्य पुरुपस्य विशिष्टबुद्ध्यभावात् प्रकृते प्रकारकत्वविशेष्यकत्वयोः पूर्वमज्ञातत्वेन न तद्विशिष्टानुव्यवसायप्रत्यक्षमित्यर्थः, उपहितप्रत्यक्षाऽयोगादिति—अत्र उपहितप्रत्ययायोगादिति पाठान्तरम्, नच विशेष्यविषयकत्वमात्रं प्रामाण्यं, येनानुव्यवसाये तज्ज्ञाने तज्ज्ञानं स्यादित्याह न चेति, निषेधे हेतुमाह तदाभासेति, विशेष्यविषयकत्वस्य प्रमाणाभासेऽपि सत्तयाऽतिप्रसक्तत्वेन प्रामाण्यरूपत्वाऽयोगादित्यर्थः। ननु तर्हि तत् किंरूपमित्याशङ्कायामाह—

अपि त्वनुभवस्य सतो भूतार्थोपधानं, न चार्थानुसन्धानेऽपि तस्य भूतत्वमनुसन्धीयते, आरोपितत्वव्यावर्त्तकविशेषाननुसन्धानात्, अनुसंहितस्यारोपितत्वसाधारण्यात्, क्वचिद्विशेषोऽप्यनुसन्धीयत इति चेत्, न क्वापि प्राथमिकेन, अन्यथाऽनभ्यासदशायां तत्रापि सन्देहो न स्यात्, अभ्यासदशापन्ने त्वनुसन्धानं व्याप्तिग्रहजनितसंस्कारसमुद्भवप्रभवस्मरणबलेन भवत् प्रमाणान्तरशरीरे प्रविशतीति परत एवावशिष्यते, तत्राप्यनवस्थेति चेत्, न तावदसौ दृष्टान्तद्वारिका, प्रागेव तन्निश्चयात्,

अपि त्वनुभवस्येति, भूतार्थोपधानं यथार्थावगाहित्वं, तद्वन्निष्ठविशेष्यताकत्वे सति तन्निष्ठप्रकारताकत्वमिति यावत्, अत्र भूतार्थानुसन्धानमिति पाठान्तरम्, ननु रङ्गत्वेन रजतावगाहिनि रजतत्वेन च रङ्गावगाहिनि इमे रङ्गरजते इत्याकारकसमूहालम्बनभ्रमेऽपि रङ्गविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः रजतविशेष्यकत्वरजतत्वप्रकारकत्वयोश्च सत्त्वेन तद्वद्विशेष्यकतत्प्रकारकानुभवत्वलक्षणप्रामाण्यमतिव्याप्तमिति चेत्, मैवम्, तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकानुभवत्वं प्रामाण्यमित्यर्थविवक्षणात्,

(मलय०)— 'तत्तो' इति पूर्वगाथापर्यन्तोक्तमिह संबध्यते, ततः पर्याप्तापर्याप्तद्वीन्द्रियेभ्यः पर्याप्तबादरप्रत्येकवनस्पतिकायिका असंख्येयगुणाः, यद्यपि च प्रागपर्याप्तद्वीन्द्रियादिवद्बादरप्रत्येकवनस्पतिकायिका अपि अङ्गुलासंख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणा उक्ताः, तथाप्यङ्गुलासंख्येयभागस्यासंख्येयभेदभिन्नत्वाद्बादरपर्याप्तप्रत्येकवनस्पतिकायिकपरिमाणचिन्तायामङ्गुलासंख्येयभागोऽसंख्येयगुणहीनः परिगृह्यते, ततो न कश्चिद्विरोधः, इत्थं चैतदङ्गीकर्त्तव्यम्, प्रज्ञापनायामपि महादण्डकेऽपर्याप्तद्वीन्द्रियानन्तरं बादरपर्याप्तप्रत्येकतरूणामसंख्येयगुणतयाभिधानात्। ननु युक्तं तत्र बादरपर्याप्तप्रत्येकतरूणामसंख्येयगुणत्वमपर्याप्तद्वीन्द्रियेभ्योऽनन्तरं चिन्त्यमानत्वात्, इह त्वपर्याप्तद्वीन्द्रियानन्तरं पूर्वं पर्याप्तापर्याप्तरूपाः पञ्चेन्द्रियाश्चिन्तिताः, ततश्चतुरिन्द्रियास्ततस्त्रीन्द्रियास्ततो द्वीन्द्रियास्तेभ्यश्चानन्तरं पर्याप्तबादरप्रत्येकतरवः, ततः कथं तेषामसंख्येयगुणत्वमिति? नैष दोषः, यतो यद्यप्यपान्तराले पर्याप्तापर्याप्तपञ्चेन्द्रियादय उक्ताः, तथापि ते विशेषाधिका एवोक्ताः, विशेषाधिकाश्च विशेषेण किञ्चिन्मात्रेणाधिका उच्यन्ते, न संख्येयादिगुणाधिकाः। ततोऽपर्याप्तद्वीन्द्रियापेक्षया बादरपर्याप्तप्रत्येकतरवोऽसंख्येयगुणा उक्ताः सन्तः पर्याप्तापर्याप्तद्वीन्द्रीयापेक्षयाप्यसंख्येयगुणा एवोक्ता द्रष्टव्या इति। तेभ्योऽपि 'इतीति' बादरपर्याप्तरूपा निगोदा अनन्तजीवशरीराणि असंख्येयगुणाः। तेभ्योऽपि पर्याप्तबादरपृथिवीकायिका असंख्येयगुणाः। तेभ्योऽपि पर्याप्तबादराऽप्कायिका असंख्येयगुणाः, इह यद्यपि पर्याप्तबादरप्रत्येकवनस्पतिपृथिवीकायिकाप्कायिका अङ्गुलासंख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति, तावत्प्रमाणा अविशेषेणोक्ताः, तथाप्यङ्गुलासंख्येयभागोऽसंख्येयभेदभिन्नः, ततोऽङ्गुलासंख्येयभागस्य क्रमेणासंख्येयगुणहीनतया गृह्यमाणत्वादित्थमसंख्येयगुणत्वाभिधाने न कश्चिद्दोषः। इतश्च न दोषः, महादण्डकेऽप्यसंख्येयगुणतयाऽभिधानात्। महादण्डकश्च प्रागेव दर्शितः। बाद-

भयसम्बन्धेन स्वनिरूपितनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताविशिष्टान्यवह्नित्वत्वनिष्ठावच्छेदकतानिरूपितत्वसम्बन्धेन सत्त्वेन तत्स-
म्बन्धावच्छिन्नस्वाभाववत्त्वस्याभावात्, नन्वेवं तर्हि निरवच्छिन्नवह्नित्वनिष्ठप्रकारताया अवच्छेदकत्वाऽप्रसिद्ध्या स्वनिरूपितावच्छेद-
कताविशिष्टान्यावच्छेदकतानिरूपितत्वस्य व्यधिकरणसम्बन्धत्वेन तत्सम्बन्धावच्छिन्नस्वाभाववत्त्वस्य केवलान्वयित्वेन तस्य साव-
च्छिन्नवह्नित्वनिष्ठनिरूपकतायामपि सत्त्वात्तत्र तेन सम्बन्धेनोक्तप्रकारताया अपि सत्तया तादृशनिरूपकतामादय वह्नित्वत्वेन वह्नि-
त्वप्रकारकज्ञानविशेष्यके निरवच्छिन्न वह्नित्वप्रकारकज्ञानेऽतिव्याप्तिस्तदवस्थैवेति चेत्, मैवम्, तस्य स्वनिरूपितावच्छेदकतावत्त्वसम्ब-
न्धावच्छिन्नस्वाभाववदवच्छेदकत्वाऽनिरूपितत्वं एव पर्यवसानात्, तथा च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धस्य निरवच्छिन्नवह्नि-
त्वनिष्ठप्रकारताया व्यधिकरणत्वेन तेन सम्बन्धेन तदभावस्य वह्नित्वत्वनिष्ठावच्छेदकतायां सत्त्वेन तन्निरूपितत्वमेव वह्नित्वनिष्ठनि-
रूपकतायां वर्त्तेत इत्युक्तसम्बन्धाभावान्न सावच्छिन्ननिरूपकता निरवच्छिन्नप्रकारताविशिष्टेति नातिव्याप्तिरित्यलं पल्लवितेन, तस्य
विशेष्यरूपार्थस्य, भूतत्वं यथार्थत्वम्, विशेष्यगताऽसाधारणधर्मरूपमिति यावत्, नन्वर्थवत्तदप्यनुसन्धीयतामतआह आरोपित-
त्वेति, प्रकारगतं यदारोपितत्वं तद्व्यावर्त्तकस्य विशेषस्य पूर्वं ज्ञानाभावादित्यर्थः। भ्रमीयविशेष्ये विशेषणमारोपितं, तस्य विशेष्य-
तावच्छेदकसामानाधिकरण्याभावात्, प्रमीयविशेष्ये चानारोपितम्, उक्तवैपरीत्यात्, विशेषणवत्त्वेन वाऽनारोपितं विशेष्यं तत्र तस्य
सत्त्वात्, ततश्चेदं नारोपितमिति ज्ञानं यदा स्यात् तदा स्याद्यथार्थत्वग्रहः, तच्च विशेषदर्शनमन्तरा न, विशेषदर्शनं च नास्तीति न
यथार्थत्वानुसन्धानमितिभावः। नच ज्ञायमानमिदन्त्वमेव विशेषः, तस्यारोपितानारोपितोभयवृत्तित्वादित्याह अनुसंहितस्येति,
आरोपितत्वसाधारण्यात् विशेषणवत्त्वेनारोपितं यद्विशेष्यं तत्त्वस्यापि सामानाधिकरण्यात्, अनुसंहितस्य चारोपसाधारण्यादि-

त्तरं विशेषाधिकाः, तेभ्योऽप्यसंख्येयगुणाः अपर्याप्ताः सूक्ष्मनिगोदा इति गाथार्थः ॥७४॥

(मलय०)—अपर्याप्तसूक्ष्मवायुकायिकेभ्यः पर्याप्तसूक्ष्मतेजस्कायिकाः संख्येयगुणाः, अपर्याप्तसूक्ष्मेभ्यः पर्याप्तसूक्ष्माणां सदैव प्राचुर्येण भावात्। तेभ्योऽपि पर्याप्तसूक्ष्मपृथिवीकायिकाः किञ्चिदधिका विशेषाधिकाः। तेभ्योऽपि पर्याप्तसूक्ष्माप्कायिका विशेषाधिकाः। तेभ्योऽपि पर्याप्तसूक्ष्मवायुकायिका विशेषाधिकाः। तेभ्योऽप्यपर्याप्तसूक्ष्मनिगोदा असंख्येयगुणाः ॥७४॥

**संखेज्जगुणा तत्तोऽपज्जत्ताणंतया तओऽभव्वा। पडिवडियसम्मसिद्धा वणबायरजीवपज्जत्ता ॥७५॥**

(स्वो०)—अपर्याप्तसूक्ष्मनिगोदेभ्योऽपि सूक्ष्मपर्याप्ता निगोदाः सङ्ख्येयगुणा भवन्ति, तेभ्योऽप्यनन्तगुणा अभव्याः, तेभ्योऽप्यनन्तगुणाः प्रतिपतितसम्यग्दृष्टयः, तेभ्योऽप्यनन्तगुणाः सिद्धाः, सिद्धेभ्योऽपि वनस्पतिकायिका बादराः पर्याप्तका अनन्तगुणा इति गाथार्थः ॥७५॥

(मलय०)—तेभ्योऽपर्याप्तसूक्ष्मनिगोदेभ्यः पर्याप्तसूक्ष्मनिगोदाः संख्येयगुणाः। इह यद्यप्यपर्याप्ततेजस्कायिकादयः पर्याप्तसूक्ष्मनिगोदपर्यन्ता अविशेषेणान्यत्रासंख्येयलोकाकाशप्रदेशराशिप्रमाणाः पठ्यन्ते, तथापि लोकासंख्येयस्यासंख्येयभेदभिन्नत्वादित्थमल्पबहुत्वमभिधीयमानमुपपन्नं द्रष्टव्यम्। इतश्च द्रष्टव्यं, महादण्डके तथापाठादिति। पर्याप्तसूक्ष्मनिगोदेभ्योऽप्यनन्तगुणा अभव्याः, तेषां जघन्ययुक्तानन्तकप्रमाणत्वात्। तथा चोक्तमनुयोगद्वारसूत्रे—"उक्कोसए परित्ताणंतए रूवे पक्खित्ते जहन्नयं जुत्ताणंतयं होइ, अभव्वसिद्धियावि तत्तिया चेव" इति। तेभ्योऽप्यनन्तगुणाः प्रतिपतितसम्यक्त्वाः। तेभ्योऽप्यनन्तगुणाः सिद्धाः। तेभ्योऽप्यनन्तगुणाः पर्याप्तबादरवनस्पतिजीवाः ॥७५॥

अयमर्थ इति, अनुमानप्रामाण्यावगमे अनुमानेन प्रामाण्यावगमे, प्रवृत्तिसामर्थ्येनेति प्रवृत्तिसामर्थ्यम् अर्थप्राप्तिनिबन्धनत्वम् तेनेत्यर्थः। अर्थस्य भूतत्वमवगम्येति, अनुमानप्रयोगश्चात्र अयं घटत्ववान् घटत्वप्रकारकसंवादिप्रवृत्तिविशेष्यत्वात् घटत्वप्रकारकसंवादिप्रवृत्तिजनकज्ञानविशेष्यत्वाद्वा यो यो यत्प्रकारकसंवादिप्रवृत्तेस्तज्जनकज्ञानस्य वा विशेष्यः स स तद्वान् यथा जलत्वप्रकारकसंवादिप्रवृत्तेस्तज्जनकज्ञानस्य वा विशेष्यं जलम्, यन्नैवं तन्नैवम्, यथा घटत्वप्रकारकविसंवादिप्रवृत्तेस्तज्जनकज्ञानस्य वा विशेष्यः पटादिरित्यादिरूपो बोध्यः। तदुपाधिकस्य भूतार्थोपाधिकस्य, तदुक्तमिति, न्यायभाष्ये इति शेषः। प्रमाणतोऽर्थप्रतिपत्ताविति प्रत्यक्षाद्यन्यतमप्रमाणेन जलज्ञाने सति जलविषयकप्रवृत्तौ सत्यां जललाभे सति प्रवृत्तिस्संवादिनीत्यवगतिः, ततश्च प्राथमिके जलज्ञाने संवादिप्रवृत्तिजनकत्वज्ञाने सति पूर्वोत्पन्नं जलज्ञानं यथार्थं संवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं, यथा मरुमरीचौ जलज्ञानमित्यनुमानेन प्रामाण्यमनुमीयत इत्यर्थः। नापि द्वितीयेत्याह—

अनुमानफलीभूतानुमितिप्रामाण्यावगमेऽप्यनुमानान्तरापेक्षेत्येवं फलद्वारिका तु सा स्यात्, यद्यवश्यज्ञेयं प्रामाण्यमभ्युपेयेत। अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति चेत्, यथा विषयसंवेदनं, धर्मिणि विपरीतकोट्यनुल्लेखिज्ञानं निश्चयः, स चाप्रामाण्यग्रहानाक्रान्तस्तत्तत्कार्यमर्जयति, क्वचिच्चाप्रामाण्यशङ्कोत्सारकत्वेन प्रामाण्यनिश्चय उपयुज्यते, न तु तेन विना तस्य स्वविषयत्वमेवापैति, तथात्रापि भावनीयम्। अन्यथा प्रामाण्यनिश्चयस्यापि तथात्वार्थं प्रामाण्यनिश्चयानुसरणेऽनवस्थाप्रसङ्गादिति भावः।

अनुमानफलीभूतेति, यद्यवश्यज्ञेयमिति यद्यवश्यनिश्चेयमिति पाठान्तरम्, यथा विषयसंवेदनमिति, अस्यैव भावा-

विशेषाधिकाः, पर्याप्तपृथिवीकायादिसूक्ष्माणामपि तत्र प्रक्षेपात् । न चैवमसंख्येयादिगुणताप्रसङ्गः, पर्याप्तसूक्ष्मवनस्पतिकायापेक्षया सूक्ष्मपर्याप्तपृथिव्यादीनां सर्वेषामपि किंचिन्मात्रत्वात्, अनन्तानन्तलोकाकाशप्रदेशराशिप्रमाणा हि पर्याप्तसूक्ष्मवनस्पतयोऽसंख्येयलोकाकाशदेशप्रमाणाश्च सर्वेऽपि सूक्ष्मपर्याप्ताः पृथिव्यादय इति ॥७७॥

**पज्जत्तपज्जता सुहुमा किंचि(च)हिया भव्वसिद्धीया । तत्तो बायरसुहुमा निगोयवणस्सइ जिया तत्तो ॥७८॥**

(स्वो०)—पर्याप्ताऽपर्याप्ताः सर्वेऽपि सूक्ष्माः पूर्वोक्तेभ्यो विशेषाधिकाः, तेभ्योऽपि भव्या विशेषाधिकाः, तेभ्योऽपि बादरसूक्ष्मसकलनिगोदजीवाः जीवाशब्दस्योभयसम्बन्धात् विशेषाधिकाः, तेभ्योऽपि सामान्यवनस्पतिकायिका विशेषाधिका इति गाथार्थः ॥७८॥

(मलय०)—सर्वपर्याप्तसूक्ष्मैकेन्द्रियेभ्यः पर्याप्तापर्याप्ताः सर्वेऽपि सूक्ष्माः किञ्चिदधिकाः । तेभ्योऽपि भवसिद्धिका भव्या विशेषाधिकाः, जघन्ययुक्तानन्तकमात्राभव्यपरिहारेण सर्वजीवानां भव्यत्वात् । तेभ्योऽपि बादरसूक्ष्मनिगोदजीवा विशेषाधिकाः । कथमिति चेत्, उच्यते–इह भव्या अभव्यपरिहारेण चिन्तिताः, अभव्याश्च युक्तानन्तकसंख्यामात्रपरिमाणाः, बादरसूक्ष्मनिगोदजीवरहिताश्च शेषजीवाः सर्वेऽपि मिलिता असंख्येयलोकाकाशप्रदेशराशिमात्रप्रमाणाः, ततो भव्या अभव्याश्चातिप्राचुर्येण बादरसूक्ष्मनिगोदजीवराशावेव प्राप्यन्ते नान्यत्र, अभव्याश्च भव्यापेक्षया किंचिन्मात्राः, ततो भव्यराश्यपेक्षया सामान्यतो बादरसूक्ष्मनिगोदजीवाश्चिन्त्यमाना विशेषाधिका एव लभ्यन्ते । तेभ्योऽपि सामान्यतो वनस्पतिजीवा विशेषाधिकाः, प्रत्येकशरीरिणामपि वनस्पतिजीवानां तत्र प्रक्षेपात् ॥७८॥

**एगिंदिया तिरिक्खा चउगइमिच्छा य अविरइजुया य । सकसाया छउमत्था सजोगसंसारि सव्वेवि ॥७९॥**

(स्वो०)—वनस्पतिकायिकेभ्य एकेन्द्रिया विशेषाधिकाः, एकेन्द्रियेभ्यस्तिर्यञ्चो विशेषाधिकाः, तिर्यग्भ्योऽपि चतुर्गतिमिथ्याद-

पलभ्यते, तत्र तथात्वानिश्चये लिङ्गाभासशङ्काऽऽक्रान्ततया न निश्चीयते, यत्र तु तज्ज्ञानं तदेकनियतं, तत्र तावतैव लिङ्गनिश्चयः, तदाभासशङ्कानुत्थानात्, एककोटिनियतो ह्यनुभवो निश्चयः।

अस्तु तर्हीति, द्वैताभावादिति अनुमितौ हि पक्षज्ञानं लिङ्गज्ञानं च कारणमितीदं जलज्ञानं प्रमात्मकं संवादिप्रवृत्तिजनकत्वादित्यत्र जलज्ञानस्य धर्मिणो ज्ञाने समुत्पन्ने तस्य जलज्ञानत्वरूपैककोटिनियतत्वेन जलं जानामि न वेति जलज्ञानतदभावप्रकारकसंशयो जलं न जानामीति जलज्ञानाभावप्रकारकविपर्ययश्च सचेतसः पुरुषस्य न भवतः, एवं संवादिप्रवृत्त्युत्तरं संवादिप्रवृत्तिजनकत्वरूपलिङ्गज्ञाने समुत्पन्ने तस्य संवादिप्रवृत्तिजनकत्वरूपैककोटिनियतत्वेनेदं ज्ञानं संवादिप्रवृत्तिजनकं न वा न संवादिप्रवृत्तिजनकमितिसंशयविपर्ययौ न भवतः, तथा च तत्र जलज्ञानरूपपक्षस्य ज्ञानं संवादिप्रवृत्तिजनकत्वरूपहेतोश्च ज्ञानं द्वैताभावादेव विपरीतकोट्यनालम्बनत्वेन निश्चयरूपमेवेति न तत्रानुमित्युपयुक्ततया प्रामाण्यनिश्चयापेक्षेति वस्तुस्थितिः, तथानभ्युपगमे तु भट्टमतेऽपि ज्ञाततारूपलिङ्गज्ञानस्याप्रामाण्यसंशयान्न तेन लिङ्गनिश्चय इति तन्निश्चायकमन्यदेषितव्यं तदप्यप्रामाण्यसंशयान्दोलितं विपयसंशयरूपमिति न निश्चायकमिति तन्निश्चायकान्तरान्वेषणेऽनवस्था स्यादेव, प्रत्यक्षेण लिङ्गनिश्चयः, तस्य च स्वसत्त्वैव निश्चायकत्वमुभयत्र तुल्यमेवेति न तदपि विनिगमकमिति भावः। तस्यैव विवरणमाह यत्र हि लिङ्गेत्यादिना, धूमज्ञानं धूमेऽधूमे च भवतीति पर्वते प्रकृतं जायमानं ज्ञानं किं धूमत्वेन धूमविषयं किं वा धूमत्वेन धूलिपटलविपयमिति संशयस्य धूमत्वेन धूलिपटलविपयमेवेति विपर्ययस्य च यत्र सद्भावस्तत्र धूमज्ञाने प्रामाण्यनिश्चयाभावे प्रामाण्यसन्देहबलेन तद्विषयेपि संदेहसद्भावात्तस्य ज्ञानस्य निश्चयरूपत्वाभावेनानुमितिसाधकत्वं न सम्भवतीति तत्र धूमज्ञाने प्रामाण्यनिश्चय आवश्यक एव, एवं पर्वतादि-

(मलय०)—तदेवं सामान्यतः सर्वजीवानामल्पबहुत्वमभिहितम् । सम्प्रति गुणस्थानकान्यधिकृत्य तदाह—इहोपशान्तग्रहणेनोपशमका उपशान्ताश्च गृह्यन्ते, क्षपकग्रहणेन क्षपकाः क्षीणमोहाश्च । उपशान्ताच्च परे चत्वारो यथोत्तरं संख्येयगुणा वक्तव्याः, तेभ्यश्च परे चत्वारोऽसंख्येयगुणाः । तद्यथा—सर्वस्तोका उपशमकोपशान्तमोहाः, सकलमपि श्रेणिकालमधिकृत्योत्कृष्टपदेऽपि तेषामेकद्वित्र्यादिसंख्यया प्राप्यमाणत्वात् । तेभ्यः संख्येयगुणाः क्षपकक्षीणमोहाः, सकलं श्रेणिकालमधिकृत्योत्कृष्टपदे तेषां शतपृथक्त्वसंख्यया प्राप्यमाणत्वात् । एतच्च द्वयानामप्युत्कृष्टपदे सत्तायां लभ्यमानानामल्पबहुत्वमवसेयम् । अन्यदा तु कदाचिदमी द्वयेऽपि भवन्ति, कदाचिन्न भवन्त्यपि, कदाचिदुपशमकाः स्तोकाः बहवः क्षपकाः, कदाचित्पुनः स्तोकाः क्षपकाः बहव उपशमका इति । क्षपकेभ्योऽपि योगिनः-सयोगिकेवलिनः संख्येयगुणाः, तेषां जघन्यपदेऽपि कोटिपृथक्त्वेन प्राप्यमाणत्वात् । तेभ्योऽप्यप्रमत्तयतयः संख्येयगुणाः, तेषामेव द्विकोटीसहस्रसंख्यया प्राप्यमाणत्वात् । तेभ्योऽपि प्रमत्तयतयः संख्येयगुणाः, कोटीसहस्रपृथक्त्वेन प्राप्यमाणत्वात् । तेभ्योऽपि देशविरता असंख्येयगुणाः, असंख्येयानां तिरश्चां देशविरतिसम्भवात् । तथापि कियदसंख्येयत्वमानमिति चेत्, उच्यते—क्षेत्रपल्योपमासंख्येयभागः । तेभ्योऽपि सासादना असंख्येयगुणाः, एतच्चोत्कृष्टपदे सत्त्वमधिकृत्य प्रोच्यते, ते हि कदाचित्सर्वथैव न प्राप्यन्ते, यदा तु प्राप्यन्ते तदा जघन्यत एको द्वौ वा, उत्कर्षतो देशविरतपरिमाणहेतुक्षेत्रपल्योपमासंख्येयभागापेक्षयाऽसंख्येयगुणक्षेत्रपल्योपमासंख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणा इति । तेभ्योऽपि मिश्रा असंख्येयगुणाः, तेषां सासादनपरिमाणहेतुक्षेत्रपल्योपमासंख्येयभागापेक्षयाऽसंख्येयगुणक्षेत्रपल्योपमस्यासंख्येयतमे भागे यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात् । एतेऽपि कदाचिद्भवन्ति, कदाचिन्न, तत्र यदा भवन्ति तदा जघन्यपदे एको द्वौ वा उत्कृष्टपदे यथोक्तप्रमाणा इति । तेभ्योऽविरतसम्यग्दृष्टयोऽसंख्येयगुणाः, मिश्रापेक्षया तेषाम-

कोटिमादाय तत्र ज्ञानत्वं वर्त्तते न वेति संशयो माभूत्, न चोक्तज्ञानं प्रमात्वरूपैककोटिनियतं, कस्यचित्पक्षज्ञानस्य हेतुज्ञानस्य च प्रमात्मकत्वेन कस्यचिच्चाप्रमात्मकत्वेनानुभवादिति प्रामाण्याऽप्रामाण्यकोटिद्वयसद्भावेन तत्प्रकारकपक्षज्ञानविशेष्यकहेतुज्ञानविशेष्यकसंशयस्तु स्यादेवेत्यर्थज्ञानरूपपक्षस्य ज्ञानेऽपि संवादिप्रवृत्तिजनकत्वरूपहेतोर्ज्ञानेपि च प्रामाण्यनिश्चयोऽनुमानान्तरादेवाभ्युपगन्तव्य इति प्रामाण्यग्रहः परत एव स्यादिति चेत्, भवतु का नाम युक्तिसिद्धे नो हानिः, न चैवं तर्ह्यनवस्थेति वाच्यम्, पक्षादिज्ञानमात्रमनुमित्यङ्गं, तत्र प्रामाण्यसंशये सति तन्निश्चयः कर्त्तव्यः, नच सर्वत्र तथेति तस्यानुमित्यनङ्गत्वेन तदभावेऽप्यर्थज्ञानधर्मिकप्रामाण्यानुमितिसम्भवादित्याशयवतां प्राचाम्मतमाह प्रामाण्यनिश्चयस्त्विति, तस्यापि जागरसाक्षात्काररूपलिङ्गधर्मिज्ञानस्यापि, अपिना अनुमानफलीभूतानुमितेरुपग्रहः। इत एव विशेषादिति, द्वैताभावेनैककोटिनियतत्वविशेषादेवेत्यर्थः, तद्व्याप्यवतिधर्मिणि तत्तदभावरूपद्वैतस्य सम्भवे तद्व्याप्यवत्त्वमेव न स्यादितिभावः। तादृशस्य विशेषदर्शननियतस्य, अस्यैव फलितमाचार्योक्त्युपनिबन्धनेनाह विशेषदर्शनग्रस्तत्वेनेति, टीकोक्तेः न्यायवार्त्तिकतात्पर्यटीकोक्तेः, ननु प्रामाण्यरूपैककोटिनियतः किं लक्षणो विशेष इत्याशङ्कायामाह विशेष इति, अयम्भावः अनुमितौ लिङ्गभानपक्षे लिङ्गोपहितलैङ्गिकस्यैवानुमितौ भासमानतया वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्येवानुमितिः, तदनुव्यवसायोऽपि वह्निव्याप्यधूमवति पर्वते वह्निमनुमिनोमीत्याकारक एव, तत्र च भासमानस्य व्याप्यवति व्यापकज्ञानत्वस्य व्यापकवति व्यापकप्रकारकत्वव्याप्यत्वाद् वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्यनुमितिः प्रमारिमकैवेति तेन निश्चीयते, यतः पर्वते वह्निव्याप्यस्य धूमस्य सत्त्वे तद्व्यापकस्य वह्नेरवश्यं सत्त्वमिति वह्निव्याप्यधूमवति पर्वते वह्न्यभावो नास्तीत्यवधार्यते, तथा चोक्तानुमितिर्वह्निमत्येव पर्वते वह्निप्रकारिका, नतु तदभाववति तत्प्रकारिकेति तद्गत-

(मलय०)—तदेवमुक्तमल्पबहुत्वं, तदभिधानाच्च कृता सत्पदादिप्ररूपणा। अतीवगहनाप्येषा, सत्पदादिप्ररूपणा। प्रज्ञापनाप्रसादेन, विवृता लेशतो मया ॥१॥ यदुदितमल्पमतिना, किमपि विरुद्धं जिनागमवचोभिः। विद्वद्भिस्तत्त्वज्ञैः, प्रसादमाधाय तच्छोध्यम् ॥२॥ साम्प्रतं यदुक्तं 'चउदसविहावि जीवा' इति, तच्चतुर्दशत्वं जीवानां प्रतिपादयन्नाह—सूक्ष्माः सूक्ष्मनामकर्मोदयिनः, इतरे बादरा बादरनामकर्मोदयिनः एकेन्द्रियाः, तथा संज्ञ्यसंज्ञिभेदभिन्नाः पञ्चेन्द्रियाः 'सबितिचऊ' सद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाः, एवं सप्त जीवसङ्घाता भवन्ति। एते च सर्वेऽपि प्रत्येकं पर्याप्तापर्याप्तभेदेन भिद्यमाना द्विधा, ततः सर्वसंख्यया चतुर्दशग्रामाः प्राणिसङ्घाता भवन्ति। एते च प्रागेव सप्रपञ्चं प्ररूपिताः, इति नेह भूयः प्ररूप्यन्ते ॥८२॥

संज्ञिपर्याप्तकस्य भूयश्चतुर्दश भेदानाह—

**मिच्छा सासणमिस्सा अविरयदेसा पमत्तअपमत्ता। अपुव्वबायरसुहुमोवसंतखीणा सजोगियरा॥८३॥**

(स्वो०)—मिथ्यादृष्टिः सास्वादनः, सम्यग्मिथ्यादृष्टिः, अविरतसम्यग्दृष्टिः, देशविरतः, प्रमत्तयतिः, अप्रमत्तयतिः, निवृत्तिः अपूर्वकरणो वा, अनिवृत्तिबादरो [वा], सूक्ष्मकषायः, उपशान्तकषायः, क्षीणकषायः, सयोगी, अयोगी, कषायशब्दलोपादिति समासार्थः। "जीवाइपयत्थेसुं, जिणोवदिट्ठेसु जा असद्दहणा। सद्दहणाऽविय मिच्छा, विवरीयपरूवणा जा य ॥१॥ संसयकरणं जंपि य, जो तेसु अणायरो पयत्थेसु। तं पञ्चविहं मिच्छं तद्दंसी मिच्छादिट्ठीओ ॥२॥ उवसमअद्धाएँ ठिओ मिच्छमपत्तो तमेव गंतुमणो। सम्मं आसायन्तो सासायणगो मुणेयव्वो ॥३॥ जह गुडदहीणि विसयायभावरहियाणि होंति मीसाणि। भुञ्जन्तस्स तहोभयदिट्ठीए मीसदिट्ठीउ ॥४॥ तिविहेवि हु सम्मत्ते, थोवावि ण विरति जस्स कम्मवसा। सो अविरओ त्ति भण्णइ, देसो पुण देसविरईए ॥५॥ विगहाकसाय-

पक्षतादीति पक्षधर्मतादीत्यर्थः, आदिपदेन व्याप्त्यादेरुपग्रहः, तत्रापीति पक्षधर्मतादिज्ञानेऽपीत्यर्थः। एवंभूतमिति धर्मिज्ञानादि प्रामाण्यात्मकैककोटिनियतमेवोपजायत इति तत्प्रामाण्यं तद्ग्राहकसामग्र्या गृह्यत एवेत्येवं ज्ञातुमशक्यमिति कुतो न प्रामाण्यसंशय इति भावः। द्वितीयपक्ष एवाश्रीयते, तत्र विशेषोऽपि न संशयैककोटिप्रामाण्यात्मक एव, किन्तु तद्व्याप्यादिरपि, तद्दर्शनान्न प्रामाण्यसंशय इत्याशयेन समाधत्ते, न, नहीति, व्याप्यादिदर्शनमपीति, अत्र लिङ्गव्यत्यासेन विपरीतशङ्काप्रतिबन्धकमित्यनुषज्यते। प्रकृतेऽनुव्यवसायधर्मिज्ञानादौ तदनुव्यवसायव्यक्तित्वेन सहैककोटिनियतत्वस्य यद्यपि अन्यत्र सहचारादिग्रहाभावाद् व्याप्तिज्ञानं न संभवति, तथापि यद्यदनुव्यवसायजातीयं तत्तदेककोटिनियतं यथासंप्रतिपन्नोऽनुव्यवसायः, अनुव्यवसायजातीयं न प्रकृतधर्मिज्ञानमित्येवं तत्सम्भवत्येवेत्याह व्याप्तिज्ञानस्येति, अस्याऽप्रवृत्तावपीत्यनेन प्रवृत्तिरित्यनेन चान्वयः, विशिष्येति तत्तद्व्यक्तित्वादिरूपेणेत्यर्थः। यमुपाधिमादायेत्यत्रोपाधेरनुगतधर्मार्थत्वात् स क इत्याशङ्कायामाह तज्जातीयत्वं हीति, यथानुव्यवसायजातीयत्वं विषयांशे प्रामाण्यरूपैककोटिनियतं तथा धर्मिज्ञानत्वं व्याप्यवद्विशेष्यकव्यापकज्ञानत्वं च प्रामाण्यरूपैककोटिनियतमिति धर्मिज्ञाने वह्निव्याप्यधूमवत्पर्वतविशेष्यकवह्निप्रकारकानुमितौ च प्रामाण्यनिश्चयादेव न प्रामाण्यसंशय इत्याशयेनाह—

इदमुपलक्षकं धर्मिज्ञानत्वव्याप्यवद्विशेष्यकव्यापकज्ञानत्वयोर्द्वयोरपीति दीधितिकारः। धर्मिलिङ्गज्ञानयोरप्यनुव्यवसायजातीयस्यैककोटिनियतत्वेन व्याप्तिग्रहणादेककोटिनियतत्वं निश्चीयत इति नारायणः। सामान्यतः प्रमाणत्वनिश्चयेऽपि विशेषतः कथं न सन्देह इति चेत्, यथा धूमत्वावच्छेदेन वह्निव्याप्यत्वनिश्चयेऽयं धूमो वह्निव्याप्यो न वेति, यथा वा करचरणादिकं स्थाणुत्वाभावव्याप्यमिति निश्चये करचरणादिमानिति ग्रहेऽयं

विबन्धकाः । अयोगिकेवली तु हेत्वभावादबन्धकः । बन्धकाश्च बन्धव्यमन्तरेण न कथञ्चनापि भवन्ति । ततो बन्धव्यमाह–क्रियते इति कर्म, वक्ष्यमाणस्वरूपं, मूलोत्तरभेदं मूलभेदोत्तरभेदभिन्नं बन्धव्यं बन्धनीयं, मूलभेदसंख्यां विशेषणद्वारेणाह–अष्टविधमष्टप्रकारं मूलभेदसंख्यापेक्षया, उत्तरभेदसंख्यापेक्षया अष्टपञ्चाशच्छतप्रकारम् । तांश्च मूलभेदानुत्तरभेदांश्च क्रमेण साधयामः कथयामः, तांश्च कथ्यमानान् निशमयत आकर्णयत ॥८४॥

॥ इति श्रीमलयगिरिविरचितायां पञ्चसङ्ग्रहटीकायां द्वितीयं बन्धकप्ररूपणाभिधं द्वारं समाप्तम् ॥

समाप्तमिदं पञ्चसंग्रहटीकायां बन्धकमार्गणाभिधानं द्वितीयं द्वारं ।

भवन्ति चात्रेति यदि धर्मिज्ञानं व्यभिचरेत्तदा निरालम्बनमसदालम्बनं वा भवेदिति तर्कघटकीभूतस्यापादकस्य व्यभिचरेदित्यस्यार्थमाह तद्विषयकमिति धर्मिविषयकमित्यर्थः। निरालम्बनमिति निर्विषयं भवेदित्यर्थः, स्वमतेन न्यायमतेन, ननु न्यायमते निर्विषयत्वं न क्वचित्प्रसिद्धमिति कथं ज्ञाने तदारोपयितुं शक्यमिति चेत्, घटादावेव तत्प्रसिद्धमिति जानीहि। बौद्धनयेनासत्ख्यात्यङ्गीकारान्नारोप्याऽप्रसिद्धिर्दोषावहेत्याशयेनाह असदालम्बनमिति। नचास्ति निरालंबनमसदालंबनं वा धर्मिज्ञानं, तथाच व्यभिचारीत्याह निषिद्धमिति। बौद्धमते व्यभिचरेदित्यापादके ज्ञानत्वे सतीति विशेषणेन घटादावसदालम्बनत्वस्यापाद्यस्याऽभाववति धर्मिविषयकत्वाभावरूपव्यभिचारित्वस्यापादकस्य सत्त्वेऽपि न व्यभिचार इत्याह तेनेति। यदि धर्मिज्ञानं व्यभिचरेत्तदा निरालम्बनत्वासदालम्बनत्वान्यतरवत्स्यात्, नच घटादौ व्यभिचारः, अन्यतरान्तर्गतस्य निरालम्बनत्वस्य तत्र सत्त्वात् इत्येवमर्थं धर्मिज्ञानं व्यभिचरेन्निरालम्बनमसदालम्बनं वा भवेदित्यस्य कश्चिदाहेत्याह अन्यतरत्वेनेति। यद्यनुव्यवसायो व्यभिचरेत्तदाऽर्थकर्मको न स्यादिति तर्के आपादकस्यार्थमाह ज्ञानविषयक इति, आपाद्यस्यार्थमाह—

अर्थप्रकरणकर्मको न स्यादित्यर्थः। इच्छादेरप्यर्थप्रकरणतामते तु इच्छाद्यविषयकत्वेनापादकं विशेषणीयम्, यदि तज्जातीयं व्यभिचरेदव्यभिचारो न क्वचिद्व्यवतिष्ठेत, तज्जातीयं व्याप्यवति व्यापकज्ञानं गन्धवति पृथिवीत्वप्रकारकं ज्ञानं, यदि पृथिव्यां पृथिवीत्वप्रकारकं न स्यात् गन्धवति पृथिवीत्वप्रकारकं न स्यात्, यदि पृथिवीमात्रविशेष्यकं न स्यात् गन्धवन्मात्रविशेष्यकं न स्यात्, यदि पृथिवीविशेष्यकं न स्यात् गन्धवद्विशेष्यकं न स्यादित्यादीत्यर्थः।

मुपक्रान्ताः, मूलभेदेषु ज्ञातेषु सत्सूत्तरभेदाः सुखेन ज्ञातुं शक्यन्ते, ततः प्रथमतो मूलभेदानुपदर्शयति–ज्ञायते परिच्छिद्यते वस्त्वनेनेति ज्ञानं, सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधस्तस्य, तथा दृश्यतेऽनेनेति दर्शनं, सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधः, उक्तं च—जं सामन्नग्गहणं भावाणं नेव कट्टुमागारं। अविसेसिऊण अत्थे, दंसणमिइ वुच्चए समए ॥१॥इति तस्य, चः समुच्चये, आव्रियते आच्छाद्यतेऽनेनेत्यावरणं, मिथ्यात्वादिसचिवजीवव्यापाराहृतकर्मवर्गणान्तःपाती विशिष्टपुद्गलसमूहः। तथा वेद्यते आह्लादादिरूपेण यदनुभूयते तद्वेदनीयं 'कर्मण्यनीयः', यद्यपि च सर्वं कर्म वेद्यते, तथापि पंकजादिशब्दवत् वेदनीयशब्दस्य रूढिविषयत्वात्सातासातरूपमेव कर्म वेदनीयमित्युच्यते, न शेषम्। तथा मोहयति सदसद्विवेकविकलं करोत्यात्मानमिति मोहनीय 'कृद्बहुलं'इति वचनात्कर्त्तर्यनीयः। तथा एति आगच्छति प्रतिबन्धकतां स्वकृतकर्मावाप्तनरकादिगतिनिःक्रमितुमनसो जन्तोरित्यायुः, अथवा आसमन्तादेति गच्छति भवाद्भवान्तरसंक्रान्तौ जन्तूनां विपाकोदयमित्यायुः, उभयत्राप्यौणादिक उसुप्रत्ययः। तथा नामयति गत्यादिपर्यायानुभवनं प्रति प्रवणयति जीवमिति नाम। तथा गूयते शब्द्यते उच्चावचैः शब्दैर्यत् तद्गोत्रं, उच्चनीचकुलोत्पत्तिलक्षणः पर्यायविशेषः, तद्विपाकवेद्यं कर्मापि गोत्रं कारणे कार्योपचारात्, यद्वा कर्मणोऽपादानविवक्षा, गूयते शब्द्यते उच्चावचैः शब्दैरात्मा यस्मात्कर्मण उदयप्राप्तात्तद्गोत्रम्। तथाशब्दः क्रमसंसूचनार्थः। जीवं दानादिकं चान्तराव्यवधानापादनाय एति गच्छतीत्यन्तरायं, जीवस्य दानादिकं कर्तुं न ददातीत्यर्थः। च शब्दोऽवधारणे एता एवाष्टौ प्रकृतयो मूलप्रकृतयः। प्रकृतिशब्दश्चेह भेदपर्यायः, व्यवह्रियते च प्रकृतिशब्दो भेदवाची। यदाह भाष्यकृत्—"अहवा पयडी भेओ इति।" ततोऽयमर्थः, एते एवाष्टौ मूलभेदाः। अत्राह—नन्वित्थं ज्ञानावरणाद्युपन्यासे किंचिदस्ति प्रयोजनं? उत यथाकथंचिदेष प्रवृत्तः? अस्तीति ब्रूमः। किं तदिति चेत्, उच्यते–इह ज्ञानं दर्शनं च

पृथिवीत्वव्याप्येति, पृथिव्यसिद्ध्या पृथिवीभिन्नाऽसिद्धाविति, प्रतियोगिसिद्ध्यधीना भेदसिद्धिरिति पृथिव्यात्मकप्रतियोग्यऽसिद्ध्या तद्भेदासिद्धेस्तदाश्रयलक्षणपृथिवीभिन्नाऽसिद्धावित्यर्थः। घटज्ञानं प्रमा कम्बुग्रीवादिमत्त्ववद्विशेष्यकघटत्वप्रकारकज्ञानत्वादित्यत्र न व्यभिचारस्संभवति, यतः कम्बुग्रीवादिमत्त्ववद्विशेष्यकस्यापि घटत्वप्रकारकज्ञानस्य घटविशेष्यकत्वाभावे न घटस्य क्वचित्सिद्धिरिति घटासिद्धौ घटभिन्नस्याप्यसिद्धेः क्व घटत्वज्ञानमप्रमा स्यादित्याह एवमन्यत्रापीति। एतेनेति क्वचित्प्रमात्वसिद्धावेव भ्रमत्वसिद्धिसम्भवेन वक्ष्यमाणनिरासहेतुना चेत्यर्थः। जागरप्रत्ययत्वरूपेण सर्वेषां जागरप्रत्ययानां पक्षत्वे भ्रमत्वे साध्ये तत्साध्यकानुमितेः प्रामाण्ये पक्षान्तर्गतायां तस्यामेव बाधान्नावच्छेदकावच्छेदेनानुमितिः, अप्रामाण्ये तु तस्यास्सुतरां भ्रमत्वाऽसाधकत्वमित्याह याचतामिति, जागरप्रत्ययानामिति दृश्यम्, तथात्वे भ्रमत्वे साध्ये, मया स्वहस्तेन स्वशिरश्छिन्नमित्यादि ज्ञानं तत्सर्वं स्वप्नावस्थायां बाधितविषयकमेव, तत्र संवादस्तु काकतालीयः, जागरावस्थायां तु ज्ञानमात्रं न बाधितविषयकं किन्तु किञ्चिदेव, संवादोऽपि बहुधेत्यनयोर्लक्षणमित्युत्तरयति—

कर्तृकर्मकरणदेशकालप्रबन्धबाधः काकतालीयसंवादवान् स्वप्नस्य, प्रबन्धे काकतालीयः कस्यचिदेव विषयस्य बाधो जागरस्येति, एतेन बाध्यप्रबन्धोऽवस्थाविशेषः स्वप्नः, प्रबन्धबाधकादिर्बाध्यप्रबन्धान्तो जागरितमित्युक्तं भवतीत्येषा दिग्। दिगर्थस्तु स्वप्नवहनाडीमनःसंयोगजन्यं तन्नाडीसंयुक्तमनोजन्यं वा ज्ञानं स्वप्नः। स्वप्नवहत्वं तु नाडीगतो विशेषः, स्वप्नत्वं मानसत्वव्याप्यो जातिविशेषः, विनैव च स्मरणमदृष्टोद्बोधितसंस्कारसहितान्मनसस्तादृशं ज्ञानमुत्पद्यते, चाक्षुषत्वादिवदनुमितित्वादिकमपि संस्कारवशात्तत्रारोप्यते, स्वप्ने परा-

गोत्रोदये चोच्चैः कुलोत्पन्नस्य प्रायो दानलाभान्तरायादिक्षयोपशमो भवति; राजप्रभृतीनां प्राचुर्येण दानलाभादिदर्शनात्, नीचैःकुलोत्पन्नस्य तु दानलाभान्तरायाद्युदयः, अन्त्यजादीनां तथा दर्शनात्, तत एतदर्थप्रतिपत्त्यर्थं गोत्रानन्तरमन्तरायग्रहणम् ॥१॥

उत्तरप्रकृतिसङ्ख्यामाह—

**पंच नव दोन्नि अट्ठावीसा चउरो तहेव बायाला। दोन्नि य पंच य भणिया पयडीओ उत्तरा चेव ॥२॥**

(स्वो०)—'पञ्च नव द्व्यष्टाविंशतिश्चत्वारः तथैव द्वौ चत्वारिंशत् द्वौ च पञ्च, च भणिताः प्रकृतय उत्तराश्चैवेति' पदानि। पदार्थस्तु—यथासंख्येन ज्ञानावरणीयस्य पञ्चोत्तरभेदाः, दर्शनावरणीयस्य नव, वेदनीयस्य द्वौ, मोहनीयस्य अष्टाविंशतिर्भेदाः, आयुष्कस्य चत्वारः, नाम्नो द्वाचत्वारिंशद्, गोत्रस्य द्वौ, अन्तरायस्य पञ्च, तथैव भणिता उत्तरप्रकृतयो येन क्रमेणाभिहिता मूलप्रकृतय इति योजना, पथमचकारः सर्वप्रकृतीनां प्रत्येकमसंख्येयव्यक्तिख्यापकः, द्वितीयचकारो नामकर्मण उत्तरभेदानामप्युत्तरभेदसंसूचकः, तृतीयचकारः समुच्चयार्थः। ततश्च एवमेवैताः प्रकृतयो भणिताः, नान्यथेति गाथार्थः ॥२॥

(मलय०)—तदेवमुक्ता मूलप्रकृतयः। साम्प्रतमुत्तरप्रकृतीः संख्याद्वारेणाह—इह यथासंख्येन ज्ञानावरणादीनामुत्तरप्रकृतिसंख्या, सा चैवं—पञ्च ज्ञानावरणस्योत्तरप्रकृतयः, नव दर्शनावरणस्य, द्वे वेदनीयस्य, अष्टाविंशतिर्मोहनीयस्य, चतस्र आयुषः, तथैवेति क्रमेण यथासंख्यसूचने नाम्नो द्विचत्वारिंशत्, द्वे च गोत्रस्य, पञ्च पुनरन्तरायस्य, भणिताः प्रतिपादिताः, पूर्वसूरिभिरुत्तराः प्रकृतयः ॥

तानेवोत्तरभेदान् वक्तुकाम आह—

**मइसुयओहीमणकेवलाण आवरणयं भवे पढमं। तह दाणलाभभोगोवभोगविरियंतराययं चरिमं ॥३॥**

तथ्यत्वे किमिति शीघ्रं भवविच्छेदेच्छुभिरुपेक्षितं तदित्याशङ्कायां तत्र हेतुमाह मन्दप्रयोजनत्वादित्यादिना। अपरीक्ष्यैव विश्वस्योपेक्षायां जागरप्रत्ययो भ्रान्तः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्यादिबौद्धोक्तन्यायाभासावकाशे कस्यचिदेवमपि बुद्धिस्स्यात् यच्छून्यत्वादेव जगत्परीक्षणं न कृतमिति तथाच न्यायमार्गविप्लवस्स्यात्, विश्वस्य तथ्यत्वेन परीक्षणं कृत्वैव पश्चात्तुषवत्संसारेऽसारे भोगभाजां भोगिभोगा इव भोगा ईक्षणेनेक्षिता भयप्रदाः कायेनोपभुक्ताः मधुलिप्तखड्गधारालेहनमिव कटुविपाकान्ता इति ज्ञात्वोपेक्षणे न्यायमार्गविप्लवो नेत्याशयेनोत्तरयति सहसैवेति, सहसैव परीक्षामकृत्वैव, तदुपेक्षायाम् विश्वस्योपेक्षणे, तथा च न्यायमार्गविप्लवे च। चतुर्थचरणमवतारयति—

तदेवं न्यायनयेन भग्नं बाह्यार्थभङ्गप्रयुक्तं नैरात्म्यमित्ययमपि त्वन्नयामृतबिन्दूद्गार इत्युपसंहारव्याजेन भगवन्तमुद्दिश्याह स्तुतिकारः—"नैरात्म्यमित्युपहतं नयवल्गितैस्ते" नयवल्गितैर्न्यायिनययुक्तिभिः, वल्गितपदेन परदूषणमात्रावेशो न तु माध्यस्थ्यं नैयायिकानामिति सूच्यते ॥५१॥

तदेवमित्यादिना ॥५१॥

बाह्ये ज्ञानात्मताया न किमपि गमकं बौद्ध! ते न्यायमार्गे<br>
नो वा दोषस्य पोषोऽवयविनि घटते नाप्यणौ बाह्यभूते॥<br>
तत्त्वं स्याद्वादमार्गं श्रयसि यदि तदा शोभयन् स्वस्य नीतिम्<br>
नूनं कीर्त्या कथायां सितपटलसितो वीक्ष्यसेऽनन्यदृष्ट्या ॥ १ ॥

महाफलमिति जानन्नपि दातुं नोत्सहते तद्दानान्तरायम्। तथा यदुदयवशाद्दानगुणेन प्रसिद्धादपि दातुर्गृहे विद्यमानमपि देयमर्थजातं याञ्चाकुशलोऽपि गुणवानपि याचको न लभते तल्लाभान्तरायम्। तथा यदुदयवशात्सत्यामपि विशिष्टाहारादिप्राप्तावसति च प्रत्याख्यानपरिणामे वैराग्ये वा, केवलकार्पण्यान्नोत्सहते भोक्तुं तद्भोगान्तरायम्। एवमुपभोगान्तरायमपि भावनीयम्। नवरं भोगोपभोगयोरयं विशेषः–सकृद्भुज्यते इति भोगः, पुनः पुनर्भुज्यते इत्युपभोगः। उक्तं च—"सइ भुज्जइ त्ति भोगो, सो पुण आहारपुप्फमाइओ। उवभोगो उ पुणो पुण, उवभुज्जइ वत्थवणियाई ॥१॥"। तथा यदुदयवशात्सत्यपि नीरुजि शरीरे, यौवनिकायामपि वर्त्तमानोऽल्पप्राणो भवति, यद्वा बलवत्यपि शरीरे, साध्येऽपि प्रयोजने हीनसत्त्वतया न प्रवर्त्तते तद्वीर्यान्तरायम् ॥३॥

दर्शनावरणस्योत्तरप्रकृतीरभिधातुकाम आह—

**नयणेयरोहिकेवल दंसण आवरणयं भवे चउहा। निद्दापयलाहिं छहा निद्दाइदुरुत्तथीणद्धी ॥४॥**

(स्वो०)—'नयनेतरावधिकेवलदर्शनावरणकं भवेच्चतुर्द्धा। निद्राप्रचलाभ्यां षोढा निद्रादिद्विरुक्तस्त्यानर्द्ध्य, इति पदानि। पदार्थस्तु–दर्शनशब्दः प्रथमार्धभेदेषु प्रत्येकं सम्बन्धनीयः, नयनाभ्यां दर्शनं नयनदर्शनं तस्यावरणं नयनदर्शनावरणम्, 'इतरत्' शेषेन्द्रियैर्दर्शनं अनयनदर्शनं तस्यावरणं अनयनदर्शनावरणं अचक्षुर्दर्शनावरणमितियावत्, एवमवधिदर्शनावरणीयं केवलदर्शनावरणीयं, एवं दर्शनावरणीयं 'चतुर्द्धा' चतुष्प्रकारं भवति, चतुःसंख्यदर्शनावरणग्रहणेऽन्यत्राप्यासामेव ग्रहणं प्रतिपत्तव्यम्। निद्राप्रचलाभ्यां सहैता एव चतस्रः षड् भवन्ति, षड् ग्रहणे एता एव षड् प्रतिपत्तव्याः, निद्रादिद्विरुक्तप्रकृती च स्त्यानर्द्धिश्च निद्रादिद्विरुक्तस्त्यानर्द्ध्यः, किमुक्तं भवति ?–निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिरेवं स्त्यानर्द्ध्युपलक्षितं त्रिकमिति मन्तव्यम्, सामान्यनिद्राग्रहणात् निद्रापञ्चकं

|| अथ श्रीकल्पलतिकाविवृत्यलङ्कृते न्यायखण्डखाद्याऽपरनाममहावीरस्तवप्रकरणे ||

# || चतुर्थो विभागः ||

## || मङ्गलाचरणम् ||

यत्स्याद्वादार्थमुक्ता परनयनिरता तर्कनद्धाऽपि वाणी, नोऽनेकान्तैकरूपे जगति निजपदस्थापने कापि योग्या ||
तं श्रीवीरं नमामोऽमितनयभजनायोजनालोकनोत्थाऽनेकान्तत्वावमर्शाकलितमतिगतिप्राप्तये नीतिवादे ||१||
यस्मात्तत्त्वार्थसिद्धिर्व्यपगतकुनया नीतिशुद्धिप्रवीणा, स्वेष्टार्थाऽऽह्वानदक्षा सुकृतिततिमिता मानसंवादकान्ता |
तं स्याद्वादाख्यमानं निखिलविषयगं केवलालोकजातं, धीराः स्वाभीष्टसिद्ध्यै श्रयत जिनकृपालोकिता नीतिभाजः ||२||

तेऽपि मध्यस्थदृष्ट्या शिक्षणीया इति प्रमाणावतारेण भगवानभिष्टूयते—

द्विपञ्चाशत्तमश्लोकमवतारयति, तेऽपीत्यादिना,

तेऽपि नैयायिका अपि | शिक्षणीया इति शिक्षयितुं योग्या इत्यर्थः, स्याद्वादिनेति शेषः |

स्याद्वादतस्तव तु वाच्यमथान्तरङ्गं, सल्लक्षणं शबलतां न जहाति जातु ||
एकत्वमुल्लसति वस्तुनि येन पूर्णे, ज्ञानाग्रहादिकृतदैशिकभेद एव ||५१||

दर्शनावरणं केवलदर्शनावरणं चेति। तत्र नयनाभ्यां दर्शनं नयनदर्शनं, तस्यावरणं नयनदर्शनावरणम्। इतरैर्नयनवर्जैरिन्द्रियैर्मनसा च
दर्शनमितरदर्शनं, तस्यावरणं इतरदर्शनावरणं, अचक्षुर्दर्शनावरणमित्यर्थः। अवधिरेव दर्शनमवधिदर्शनं, तस्यावरणमवधिदर्शना-
वरणम्। केवलमेव दर्शनं केवलदर्शनं ,तस्याव'णं केवलदर्शनावरणम्। तथा तदेव दर्शनावरणचतुष्टयं निद्राप्रचलाभ्यां सह षोढा भवति,
तत्र द्रा कुत्सायां, नियतं द्राति कुत्सितत्वमविस्पष्टत्वं गच्छति चैतन्यं यस्यां स्वापावस्थायां सा निद्रा, नखच्छोटिकामात्रेण यस्यां प्रबोध
उपजायते, सा स्वापावस्था निद्रा, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रा, कारणे कार्योपचारात्। तथा उपविष्ट ऊर्ध्वस्थितो वा प्रचलति
घूर्णते यस्यां स्वापावस्थायां सा प्रचला, तद्विपाकवेद्या कर्मप्रकृतिरपि प्रचला। दर्शनावरणषट्कग्रहणे च सर्वत्रापीदमेव दर्शनावरण-
षट्कं ग्राह्यम्। एतदेव दर्शनावरणषट्कं निद्रादिद्विरुक्तप्रकृतिस्त्यानर्द्धिभिः सहितं नवधा द्रष्टव्यमिति शेषः, सूत्रे च विभक्तिलोप आर्ष-
त्वात्, निद्रादीति निद्राप्रचलाशब्दौ द्विरुक्तौ वाचकत्वेन ययोस्ते निद्रादिद्विरुक्ते निद्रानिद्रा प्रचलाप्रचला चेत्यर्थः। तत्र निद्रातोऽ-
तिशायिनी निद्रा निद्रानिद्रा, मध्यमपदलोपीसमासः, तस्यां हि चैतन्यस्यात्यंतमस्फुटीभूतत्वाद्बहुभिर्घोलनाप्रकारैः प्रबोधो भवति,
ततः सुखप्रबोधहेतुनिद्रातोऽस्या अतिशायिनीत्वं, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रानिद्रा, उपचारात्। तथा प्रचलातोऽतिशायिनी प्रचला
प्रचलाप्रचला, सा हि चंक्रमणादिकमपि कुर्वत उदयमधिगच्छति, ततःस्थानस्थितस्वप्तृभवप्रचलापेक्षया अस्या अतिशायिनीत्वम्। तथा
स्त्याना पिंडीभूता शुद्धिरात्मशक्तिरूपा यस्यां स्वापावस्थायां सा स्त्यानर्द्धिः, तद्भावे हि प्रथमसंहननस्य केशवार्द्धबलसदृशी शक्तिरु-
पजायते। तथा च श्रूयते प्रवचने—क्वचित्प्रदेशे कोऽपि क्षुल्लको विपाकप्राप्तस्त्यानर्द्धिनिद्रासहितो द्विरदेन दिवा खलीकृतः, ततस्तस्मिन्
द्विरदे बद्धाभिनिवेशो रजन्यां स्त्यानर्द्ध्युदये वर्त्तमानः समुत्थाय तद्दंतयुगलमुत्पाट्य स्वोपाश्रयद्वारि च प्रक्षिप्य पुनः प्रसुप्तवानित्यादि।

एकावयवसहितस्योपलम्भेऽन्यावयवसहितस्यानुपलम्भोऽवयवगतोपलम्भानुपलम्भयोरवयविनि सञ्चारादभिधीयत इति न ताभ्यां कथमपि तद्भेद इति यत् नैयायिकैरुक्तम्, तदयुक्तं, यो मया देशेन दृष्टः स एव देशेन न दृष्ट इत्युद्देश्यविधेयभावेन सोऽयमित्यत्रैवैकत्रोभयपरामर्शाद्, भावाभावत्वाभ्यां विरुद्धयोर्ग्रहणाग्रहणयोरेकत्रायोगात् परम्परासम्बन्ध एवावयविनि सञ्चारार्थ इति चेत्, तर्हि वृक्षो देशेन कपिसंयुक्तो देशेन नेत्यत्रापि परम्परासम्बन्ध एव संसर्गः स्यात्, एवं देशेनेति तत्र तृतीयार्थानुपपत्तिरिति चेत्, सा प्रकृतेऽपि तुल्या, अवच्छेदकभेदेन विरोधपरिहारोऽप्युभयत्र तुल्यः, स्कन्धशक्तस्य घटवृक्षादिपदस्य देशपरत्वेनोपपादनमपि तथा,

उद्देश्यविधेयभावेनेति यो मया देशेन दृष्ट इत्युद्देश्यत्वेन स एव देशेन न दृष्ट इति विधेयत्वेन चेत्यर्थः। सोयमित्यत्रैवेति सोयमिति प्रत्यभिज्ञाने अयमित्यस्योद्देश्यत्वेन स इत्यस्य च विधेयत्वेनेवेत्यर्थः। एकत्र अवयविनि, उभयपरामर्शादिति दृष्टत्वादृष्टत्वोभयनिश्चयादित्यर्थः, ग्रहणाग्रहणे भावाभावरूपत्वाद् घटतदभाववद्विरुद्धे इत्येकत्र तयोर्वृत्तित्वासम्भवेन सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामत इति न्यायात् साक्षात्सम्बन्धेन तत्तदवयवगतयोरेव तयोस्स्वाश्रयसमवेतत्वरूपपरम्परासम्बन्धेनावयविन्युपचारात्तत्रौपचारिक एवोक्तप्रत्यय इति नावयविभेदसाधनप्रत्यल इत्याशङ्कते—भावाभावत्वाभ्यामिति, अस्मद्गुरुचरणास्तु परम्परासम्बन्ध एवेत्याद्याशङ्काग्रन्थ इत्याहुः। वृक्षो देशेन कपिसंयुक्तो देशेन नेत्यत्रापि कपिसंयोगतदभावौ साक्षात्सम्बन्धेन तत्तद्देशे वर्त्तेते स्वाश्रयसमवेतत्वसम्बन्धेन चावयविनि प्रतीयेते इत्यपि स्यादिति प्रतिबन्द्योत्तरयति तर्हि वृक्ष इति, ननु वृक्षो देशेनेत्यादिप्रतीतौ परम्परासम्बन्धेन कपिसंयोगतदभावयोर्वृक्षे भानाभ्युपगमे तयोरव्याप्यवृत्तित्वं न

त्रिविधं दर्शनमोहनीयम्, एवमष्टाविंशतिविधं मोहनीयं भवति। एवं व्याख्याते कश्चिदाह–प्रथमं दर्शनमोहनीयस्यैवोपशमः क्षयो वा पश्चाच्चारित्रमोहनीयस्येतिकृत्वा तेनैव क्रमेणोपन्यासो घटते, नान्यथा, इत्यत्रोच्यते–चारित्रमोहनीयप्रकृतयः प्रतिपद्यमानचारित्राणां प्रतिपतितचारित्राणां वाऽप्राप्तचारित्राणां वा सर्वजीवानां सर्वा अपि अभिहितप्रमाणा भवन्ति, दर्शनत्रयं तु नैवम्, यतोऽनवाप्तसम्यक्त्वानां प्रतिपतितसम्यक्त्वानां च केषाञ्चिन्मिथ्यात्वमेवैकं भवति, न नित्यं दर्शनत्रयमिति, अस्यार्थस्य ख्यापनार्थमित्थमुपन्यासः। अन्यच्च–क्षायोपशमिकसम्यक्त्वचारित्रयोस्तु केषाञ्चिज्जीवानां युगपत् प्राप्तिश्चेष्यते, अतो न दोषः। षड्विंशतिविधं मोहनीयं ज्ञापितं चैवं भवति। आयुष्कशब्दः प्रत्येकं सम्बन्धनीयः, ततश्च सुरायुष्कं नरायुष्कं तिर्यगायुष्कं नारकायुष्कमेवं चायुःकर्म चतुर्भेदं भवति, अस्य चैवं क्रमोपन्यासोऽभिमतः प्राधान्याद्, अन्यथा भणने प्रयोजनं वाच्यम्। 'सातं' सुखं आल्हादरूपम्, असातं' तदेव विपर्यस्तं दुःखरूपमेवं वेदनीयं द्विभेदं। आह–यद्येवं ततः सातासातयोरभावेन तत्परमाणुक्षये सिद्धानां सुखदुःखाभावः, तेषां चात्यन्तिकं सुखमिष्यते, तच्च पापाणकल्पानां न घटते, अत्रोच्यते–ननु तेषामेव सुखं, यतस्तदपौद्गलिकं, यत्तु पौद्गलिकं तत्परमार्थतो न सुखं सुखाभासमेव तत्, यतो यदेव दुःखशमकं तदेव सुखं प्रतिभाति, न च तत्सुखं परमार्थतो, दुःखशमनहेतुत्वात्। एतदेव भाव्यते–यथा कश्चित् क्षुद्वेदनार्त्तो मोदकादिभिर्द्रव्यैः तदुपशमं कर्त्तुमारभते, तस्य च तैर्मोदकादिभिः स्तोकैः रसनोपकृतं दुःखं प्रभवति, किञ्चिच्च क्षुद्वेदनोपशमो, न च तत्सुखं, प्रभूतैश्च तैः क्षुद्वेदनोपशमः स्यात् न च तत्सुखं, तद्विसूचिकादिकृतं दुखं तु भवत्येव, क्षुद्वेदनोपशमप्रमाणैरपि तैस्तदुपशमो भवति, न च तत्सुखं, तद्भक्षणायासकृतं तु दुःखं भवत्येव, क्षुद्वेदनोपशमसमयाश्च सततं क्रमेण व्यवस्थिताः, प्रायः प्रकोपसमयश्चोत्तरकाले, अतोऽत्र संसारे दुःखमेवानुबद्धं, न सुखं, ततः सुखाभासमेव तत्परमार्थतः। अन्यैरप्युक्तम्–"सायासायाभावे न सुही सिद्धत्ति केइ मन्नंति। तं

दृष्टत्वादिप्रतीतेर्विभिन्नधर्मिगतदृष्टत्वादृष्टत्वादिधर्मविषयकत्वेनोपपादनेऽपि, उभयत्र प्रकारताद्वयनिरूपितविशेष्यताद्वयशालिबोधाऽभ्युपगमे इति, देशेन दृष्टो देशेन न चेत्यत्र दृष्टत्वनिष्ठप्रकारतानिरूपिततद्देशनिष्ठविशेष्यतानिरूपकस्यादृष्टत्वनिष्ठप्रकारतानिरूपितदेशान्तरनिष्ठविशेष्यतानिरूपकस्य च बोधस्य वृक्षो देशेन कपिसंयुक्तो देशेन न चेत्यत्र च कपिसंयोगनिष्ठप्रकारतानिरूपिततद्देशनिष्ठविशेष्यतानिरूपकस्य कपिसंयोगाभावनिष्ठप्रकारतानिरूपितदेशान्तरनिष्ठविशेष्यतानिरूपकस्य च बोधस्याभ्युपगम इत्यर्थः। विकलादेशीयप्रथमभङ्गार्थस्तुल्य एवेति–अत्र स्याद् दृष्ट एव, स्याददृष्ट एव, स्यादऽवक्तव्य एव, इति त्रयोभङ्गास्सकलादेशाः, संयुक्तास्तु चत्वारोऽन्त्या विकलादेशाः, तत्र यः प्रथमो भङ्गस्स्याद्दृष्टस्स्यादऽदृष्ट एवेति तदर्थस्तुल्यो भवतोऽस्माकं चेत्यर्थः, नयसप्तभङ्ग्या विकलादेशत्वं प्रमाणसप्तभङ्ग्यास्सकलादेशत्वमित्यादरे तु स्याद् दृष्ट एव स्याददृष्ट एवेत्यादिसप्तभङ्गात्मकविकलादेशस्य यः प्रथमभङ्गस्स्याद् दृष्ट एवेति तदर्थो भवतोऽस्माकं च समान एवेत्यर्थः, स चाऽस्माकमबाधक इति विकलादेशेनापि भिन्नप्रकारतानिरूपितभिन्नविशेष्यताकबोधस्य स्वीकारादितिभावः। प्रकारताभेदेऽपि न विशेष्यताभेद इत्यस्योपोद्बलकन्यायमाह एकत्र द्वयमिति न्यायेनेति, उभयप्रकारकैकविशेष्यकानुभवकलहे त्वेकैकप्रकारकैकैकविशेष्यकानुभवेऽपि कलहसम्भवेन विकल्पमात्रस्यैवोच्छेदापत्त्या निर्विकल्प एव विश्रामस्स्यादिति तन्मात्रमेव ज्ञानं स्यादित्याह—

अनुभवकलहे तु सर्वत्र निर्विकल्पके विश्रामः, न च सोऽपि सविकल्पसाधकयुक्त्या, निर्विकल्पकत्वसविकल्पकत्वाभ्यामपि सप्तभङ्गीप्रवृत्तेरेव वैनयिकप्रतीतिसिद्धत्वात्, ग्रहणाग्रहणयोरव्याप्यवृत्तित्वासिद्धेर्न संयोगतदभावप्रतिबन्दिग्रहणं युक्तमिति चेत्, न, इत एवानुभवात् तत्सिद्धेर्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयो-

(मलय०)—तदेवमुक्ता ज्ञानावरणदर्शनावरणान्तरायाणामुत्तरप्रकृतयः। ज्ञानावरणादीनि च घातिकर्माणि, ततो घातिकर्मप्रस्तावात्संप्रति मोहनीयस्योत्तरप्रकृतीरुपदर्शयति–इह मोहनीयं द्विधा–दर्शनमोहनीयं चारित्रमोहनीयं च। तत्र बहुवक्तव्यत्वात्प्रथमतश्चारित्रमोहनीयं निर्दिशति–षोडश कषाया नव नोकषायाः। कषायाः प्रागिरूपितशब्दार्थाः क्रोधमानमायालोभाः, ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुर्धा, ततः षोडश। तत्रानन्तं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः। उक्तं च"–अनंतान्यनुबध्नन्ति, यतो जन्मानि भूतये। ततोऽनन्तानुबन्ध्याख्याः, क्रोधा(संज्ञा)द्येषु नियोजिताः॥१॥" एषां च संयोजना इति द्वितीयं नाम, तत्रायमन्वर्थः–संयोज्यन्ते सम्बध्यन्तेऽसंख्यैर्भवैर्जन्तवो यैस्ते संयोजनाः। उक्तं च–"संयोजयंति यन्नरमनंतसंख्यैर्भवैः कषायास्ते। संयोजनतानन्तानुबन्धिता चाथ(प्य)तस्तेषां॥१॥"। तथा न विद्यते स्वल्पमपि प्रत्याख्यानं येषामुदयात्ते अप्रत्याख्यानाः। उक्तं च–"नाल्पमप्युत्सहेद्येषां प्रत्याख्यानमिहोदयात्। अप्रत्याख्यानसंज्ञाऽतो, द्वितीयेषु निवेशिता॥१॥"। तथा प्रत्याख्यानं सर्वविरतिरूपमाव्रियते यैस्ते प्रत्याख्यानावरणाः। आह च–"सर्वसावद्यविरतिः प्रत्याख्यानमुदाहृतं। तदावरणसंज्ञाऽतस्तृतीयेषु निवेशिता॥१॥"। तथा परीषहोपसर्गसन्निपाते सति चारित्रिणमपि सम् ईषत् ज्वलयन्तीति संज्वलनाः। उक्तं च–"संज्वलयंति यतिं यत्संविग्नं सर्वपापविरतमपि। तस्मात्संज्वलना इत्यप्रशमकरा निरुच्यन्ते (निरूप्यन्ते)॥१॥", अन्यत्राप्युक्तं–शब्दादीन् विषयान् प्राप्य संज्वलन्ति यतो मुहुः। अतः संज्वलनाह्वानं चतुर्थानामिहोच्यते॥१॥"। तथा नोकषाया इति, नोशब्दः साहचर्ये, ततः कषायैः सहचारिणः सहवर्त्तिनो ये ते नोकषायाः। कैः कषायैः सहचारिणः? इति चेद्, उच्यते–आद्यैर्द्वादशभिः। तथाहि–नाद्येषु द्वादशसु कषायेषु क्षीणेषु नोकषायाणामवस्थानसम्भवः, तदनन्तरमेव तेषामपि क्षपणाय क्षपकस्य प्रवृत्तेः। अथवा एते प्रादुर्भवन्तोऽवश्यं कषायानुदीपयन्ति, ततः कषायसहचारिणः।

त्वव्यापक एवाभ्युपगन्तव्य इति नाव्याप्यवृत्तित्वक्षतिरित्याह व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोरपीति, तथात्वादिति व्यापकत्वादित्यर्थः। अहं मां न जानामीति प्रतीतावहमित्यनेन कर्तृतयाऽऽत्मनो भानम्, मामित्यनेन कर्मतयाऽऽत्मनो भानम्, कर्मत्वञ्चात्र विषयत्वलक्षणं, विषयत्वस्य च संसर्गविधया भानपक्षे तदात्मकसंसर्गेणात्मनो ज्ञाधात्वर्थे ज्ञाने प्रकारत्वपक्षे च विषयतायामात्मनो विषयत्वस्य च निरूपकत्वसम्बन्धेन ज्ञाने भानं, तस्य च स्वनिष्ठप्रतियोगिताकत्वसंसर्गेण नञ्पदवाच्येऽभावे, तस्य स्वरूपसम्बन्धेनाहम्पदवाच्ये आत्मनि, तथाचोक्तप्रतीतावहं मामित्येकवचनान्तप्रथमाद्वितीयाविभक्तिप्रकृत्यस्मच्छब्दस्यात्मपरत्वेन साऽऽत्मविषयिका चेत्कथमात्मविषयकज्ञानाभावविषयिका, तथापि तथाभ्युपगमेऽऽत्मनि ज्ञानाज्ञानोभयस्वभावत्वं विरुद्धमापद्येतेतिमीमांसकाशङ्कायामहं मां न जानामीत्यत्र विशेपरूपेणेति शेषं कृत्वा शरीरभिन्नत्वव्यापकत्वादिविशेषरूपेणात्मविषयकज्ञानाऽभावोऽर्थः, तस्य चाहमित्यत्र कर्तृप्रत्ययत्वेनान्यस्य शेषकरणमशक्यमित्यात्मत्वसामान्यधर्मेणात्मविषयकज्ञानरूपार्थेन सह न विरोध इत्येवं परिहृत्याऽऽत्मत्वेन रूपेण ज्ञातोऽप्यात्मा न शरीरभिन्नत्वादिविशेषरूपेण ज्ञात इत्येकत्रात्मनि ज्ञातत्वाज्ञातत्वोभयसमर्थनं नैयायिकैः क्रियते यथा तथा घटपटादावपि घटत्वपृथिवीत्वद्रव्यत्वसत्त्वादिसामान्यधर्मेण रूपरसादिकतिपयपर्यायेण वा ज्ञातत्वं स्वपरानन्तपर्यायरूपास्तिविशेषधर्मेणाऽज्ञातत्वमित्येवं वस्तुमात्रे ज्ञातत्वाज्ञातत्वोभयसमर्थनेऽपि दीयतां दृष्टिरित्याह—

यथा चाहं मां न जानामीति प्रतीत्या ज्ञानाज्ञानोभयस्वभावत्वमात्मनि भाट्टैर्विरुद्धमापाद्यमानं न जानामीत्यस्य विशेषज्ञानाभावपरतया नैयायिकैर्निरस्यते, तथा घटादावपि सामान्यविशेषापेक्षया ज्ञातत्वाज्ञातत्वसमर्थनेऽपि दीयतां दृष्टिः, इत्थमेव सर्वत्र सर्वसाधारण्येनाकेवलिनं तद्व्यवस्थितेः। एवं सति कथञ्चिज्ज्ञातत्व-

बलतपोरूपैश्वर्यश्रुतसत्काराभ्युत्थानासनप्रदानांजलिप्रग्रहादिसंभवस्तदुच्चैर्गोत्रम् । यदुदयवशात्पुनर्ज्ञानादिसंपन्नोऽपि निन्दां लभते हीनजात्यादिसंभवं च तन्नीचैर्गोत्रम् ॥५॥

नामोत्तरप्रकृतीरभिधातुकाम आह—

**गइजाइसरीरंगं बंधणसंघायणं च संघयणं । संठाणवन्नगंधरसफासअणुपुव्विविहगगई ॥६॥**

(स्वो०)—गतिजातिशरीराङ्गं बन्धनं सङ्घातनं च संहननं संस्थानवर्णगन्धरसस्पर्शानुपूर्वीविहायोगतयः, एता गत्यादयः चतुर्दश पिण्डप्रकृतयो नाम्नोऽभिहिता इति गाथार्थः ॥६॥

(मलय०)—साम्प्रतं गोत्रेण सह समानस्थितिकत्वादेतदनन्तरं नामकर्मणः प्रकृतयः प्ररूपयितव्याः, ताश्च द्विधा—पिण्डप्रकृतयः प्रत्येकप्रकृतयश्च । तत्र प्रथमतः पिण्डप्रकृतीः प्ररूपयति—गम्यते तथाविधकर्मसचिवैर्जीवैः प्राप्यते इति गतिः, नारकत्वादिपर्यायपरिणतिः, सा चतुर्धा, तद्यथा—नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्च । तद्विपाकवेद्या कर्मप्रकृतिरपि गतिः, सापि चतुर्धा । तथा एकेन्द्रियादीनामेकेन्द्रियत्वादिरूपसमानपरिणामलक्षणमेकेन्द्रियादिशब्दव्यपदेशभाक् यत्सामान्यं सा जातिः, तद्विकपाकवेद्या कर्मप्रकृतिरपि जातिः । इदमत्र तात्पर्यं—द्रव्यरूपमिन्द्रियमङ्गोपाङ्गनामेन्द्रियपर्याप्तिनामसामर्थ्यात् सिद्धम्, भावरूपं तु स्पर्शनादीन्द्रियावरणक्षयोपशमसामर्थ्यात्, क्षायोपशमिकानीन्द्रियाणीति वचनात् । यत्पुनरेकेन्द्रियादिशब्दप्रवृत्तिनिबन्धनं तथारूपसमानपरिणतिलक्षणं सामान्यं तदनन्यसाध्यत्वाज्जातिनामनिबन्धनमिति । उक्तं च—अव्यभिचारिणा सादृश्येनैकीकृतोऽर्थात्मा जातिरिति, तन्निमित्तं जातिनाम, तच्च पञ्चधा । तद्यथा—एकेन्द्रियजातिः, द्वीन्द्रियजातिः, त्रीन्द्रियजातिः, चतुरिन्द्रियजातिः, पञ्चेन्द्रियजातिरिति । तथा शीर्यते इति

समर्थयन्नाह—

किञ्चित्प्रकारेत्यादिना, ननु ज्ञातत्वरूपप्रतियोगिन्येव सर्वप्रकारावच्छिन्नार्थकसर्वथेत्यस्यान्वयं कृत्वा तदभावरूपस्यैवाज्ञातत्वस्योपादानं कथं न कृतमित्याशङ्कायामाह एकत्र छद्मस्थेति, प्रतियोगिनि ज्ञातत्वे सर्वप्रकारावच्छिन्नत्वस्यान्वये छद्मस्थज्ञानमात्रस्य क्षायोपशमिकतया तद्विषयत्वे सर्वप्रकारावच्छिन्नत्वाभावेन सर्वप्रकारावच्छिन्नज्ञानविषयत्वरूपस्य सर्वथा ज्ञातत्वस्याऽप्रसिद्ध्या तन्निषेधाऽसम्भव इति तत्परिहाराय प्रसिद्धस्यैव ज्ञातत्वस्याभाव एवावच्छेदकविधया सर्वप्रकारस्यान्वयः, तथा च ज्ञातत्वज्ञातत्वाभावयोर्भावाभावरूपत्वेन विरोधात् तत्परिहारायोभयत्रावच्छेदकभेदनिवेशेन स्याद्वादः फलवान् इत्यर्थः, अनेनैवाभिप्रायेणेति, यद्यपि छद्मस्थज्ञाने तत्तद्धर्मावच्छिन्ननिखिलपदार्थविषयत्वप्रतिबन्धकीभूतस्य कर्म्मणस्सद्भावेन न सर्वधर्मप्रकारकनिखिलपदार्थविशेष्यकज्ञानं छद्मस्थात्मनि संभवतीत्यनन्तपर्यायावगुण्ठितस्य घटादेः कतिपयधर्मेण ज्ञातत्वेऽपि तदन्यधर्मेण ज्ञातत्वाभावान्न सर्वधर्मेण ज्ञातत्वं संभवति, तथापि केवलज्ञानान्यथानुपपत्त्या तदानीं तत्प्रतिबन्धकीभूतस्य कर्मणोऽभावेन घटपटाद्यशेषपदार्थस्य स्वपरानन्तपर्यायात्मकसर्वधर्मेण सर्वज्ञस्य ज्ञानं सम्भवतीति विश्वतत्त्वस्य विश्वरूपेण ज्ञातत्वं सम्भवत्येवेत्यभिप्रायेणेत्यर्थः। भावः घटपटाद्यर्थः, सर्वथा सर्वधर्मप्रकारेण, येनेति पुरुषेणेतिशेषः, तेन दृष्टा इति एकस्यापि वस्तुनोऽनन्तपर्यायात्मकत्वेन तत्र च साक्षात् परंपरया निखिलवस्तुतत्त्वानां प्रविष्टत्वेन तज्ज्ञानाऽभावे यथावस्थिततज्ज्ञानं न भवतीति सर्वप्रकारावच्छिन्नघटाद्येकैकपदार्थविषयताकज्ञाने तदन्यपदार्थमात्रभानस्यावश्यंभावादिति भावः, एतेन "सर्वं पश्यतु वा मा वा, तत्त्वमिष्टन्तु पश्यतु। कीटसंख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ॥१॥" तस्मादनुष्ठानगतं, ज्ञानमस्य विचार्यताम्। प्रमाणं दूरदर्शी चे, देते गृध्रानुपास्महे ॥२॥ इत्यपि

कृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाख्यं वज्रनामकमस्थि यत्र भवति तद्वज्रर्षभनाराचसंज्ञकं प्रथमं संहननम्। यत्पुनः कीलिकारहितं संहननं तदृषभनाराचं द्वितीयं संहननम्। तथा यत्र अस्थ्नोर्मर्कटबन्ध एव केवलस्तन्नाराचसंज्ञं तृतीयं संहननम्। यत्र पुनरेकपार्श्वे मर्कटबन्धो द्वितीयपार्श्वे च कीलिकाबन्धस्तदर्द्धनाराचसंज्ञं चतुर्थं संहननम्। तथा यत्र अस्थीनि कीलिकामात्रबद्धान्येव भवन्ति, तत्कीलिकाख्यं पञ्चमं संहननम्। यत्र पुनः परस्परं पर्यन्तमात्रसंस्पर्शलक्षणां सेवामागतान्यस्थीनि भवन्ति, नित्यमेव च स्नेहाभ्यङ्गादिपरिशीलनामाकांक्षन्ति, तत्सेवार्त्ताख्यं षष्ठं संहननम्। एतन्निबन्धनं संहनननामापि षोढा, तद्यथा—वज्रर्षभनाराचसंहनननाम, ऋषभनाराचनाम, नाराचनाम, अर्द्धनाराचनाम, कीलिकानाम सेवार्त्तनाम च। तत्र यदुदयवशाद्वज्रर्षभनाराचसंहननं भवति, तद्वज्रर्षभनाराचसंहनननाम। एवं शेषसंहनननामस्वपि भावनीयम्। तथा संस्थानमाकारविशेषः। तेष्वेव गृहीतसङ्घातितबद्धेष्वौदारिकादिषु पुद्गलेषु संस्थानविशेषो यस्य कर्मण उदयात्प्रादुर्भवति तत्संस्थाननाम। तच्च षोढा, तद्यथा—समचतुरस्रं, न्यग्रोधपरिमण्डलं, सादि, कुब्जं, वामनं, हुण्डं चेति। तत्र यदुदयादसुमतां समचतुरस्रं संस्थानमुपजायते, तत्समचतुरस्रसंस्थाननाम। यदुदयान्न्यग्रोधपरिमण्डलं संस्थानं तन्न्यग्रोधपरिमण्डलनाम। एवं शेषाण्यपि वाच्यानि। तत्र समचतुरस्रमिति समाः सामुद्रिकशास्त्रोक्तप्रमाणलक्षणाविसंवादिन्यश्चतस्रोऽस्रयश्चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रं संस्थानं, 'समासान्तोऽत्प्रत्ययः' न्यग्रोधवत्परिमण्डलं यस्य तन्न्यग्रोधपरिमण्डलम्। यथा न्यग्रोध उपरि सम्पूर्णप्रमाणोऽधस्तु हीनः, तथा यत्संस्थानं नाभेरुपरि सम्पूर्णप्रमाणं, अधस्तु न तथा, तन्न्यग्रोधपरिमण्डलम्। तथा आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, ततः सह आदिना नाभेरधस्तनभागेन यथोक्तप्रमाणलक्षणेन वर्त्तत इति सादि। यद्यपि च सर्वमपि शरीरमादिना सह वर्त्तते, तथापि सादित्वविशेषणान्यथानुपपत्त्या

मेत कारणं तत्र चोच्यत इति, अत एव "चलमाणे चलिए जाव निज्जरमाणे निज्जिण्णे" इति सिद्धान्तसिद्धं चलमानं चलितं क्रियमाणं कृतमित्याद्यपि नानुपपन्नम्, सर्वत्र कालवर्त्तिताविशेषरूपसिद्धत्वस्य निष्ठार्थत्वात्, तस्य चादिसमयावच्छेदेन साध्यत्वेन सममऽविरोधात् चिरनष्टे इदानीं नष्ट इति चिरोत्पन्ने चेदानीमुत्पन्न इति च प्रतीतिः कालवाचकं यदिदानीमिति पदं तत्समभिव्याहृतनिष्ठाप्रत्ययेनैतत्कालावच्छिन्नसाध्यत्वविशिष्टसिद्धत्वोपस्थित्यैव न भविष्यति, इत्थमेव क्रियमाणं कृतमेव, कृतं च क्रियमाणत्वेन भजनीयमिति सिद्धान्तस्तत्त्वज्ञते, सिद्धत्वविशिष्टसाध्यतायाः सिद्धत्वनियतत्वात्, शुद्धसिद्धतायाश्च विशिष्टसाध्यताऽनियतत्वात्, तदाह भाष्यकारः "तेणेह कज्जमाणं नियमेण कयं कयं तु भयणिज्जं। किंचिदिह कज्जमाणं उवरयकिरियं व होज्जाहि॥१॥" इति, पूर्वन्त्विति यदा ज्ञानं न जातं किन्तु तदुत्पादनाय व्यापारः क्रियते तदा तस्मिन् व्यापारे ज्ञानकार्योपचारात्तद्व्यापारविषयत्वाद् घटादौ गृह्यमाणत्वव्यवहारः चरमकारणसमवधानात्पूर्वमाद्यादिकृतिकाले क्रियते घट इति व्यवहारस्तु घटकारणीभूतयत्किञ्चित्कृत्यादौ घटकार्यारोपादिति भावः। क्रियाकालतया ज्ञानोत्पत्तिकालं निष्ठाकालतया च ज्ञानविषयसम्बन्धकालमभ्युपेत्य तयोरेकत्वमुपपादयति—

युक्तं चैतत्, यथा परेषां पिण्डोत्पत्तिकालस्तत्र घटत्वसम्बन्धकालश्चैकस्तथास्माकं ज्ञानोत्पत्तिकालो विषये तत्सम्बन्धकालश्चैक इत्यस्य सुवचत्वात्, अत एवेदानीं ज्ञात इति नान्यदा प्रतीतिः, कालवाचकपदसमभिव्याहृतनिष्ठाप्रत्ययस्य तत्कालोत्पत्त्यवच्छिन्ननिष्ठाश्रयबोधन एव सामर्थ्यात्, यत्तु गृहीतमास्ते तद्गृह्यते च न चेति भजनीयम्, उत्पत्तिकालावच्छिन्नग्रहणनिष्ठाश्रयो गृह्यत एव, शुद्धनिष्ठाश्रयस्तु न गृह्यत इत्येवं विकल्पनीयमित्यर्थः। एवं ज्ञायमानत्वज्ञातत्वभजनयापि सिद्धो घटादेर्भेदो धर्मितया चैकत्वम्,

भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियतागमनपरिपाटी आनुपूर्वी, तद्विपाकवेद्या कर्मप्रकृतिरपि कारणे कार्योपचारात् आनुपूर्वी। सा च चतुर्धा, तद्यथा–नरकगत्यानुपूर्वी तिर्यग्गत्यानुपूर्वी, मनुष्यगत्यानुपूर्वी, देवगत्यानुपूर्वी च। तथा विहायसा गतिर्गमनं विहायोगतिः। ननु सर्वगतत्वाद्विहायसस्ततोऽन्यत्र गतिर्न सम्भवतीति किमर्थं विहायसा विशेषणं? व्यवच्छेद्याऽभावात्। सत्यमेतत्, किन्तु यदि गतिरित्येवोच्यते ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्याशङ्का स्यात्, ततस्तद्व्यवच्छेदार्थं विहायसा विशेषणम्। विहायसा गतिर्न तु नारकत्वादिपरिणतिरूपेति विहायोगतिः। सा द्विधा, प्रशस्ता अप्रशस्ता च। तत्र प्रशस्ता हंसगजवृषभादीनां, अप्रशस्ता खरोष्ट्रमहिषादीनां। तद्विपाकवेद्या कर्मप्रकृतिरपि द्विप्रकारा विहायोगतिः ॥६॥

**अगुरुयलहु उवघायं परघाउस्सास आयवुज्जोयं। निम्माणतित्थनामं चोद्दस अड पिंडपत्तेया ॥७॥**

(स्वो०)—अगुरुलघूपघातं पराघातोच्छ्वासातपोद्योतं निर्माण तीर्थनाम, चतुर्दशाष्टौ पिण्डप्रत्येकाः, यथासंख्येनैता आद्याश्चतुर्दश पिण्डप्रकृतयोऽष्टौ प्रत्येकमवस्थिता इति गाथार्थः ॥७॥

(मलय०)—तदेवमुक्ताः पिण्डप्रकृतयः एतासां चावान्तरभेदाः सर्वसंख्यया पञ्चषष्टिः, संप्रति प्रत्येकप्रकृतयो वक्तव्याः, ताश्च द्विधा, सप्रतिपक्षा अप्रतिपक्षाश्च। तत्राल्पवक्तव्यत्वात्प्रथमतोऽप्रतिपक्षप्रत्येकप्रकृतीरुपदर्शयति–अगुरुलघुनाम–यदुदयवशादसुमतां शरीराणि न गुरूणि नापि लघूनि नापि गुरुलघूनि किन्त्वगुरुलघुपरिणामपरिणतानि भवन्ति। 'उवघायं' ति–यदुदयवशात्स्वशरीरावयवैरेव शरीरान्तः परिवर्द्धमानैः प्रतिजिह्वागलवृन्दलकचोरदन्तादिभिरुपहन्यते, यद्वा स्वयंकृतोद्बन्धनभैरवप्रपातादिभिस्तदुपघातनाम। तथा यदुदयवशादोजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा महानृपसभायामपि गतः, सभ्यानामपि त्रासमुत्पादयति, प्रतिवादिनश्च प्रतिभाविघातं

ज्ञानोत्पत्तिकाले विवक्षितज्ञानस्य यस्मिन्नेव समये वर्त्तमानपर्यायोत्पत्तिः तस्मिन्नेव समयेऽतीतपर्यायविनाशः, विनाशपूर्वकत्वादुत्पत्तेः, उत्पत्तिविनाशक्रिये च निराधारे न सम्भवत इति तदाधारभूतद्रव्यस्थितिरपि तदाऽभ्युपगन्तव्येत्येवमभिन्नकालानामुत्पादादित्रयाणां प्रत्येकं एकधर्मिसंसर्गितया त्रैकाल्यं तेन नयेन प्रतिपाद्यते, तथाहि कारणव्यापारस्य प्रथमसमय एव ज्ञानादिकार्यं केनचिदंशेन यदि नोत्पद्यते तर्हि द्वितीयादिसमयेऽपि नोत्पद्येतेत्यन्त्यसमयेऽप्यनुत्पन्नं स्यादिति केन चिदंशेनाद्यसमयेऽपि ज्ञानादिकार्यमुत्पन्नम् इत्यभ्युपगन्तव्यम्, द्वितीयतृतीयादिसमयेपि चापराऽपरांशेनैव तस्योत्पत्तिरभ्युपगन्तव्या, नोत्पन्नांशेनैव, तथा सति [illegible] द्वितीयतृतीयादिसमयभाविव्यापाराणां व्यग्रतया तत्पूर्वापूर्वांशेन ज्ञानादिकार्योत्पत्तिर्न स्यादित्यशेषांशकार्योत्पत्तिः [illegible] न स्यादित्याद्यसमयभाविव्यापारादारभ्यान्त्यसमयभाविव्यापारं यावत्प्रबन्धेनोत्पद्यमानं १ तद्रूपतयोत्पन्नम् २, अभि-[illegible] नोत्पत्स्यते ३, तदेव च किञ्चिदंशेन स्थितं ४, स्थीयमानं ५, स्थास्यमानञ्च ६ एवं किञ्चिदंशेन विनष्टं ७ विनश्यत् ८ [illegible] ज्ञेयम्, ९ उक्तनवप्रकारेषु प्रतिप्रकारमुत्पादव्ययध्रौव्यात्मकत्रिलक्षणयोगेन सप्तविंशतिर्भङ्गा भवन्ति, एते च [illegible] अभिन्नकालानां तदुत्पत्तिनाशस्थितीनां प्रत्येकं कालत्रयस्पर्शि त्रिलक्षणयोगेनेत्यस्याऽभिन्नकालानां ज्ञानोत्पत्ति-[illegible] प्रत्येकं कालत्रयस्य भूतभवद्भविष्यत्कालत्रयस्य संस्पर्शी यस्त्रिलक्षणस्योत्पादव्ययध्रौव्यस्य योगस्तेनेत्येवमर्थो विवक्ष्यते [illegible] कालत्रयस्य प्रवेशेनावसेयाः, यदि च कालत्रयस्पर्शि यत्त्रिलक्षणमुत्पादव्ययध्रौव्याख्यं तस्य योगेनेत्येवं कालत्रय-[illegible] योगेनेत्यस्यार्थो विवक्ष्यते, तदा कालत्रयस्य विधेयकोटौ प्रवेशनेन सप्तविंशतिर्भङ्गा इत्थमवसेयाः एकस्यैव वस्तुनो [illegible] किञ्चिदंशेनोत्पन्ना १ सैवाऽपूर्वांशेन चोत्पद्यते २ अपरांशेन चोत्पत्स्यते ३ एवमुत्पत्तिर्विनष्टा ४ विनश्यति ५ विनङ्क्ष्य-

त्रसनाम। तद्विपरीतं स्थावरनाम, यदुदयवशादुष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्थाः पृथिव्यप्तेजोवायुवनस्पतयः स्थावरा जायन्ते। तथा बादरनाम, यदुदयाज्जीवा बादरा भवन्ति, बादरत्वं परिणामविशेषः, यद्वशात्पृथिव्यादेरेकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि बहूनां समुदाये चक्षुषा ग्रहणं भवति। तद्विपरीतं सूक्ष्मनाम, यदुदयाद्बहूनामपि समुदितानां जन्तुशरीराणां चक्षुर्ग्राह्यता न भवति। पर्याप्तकनाम—यदुदयवशात्स्वयोग्यपर्याप्तिनिर्वर्त्तनसमर्थो भवति। तद्विपरीतमपर्याप्तनाम, यदुदयवशात्स्वयोग्यपर्याप्तिनिर्वर्त्तनसमर्थो न भवति। तथा यदुदयाज्जीवं जीवं प्रति भिन्नं शरीरमुपजायते तत्प्रत्येकनाम, तस्योदयः प्रत्येकशरीरिणां प्रत्येकशरीरिणश्च नारकामरमनुष्यद्वीन्द्रियादयः पृथिव्यादयः कपित्थादितरवश्च। ननु यदि प्रत्येकनाम्न उदयः कपित्थादिवृक्षादीनामिष्यते तर्हि तेषां जीवं जीवं प्रति भिन्नं शरीरं भवेत्, न च तद्भवति। यतः कपित्थाश्वत्थपीलुसेल्वादीनां मूलस्कन्धत्वक्शाखादयः प्रत्येकमसंख्येयजीवा इष्यन्ते। यत उक्तं प्रज्ञापनायां एकास्थिकबहुबीजवृक्षप्ररूपणावसरे—"एएसिं मूला असंखिज्जजीविया कन्दा वि खंधा वि तया वि साला वि पवाला वि पत्ता पत्तेयजीविया" इत्यादि। मूलादयश्च फलपर्यन्ताः सर्वेऽप्येकशरीराकारा उपलभ्यन्ते, देवदत्तशरीरवत्। यथा हि—देवदत्तशरीरमखण्डमेकरूपमुपलभ्यते, तद्वन्मूलादयोऽपि, तत एकशरीरात्मकाः कपित्थादयः, ते चासंख्येयजीवाः, ततः कथं ते प्रत्येकशरीरिणः? उच्यते—प्रत्येकशरीरिण एव ते, तेषां मूलादिष्वसंख्येयानामपि जीवानां भिन्नभिन्नशरीरसंभवात्, केवलं श्लेषद्रव्यविमिश्रितसकलसर्षपवर्त्तिरिव प्रबलरागद्वेषोपचिततथारूपप्रत्येकनामकर्मपुद्गलोदयतस्ते तथा परस्परविमिश्रशरीरा जायन्ते। तथा चोक्तं प्रज्ञापनायामेव—"जह सगलसरिसवाणं सिलेसमिस्साणवट्टिया वट्टी। पत्तेयसरीराणं तह हुंति सरीरसंघाया ॥२॥ जह वा तिलपप्पडिया, बहुएहिं तिलेहिं मीसिया संती। पत्तेयसरीराणं, तह होंति सरीरसंघाया ॥२॥"। गाथाद्वयस्याप्ययमक्षरार्थः—यथा सकलसर्ष-

मानंत्यादिकालत्रययोगेन नवभेदाः। तथा यद् यदैव स्थीयमानं तत्तदैव विगतं १ विगच्छत् २ विगमिष्यञ्च ३ एवं तत्तदैवोत्पद्यमानम् ४ उत्पन्नम् ५ उत्पत्स्यमानञ्च ६ तथा यद् यदैव स्थितं तत्तदैवोक्तरूपेण षड्भेदम्, एवमेव यद् यदैव स्थास्यति तत्तदाप्युक्तरूपेण षड्भेदम्, षड्भेदस्य त्रिधा गुणनेऽष्टादशभेदाः, स्पष्टवृत्त्या ते चैवम्, स्थीयमानं विगतं १ विगच्छत् २ विगमिष्यत् ३ स्थितं विगतं ४ विगच्छत् ५ विगमिष्यत् ६ स्थास्यमानं विगतं ७ विगच्छत् ८ विगमिष्यत् ९ स्थीयमानम् उत्पद्यमानम् १० उत्पन्नम् ११ उत्पत्स्यमानं १२ स्थितम् उत्पद्यमानम् १३ उत्पन्नम् १४ उत्पत्स्यमानं १५ स्थास्यमानम् उत्पद्यमानम् १६ उत्पन्नम् १७ उत्पत्स्यमानम् १८ इत्येवमष्टादशभेदस्य पूर्वोक्तनवभेदसङ्कलने स्थितेस्सप्तविंशतिर्भेदा इति, एवमेव यद् यदैव विगच्छत् १ तत्तदैव विगतं २ विगमिष्यच्च ३ यद् यदैव विगतं ४ तत्तदैव विगच्छत् ५ विगमिष्यच्च ६ यद् यदैव विगमिष्यत् ७ तत्तदैव विगतं ८ विगच्छच्च ९ तथाच विगच्छत् विगतं विगमिष्यत् ३ विगतं विगच्छत् विगमिष्यत् ३ विगमिष्यत् विगतं विगच्छत् ३ इत्येवं नवभेदाः, विगच्छत् उत्पद्यमानम् उत्पन्नम् उत्पत्स्यमानं च ३ विगतम् उत्पद्यमानम् उत्पन्नम् उत्पत्स्यमानं च ३ विगमिष्यत् उत्पद्यमानम् उत्पन्नम् उत्पत्स्यमानं ३ चेत्येवं नवभेदाः, विगच्छत् स्थितं स्थीयमानं स्थास्यमानं, ३ विगतं स्थितं स्थीयमानं स्थास्यमानं, ३ विगमिष्यत् स्थितं स्थीयमानं स्थास्यमानं, ३ इत्येवं नवभेदाः सर्वसङ्कलने विगमस्य सप्तविंशतिर्भेदा इति सप्तविंशतेस्त्रिधा गुणने एकाशीतिर्भङ्गा उत्पद्यन्त इति भावः। ननु भवन्त्वेते भङ्गाः कल्पनानिर्मिताः, न चैतावता सद्धर्मसाधका भवन्ति, कल्पनाया निरङ्कुशत्वेनाऽप्रमाणभूतत्वादित्याशङ्क्य परिहरति न चैन इति, निषेधे हेतुमाह निपुणमित्यादि, तथाच सर्वैरेभिर्धर्मैस्त्रिकालस्पर्शिभिरविनाभूतं द्रव्यं प्रतिपादयद्वाक्यं प्रमाणमेवेति भावः, तदिदमाह सम्मतिकारः, "उप्पज्जमाणकालं उप्पन्नंति विगयं विगच्छंतं। दवियं पण्णवयंतो तिकालविसयं विसेसेइ।१।" इति।

भवति तत्स्थिरनाम । तद्विपरीतमस्थिरनाम, यदुदयवशाज्जिह्वादीनां शरीरावयवानामस्थिरता । यदुदयवशान्नाभेरुपरितना अवयवाः शुभा जायन्ते तत् शुभनाम । तद्विपरीतमशुभनाम, यदुदयवशान्नाभेरधस्तनाः पादादयोऽवयवा अशुभा भवन्ति । तथाहि–शिरसा स्पृष्टस्तुष्यति, पादेन तु रुष्यति । कामिन्याः पादेनापि स्पृष्टस्तुष्यति, ततो व्यभिचार इति चेत्, न, तस्य परितोषस्य मोहनीयनिबन्धनत्वात्, वस्तुस्थितिश्चेह चिन्त्यते, ततोऽदोषः । तथा यदुदयवशाज्जीवस्य स्वरः श्रोतॄणां प्रीतिहेतुरुपजायते तत्सुस्वरनाम । तद्विपरीतं दुःस्वरनाम, यदुदयवशात्स्वरः श्रोतॄणामप्रीतिहेतुर्भवति । तथा यदुदयवशादनुपकृदपि सर्वस्य मनःप्रियो भवति तत्सुभगनाम । तद्विपरीतं दुर्भगनाम, यदुदयवशादुपकारकृदपि जनस्य द्वेष्यो भवति । उक्तं च–"अणुवकए वि बहूणं जो हु पिओ तस्स सुभगनामुदयो। उवगारकारगो वि हु न रुच्चए दूभगस्सुदए ॥१॥ सुभगुदए वि हु कोई कंची आसज्ज दुभगो जइ वि। जायइ तद्दोसाओ जहा अभव्वाण तित्थयरो ॥२॥"। तथा यदुदयवशात् यच्चेष्टते भाषते वा तत्सर्वं लोकः प्रमाणीकरोति, दर्शनसमनन्तरमेव च जनोऽभ्युत्थानादि समाचरति तदादेयनाम । तद्विपरीतमनादेयनाम, यदुदयवशादुपपन्नमपि ब्रुवाणो नोपादेयवचनो भवति, नाप्युपक्रियमाणोऽपि जनस्तस्याभ्युत्थानादि समाचरति । 'जसकित्ति' त्ति–तपःशौर्यत्यागादिना समुपार्जितेन यशसा कीर्त्तनं संशब्दनं यशःकीर्त्तिः, यद्वा यशः सामान्येन ख्यातिः, कीर्त्तिर्गुणोत्कीर्त्तनरूपा प्रशंसा, अथवा सर्वदिग्गामिनी पराक्रमकृता वा सर्वजनोत्कीर्त्तनीयगुणता यशः, एकदिग्गामिनी दानपुण्यकृता वा कीर्त्तिः, ते यदुदयाद्भवतस्तद्यशःकीर्त्तिनाम । तद्विपरीतमयशःकीर्त्तिनाम, यदुदयवशान्मध्यस्थस्यापि जनस्याप्रशस्यो भवति । उक्ताः सप्रतिपक्षाः प्रत्येकप्रकृतयः, आसां च सप्रतिपक्षाणां त्रसादिप्रकृतीनामित्थं यन्निदर्शनं तदमूषां संज्ञादिद्विकमपि ध्वनयति । तद्यथा–त्रसादयो दशप्रकृतयस्त्रसादिदशकं, स्थावरादयो दश स्थावरादिदशकमिति । तेनान्यत्र त्रसादिग्रहणे एता एव त्रसा-

नृणां निर्णीतमानमाहतुः. चितं मितं तथा मेया—ऽद्वमेवाह सङ्ग्रहः ॥४॥ प्रस्थकश्चर्जुसूत्रस्य, मानं मेयमिति द्वयं । न–ज्ञकर्तृगताज्ज्ञाता–च्छब्दानां सोऽतिरिच्यते" ॥५॥ इति नयोपदेशश्लोकैरवसेयः। ततः पूर्वमपीति, कारणस्य कार्यरूपत्वारोपेण वर्त्तमानपाकक्रियाकालापूर्वकालेऽपि वर्त्तमानपाकक्रियानुकूलकृतिदशायां किञ्चित्पक्वमित्यादयो नियतव्यवहाराः प्रवर्त्तन्त इत्यर्थः। ननु वर्त्तमानपाकक्रियाकाल एव किञ्चित्पक्वं किञ्चित्पच्यते किञ्चित्पक्ष्यते इत्यादयो व्यवहाराः कथं, पक्वमित्यत्र पच्धातोः भूतार्थे क्तप्रत्ययस्य निष्ठासंज्ञकस्यार्थस्य चरमकृतिध्वंसरूपस्यातीतत्वस्य पक्ष्यत इत्यत्र पच्धातोः भविष्यदर्थे स्यतेप्रत्यय इति तदर्थस्याद्यक्रियाकृतिप्रागभावरूपस्यानागतत्वस्य न वर्त्तमानपाककृतिकालेऽभावादित्याशङ्क्य प्रतिक्षिपति न चेति, निषेधे हेतुमाह—

कृतिस्थाने क्रियाभिषेकत्यागे बीजाभावात्, अनन्तभेदाभेदशबलवस्तुवैचित्र्यं विना व्यवहारवैचित्र्यानुपपत्तेः, तद्विवेकार्यैवोक्तभङ्गकदम्बकोपादानात्, यद्येवं तत्त्वं सर्वैः कथं न प्रतीयत इति चेत्, संमुग्धतया प्रतीयत एव, विविच्य तु वैनयिकी प्रतीतिर्गुरुचरणोपासनाधीनैव।

कृतिस्थान इति, विक्लित्यनुकूलक्रियाप्रचयस्यैव पाकरूपत्वेन तत्र या क्रिया निष्पन्ना तत्क्रियाध्वंसमेव चरमकृतिध्वंसस्थानेऽभिषिच्य निष्ठाप्रत्ययोपपादनस्य या क्रिया वर्त्तते तामाश्रित्य वर्त्तमानप्रत्ययोपपादनस्य या च क्रिया न निष्पन्ना तत्क्रियाप्रागभावमेवाद्यकृतिप्रागभावस्थानेऽभिषिच्य भविष्यत्प्रत्ययोपपादनस्य सम्भवे तत्त्यागे मानाभावात्। अत एव साध्यमानावस्था पूर्वापरीभूता भूतभविष्यद्वर्त्तमानसदसदाद्यनेकावयवरूपा क्रिया आख्यातपदैराख्यायते इत्यपि साध्यक्रियालक्षणं सङ्गच्छते इति बोध्यम्। तद्विवेकार्येति, अनन्तभेदाभेदशबलवस्तुवैचित्र्यविवेकार्येत्यर्थः। घटपटादिवस्तुनः परस्परविरुद्धभेदाभेदादिधर्मात्मकत्वं कथ-

स्थीनि न सम्भाव्यन्ते तथापि कायबलमधिकृत्य संहननमुच्यते, यथाऽस्थिसद्भावेऽपि अल्पबलः पुरुषोऽसंहननः, अथवा शङ्खादीनां द्वीन्द्रियाणामपि दृश्यन्त एव, पिपीलिकादीनां तु सूक्ष्मत्वात्केवलिगम्यानीत्यलं प्रसङ्गेनेति । संस्थानमपि षड्विधमेव, समचतुरस्रं प्रथमं, न्यग्रोधमण्डलं द्वितीयं, स्वाति तृतीयं, वामनं चतुर्थं, कुब्जं पञ्चमं, हुण्डं षष्ठं, चकारोऽन्यमतसूचकः, केचिद्वामनसंस्थानं पञ्चमस्थानेऽभिदधति, एषां लक्षणं 'तुल्लं वित्थरबहुलं' इत्यादिना प्रतिपादितम् , सम्यक् स्थीयन्ते येषु प्राणिभिस्तानि संस्थानानि । वर्णः पञ्चप्रकारः-श्वेतपीतरक्तनीलकृष्णाख्यः । गन्धो द्विधा-सुगन्धो दुर्गन्धश्च । रसः पञ्चधा-मधुराम्लकषायकटुकतिक्ताख्यः । स्पर्शोऽष्टधा-गुरुलघुमृदुकर्कशस्निग्धरूक्षशीतोष्णलक्षणः । भवाद् भवं नयत्यानुपूर्व्या यया साऽनुपूर्वी वृषभाकर्षणरज्जुकल्पा, सा च चतुर्द्धा, गतिवत् । विहायसा गतिर्विहायोगतिः, सा द्विविधा प्रशस्ता अप्रशस्ता च, गजहंसादीनां प्रशस्ता, खरकरभादीनामप्रशस्ता। एवं चतुर्दशस्वपि पिण्डप्रकृतिषु पञ्चषष्टिरुत्तरभेदा भवन्ति । अगुरुलघुनामकर्मोदयात् स्वशरीरं न गुरु नापि लघु प्रतिभाति । स्वशरीरोपहननमित्युपघातः । स्वशरीरबलप्रतापादिभिः परस्याभिभवनं पराघातः । ऊर्ध्वं वातोद्गमो यः स उच्छ्वासः । एतच्च अगुरुलघुचतुष्कं । एवं वर्णगन्धरसस्पर्शा अपि वर्णादिचतुष्कं तज्जातिग्रहणात् । सूर्यविमानरत्नपृथिवीजीवजनितदाहो यस्तदातपनाम । शशितारकमणिजलकाष्ठादिविमलत्वप्रकर्षो यस्तदुद्योतनाम । आह-आतपोद्योतयोः परस्परविरुद्धयोरप्यग्निकायिकेषु युगपदुदयो दृश्यत इति कथम् ? इत्युच्यते-तेषां यदुष्णत्वं तत्तैजसशरीरस्योदयप्रबलत्वात् प्रभूतजीवत्वाच्चैष्टव्यम् , नातपोदय इति, यच्च प्रकाशकत्वं तद्रक्तवर्णस्यातिस्फुटत्वान्नैवोद्योतनामकर्मोदयः, अग्निवायुकायिकेषूभयोरप्यागमे निषिद्धत्वादिति । यदुदयात् स्वजात्यनुरूपाण्यङ्गोपाङ्गानि निष्पद्यन्ते तन्निर्माणनाम । यदुदयादष्टमहाप्रातिहार्ययुक्ताश्चतुस्त्रिंशदतिशया अनुभूयन्ते तत्तीर्थकरनाम, एता गाथायुग्मोपन्यस्ताः त्रिसप्ततिः नामप्रकृतय इति । 'त्रसी उद्वेजने'

भिक्षार्थं व्रजन्तमङ्गुल्या गृहीत्वा स्वगृहे नीत्वा भूयसाऽऽदरेण हृद्यैरनवद्यैरशनपानखाद्यस्वादिमैर्मातृहस्तेन पूर्णपात्रं विधाय तेनैव सह भवतो महाकथाप्रतिपन्नस्य समीपमागत्य श्रुत्वा मनोहारिणीं सुधानिस्यन्दानुकारिणीं धर्मदेशनां गृहे गत्वा मातुरनुज्ञां याचमान इयान् शिशुः किन्त्वं तत्त्वं जानासीति मात्रा पृष्टो यदेव जानामि तदेव न जानामि यदेव न जानामि तदेव जानामीत्येतावतैव श्रवःसुधापारणेनोत्तरेण मातरं प्रतिबोध्य भवतोऽभ्यर्णं सर्वदुरितनिवर्हिणीं दीक्षां जग्राह, ये पुनर्गतं वर्षशतप्रमाणमायुर्येषां तादृशा अपि शुष्कवादव्यसनेनैव परिगलितायुष इत्यर्थः। इदं तत्त्वं न जानन्ति, तेषु पण्डितंमन्येषु मोहनृपतेः परतन्त्रभावं धिग्, विचित्रोऽयं मोहमहाशैलूषनर्त्तनप्रकारः, यत्तत्त्वं जैनशिशवोऽपि जानन्ति तन्न चतुर्दशविद्यास्थानपारदृश्वानोऽप्यनेके परतीर्थिकस्थविरा इति भावः ॥ ५५ ॥ एनामेव दिशमावृतानावृतत्वयोरप्यतिदिशन्नाह—

हे भगवन्नित्यादिना, ननापसिद्धान्तदोषः, अन्तकृद्दशाङ्गे सविस्तरोक्तत्वात्, विस्तरार्थिनोक्तसिद्धान्तोऽवलोक्यः, अन्तकृद्दशाङ्गोक्तानिमुक्तकमुनिवृत्तान्तमेव सङ्क्षेपेणोपनिबध्नाति यो भगवन्नित्यादिना ॥५५॥ पद्यप्रभागत्तमश्लोकमवतारयति–एनामेवेति, ग्रहणाग्रहणस्थलप्रदर्शितामित्यर्थः, दिशं प्रक्रियां,

आवृत्यनावृतिपदेऽपि समा दिगेषा, जात्यावृतौ भवति वैनयिकी कथं धीः ॥
सिद्धा च जातिरथयत्यपि नद्वदेव, चित्रो भवन्न तनुते भुवि कस्य चित्रम् ॥ ५६ ॥

आवृत्यनावृतिपदेऽपि आवृतानावृतत्वस्थानेऽपि, एषा ग्रहणाग्रहणस्थलप्रदर्शिता दिक्, समा तुल्यैव, ज्ञात-

यादुदास्यजनैर्निन्दितस्वभावो भवति। आह चोदकः—"तस्सेव केइ जसकित्तिकित्तया अजसकित्तया अण्णे। पायो राईणं बेंति अतिएसं इंदयाईणं ॥१॥" उच्यते—"जइ कहवि धाउवेसम्मयाइ दुद्धंपि जायए कडुयं। निंबो महुरो कस्सइ न पमाणं तहवि तं होइ ॥२॥ विवरीयदव्वगुणभासणाए अपमाणया उ तस्सेव। सग्गुण विसयं तम्हा जाणे जसकित्तिनामं तु ॥३॥" एता विंशतिर्यतस्त्रसादयो दश दश स्थावरादयश्च, त्रसादिचतुष्कं स्थिरादिषट्कं सूक्ष्मादित्रिकं एवमादयोऽन्तर्गणास्तु उभयत्रावगन्तव्याः, एवं च त्रिनवतिर्नामोत्तरप्रकृतयो भवन्ति। तृतीयगाथाचकारोऽन्याचार्यमते त्र्युत्तरनामप्रकृतिशतख्यापकः, तच्च पञ्चदशभेदबन्धनतो भवति, इति गाथार्थः ॥९॥

(मलय०)—तदेवमभिहिता नामकर्मण उत्तरप्रकृतयः। सम्प्रति पूर्वोक्तास्वेव गत्यादिषु पिण्डप्रकृतिषु यत्र यावन्तो भेदाः प्रत्येकं वर्त्तन्ते, सर्वसङ्कलनया च यावन्तो भवन्ति तावतः प्रतिपिपादयिषुराह—गत्यादीनां गतिजातिप्रभृतीनां चतुर्दशसंख्यानां पिण्डप्रकृतीनां यथाक्रमं चतुरादयो द्विकपर्यन्ता उत्तरभेदा अवान्तरभेदा भवन्ति। तद्यथा—गतेश्चत्वारः, जातेः पञ्च, शरीरस्य पञ्च, अङ्गोपाङ्गस्य त्रयः, बन्धननाम्नः पञ्च, सङ्घातनाम्नः पञ्च, संहननस्य षट्, संस्थानस्य षट्, वर्णस्य पञ्च, गन्धस्य द्वौ, रसस्य पञ्च, स्पर्शस्याष्टौ, आनुपूर्व्याश्चत्वारो, विहायोगतेर्द्वाविति। एते च गत्यादीनां पिण्डप्रकृतीनामुत्तरभेदाः सर्वेऽपि प्रागेव गत्यादिस्वरूपनिरूपणावसरे यथाक्रमं प्रपञ्चेनाभिहिताः इति न भूयोऽभिधीयन्ते। सर्वसंख्यया च पिण्डप्रकृत्युत्तरभेदाः पञ्चषष्टिः पञ्चषष्टिसंख्या भवन्ति, प्रत्येकप्रकृतयः सर्वसंख्यया अष्टाविंशतिः, सर्वमीलने च त्रिनवतिनामोत्तरप्रकृतयः ॥९॥

बन्धोदयसत्प्रकृतिसंख्याजनितसम्मोहापनोदायाह—

**ससरीरंतरभूया बंधणसंघायणा उ बंधुदए। वण्णाइविगप्पावि हु बंधे नो सम्ममीसाइं ॥१०॥**

वंशपरिमाणे य एव जातिविशेषः स एवानावृतवंशपरिमाणेपि, तस्यैकत्वात्, तथा चानावृतवंशपरिमाणगतजातिविशेषस्याप्युक्तसम्बन्धेन प्रतिबन्धकत्तया तद्विषयकप्रत्यक्षमपि न स्यादित्याह एवञ्चेति, नचावृतवंशपरिमाणविशेष्यकतद्गतजातिविशेषप्रकारकप्रत्यक्षं प्रत्येनोक्तसम्बन्धेनावरणसंयोगस्य प्रतिबन्धकत्वेनानावृतवंशपरिमाणविशेष्यकतद्गतजातिविशेषप्रकारकप्रत्यक्षस्य प्रतिबन्धकानाक्रान्ततया तदुत्पत्तौ बाधकाभाव एवेति वाच्यम्, आवृतपरिमाणविशेष्यकतद्गतवैजात्यप्रकारकप्रत्यक्षं माभूत् तद्वैजात्यनिर्विकल्पप्रत्यक्षं तु स्यादेव, तस्य निष्प्रकारत्वेन तं प्रत्यावरणसंयोगस्याऽप्रतिबन्धकत्वादित्याह तद्वैजात्यप्रकारकप्रत्यक्ष इति, प्रतिबन्ध्याप्रसिद्धिरिति, नहि शशशृङ्गगगनकुसुमादिकं प्रति कस्यचित्प्रतिबन्धकत्वम्भवतीति तत्कालीनतद्देशस्थतत्पुरुषगतवैजात्यप्रकारकप्रत्यक्षस्याऽप्रसिद्ध्यैव न प्रतिबध्यत्वसम्भव इतिभावः।

अत एव विजातीयचक्षुःसंयोगस्य परिमाणगतवैजात्यप्रत्यक्षे हेतुत्वं वाच्यमिति मथुरानाथः, तदपि न, तदवच्छिन्नेऽनुगतहेतुत्वादिकल्पने गौरवात्, किञ्च यद्युक्तजातिरेवावृता तदार्द्धावृतेऽनावृततुल्यपरिमाणमपेक्ष्य महत्गानशास्त्रजनितसंस्कारेण कथं हस्तत्वादिप्रकारिका वैनयिकी धीः, पठन्ति च–अर्द्धन्तोये कर्दमे द्वादशांश इत्यादि। अपि च यस्तिर्यगूर्ध्वमपि च हस्तमानस्तत्र तिर्यगर्द्धावृते ऊर्ध्वं हस्तत्वं न गृह्येत, तिर्यग्घस्तत्वमेव तथागृतमिति चेत्,

अत एवेति उक्तप्रतिबध्यप्रतिबन्धकभावस्याऽप्रसिद्धेरेवेत्यर्थः। अस्य च हेतुत्वेऽन्वयः तदवच्छिन्नेऽनुगतेति वैजात्यं तत्तत्परिमाणभेदेन भिन्नमिति तत्तत्प्रकारकप्रत्यक्षे तत्तद्विजातीयसंयोगानां तत्तद्वैजात्यरूपेण कारणत्वकल्पने गौरवादितिभावः।

मोहनीयोत्तरप्रकृती सम्यक्त्वसम्यग्मिथ्यात्वे, ते अपि न गृह्येते, तयोर्बन्धासम्भवात्। तथाहि-मिथ्यात्वपुद्गला एव मदनकोद्रवस्थानीया गोमयाद्यौषधविशेषकल्पेन सम्यक्त्वानुगुणविशोधिविशेषेण त्रिधा क्रियन्ते। तद्यथा-शुद्धा अर्द्धविशुद्धा अविशुद्धाश्च। तत्र ये सम्यक्त्वरूपतापत्तिलक्षणां शुद्धिमापादितास्ते शुद्धाः, ते च सम्यक्त्वमिति व्यवह्रियन्ते। ये त्वीषद्विशुद्धिमापादितास्ते अर्द्धविशुद्धाः, ते च सम्यग्मिथ्यात्वव्यपदेशभाजः। येषां तु मनागपि न शुद्धिरापादिता किं तु मिथ्यात्वरूपतयैव स्थितास्ते अविशुद्धाः। उक्तं च- "सम्यक्त्वगुणेन ततो, विशोधयति कर्म तत्स मिथ्यात्वं। यद्वत्सकृत्प्रभृतिभिः शोध्यन्ते कोद्रवा मदनाः ॥१॥ यत्सर्वथापि तद्विशुद्धं तद् भवति कर्म सम्यक्त्वं। मिश्रं तु दरविशुद्धं, भवत्यशुद्धं च मिथ्यात्वम् ॥२॥" ततो न भवति सम्यक्त्वसम्यग्मिथ्यात्वयोर्बन्धः। तथा च सति बन्धचिन्तायां बन्धनपञ्चकं, सङ्घातपञ्चकं, वर्णादिषोडशकं च नाम्नस्त्रिनवतेरपनीय शेषा सप्तषष्टिः परिगृह्यते, मोहनीयप्रकृतयश्च सम्यक्त्वसम्यग्मिथ्यात्वहीनाः शेषाः षड्विंशतिः, ततः सर्वप्रकृतिसंख्यामीलने बन्धे विंशत्युत्तरं प्रकृतीनां शतं भवति। उदये च चिन्त्यमाने सम्यक्त्वसम्यग्मिथ्यात्वे अप्युदयमायात इति ते अपि परिगृह्येते, तत उदये द्वाविंशं प्रकृतिशतम्। सत्तायां चिन्त्यमानायां बन्धनपञ्चकं सङ्घातपञ्चकं वर्णादिषोडशकं च पूर्वापनीतं परिगृह्यते, ततः सर्वसंख्यया प्रकृतीनामष्टचत्वारिंशं शतं भवति। उक्तं च कर्मस्तवे-"अडयालं पयडिसयं खविय जिणं निव्वुयं वंदे।" यदा पुनर्गर्गर्षिशिवशर्मप्रभृत्याचार्यान्तरमतेनाष्टपञ्चाशदधिकं प्रकृतिशतं सत्तायामधिक्रियते, तदा बन्धनानि पञ्चदश विवक्ष्यन्ते, ततोऽष्टचत्वारिंशदधिकस्य प्रकृतिशतस्य पूर्वोक्तस्योपरि बन्धनगता दश प्रकृतयोऽधिकाः प्राप्यन्ते, इति भवत्यष्टपञ्चाशदधिकं प्रकृतिशतम् ॥१०॥

वेउव्वाहारोरालियाण सगतेयकम्मजुत्ताणं। नव बंधणाणि इयर दुजुत्ताणं तिण्णि तेसिं च ॥११॥

समर्थयितुमश्लोकमवतारयति कम्पाकम्पावधिकृत्याह,

एकत्र देशभिदयाऽनुभवेन कम्पा-कम्पावऽपि प्रकृतवस्तुनि भेदकौ स्तः ॥

धीविप्लवोपगमतश्च न चेद्विभाग-संयोगभेदपरिकल्पनया च दोषः ॥ ५७ ॥

एकत्र देशभिदयेत्यादिश्लोकस्य प्रकृतवस्तुनि अवयविनि, कम्पाकम्पावपि आवृतानावृत्त्वे इव चलनाचलने अपि, भेदकौ स्तः एककालावच्छिन्नत्वसामानाधिकरण्यसम्बन्धेनाऽभेदविशिष्टभेदसाधकौ भवतः, तत्र हेतुमाह एकत्र देशभिदयाऽनुभवेनेति, एकस्मिन् भिन्नभिन्नदेशावच्छेदेनानुभूयमानत्वादित्यर्थः। अवयवकम्पेप्यवयविनो निष्कम्पत्वमेवेत्यभ्युपगमे दोषमाह धीविप्लवेति, न चेदित्यनन्तरमित्थं स्वीक्रियते तदेतिशेषः, उक्तप्रकारेण न चेत्स्वीक्रियते तदा धीविप्लवोपगमतः विभागसंयोगभेदपरिकल्पनया च दोष इति, अवयव एव चलनक्रियास्वीकारे चलनक्रियाऽभाववत्यवयविनि चलनप्रकारकत्वेनावयवी चलतीतिबुद्धेर्भ्रमत्वस्वीकारान्निश्चलावयवावच्छेदेनाप्यवयविनि चलतीत्यारोपदोषप्रसङ्गः, परमाणुद्व्यणुकत्रसरेण्वाद्यवयवाकाशादिसंयोगविभागजन्यद्व्यणुकत्रसरेणुचतसृण्याद्यवयव्याकाशादिसंयोगविभागादयः अन्तिममहावयव्याकाशादिसंयोगविभागान्ताः अनन्ताः कल्प्यास्स्युरिति दोषप्रसङ्गश्चेतिसङ्क्षेपार्थः। विस्तरार्थस्तु ग्रन्थकृतैव विव्रीयते—

प्रकृतवस्तुन्यवयविनि एकत्र देशभिदया देशभेदेनानुभवेनानुभूयमानतया, कम्पाकम्पावऽपि भेदकौ स्तः कथंचिद् भेदसहिष्णू भवतः, न चेत् इत्थं स्वीक्रियते तदा, धीविप्लवोपगमतः चलदवयवाश्रितेऽवयविनि चलत्वबुद्धे-

यबन्धनं, वैक्रियतैजसबन्धनं, वैक्रियकार्मणबन्धनं, आहारकाहारकबन्धनं, आहारकतैजसबन्धनं, आहारककार्मणबन्धनं, औदारिकौदारिकबन्धनं, औदारिकतैजसबन्धनं, औदारिककार्मणबन्धनं चेति । तत्र पूर्वगृहीतवैक्रियपुद्गलानां स्वैरेव वैक्रियपुद्गलैर्गृह्यमाणैः सह सम्बन्धो वैक्रियवैक्रियबन्धनम्। तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्धो वैक्रियतैजसबन्धनम् । तथा तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्धो वैक्रियकार्मणबन्धनम् । तथा पूर्वगृहीतानामाहारकपुद्गलानां स्वैरेवाहारकपुद्गलैर्गृह्यमाणैः सह यः सम्बन्धः स आहारकाहारकबन्धनम् । तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्ध आहारकतैजसबन्धनम्। तथा तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्ध आहारककार्मणबन्धनम् । तथा पूर्वगृहीतानामौदारिकपुद्गलानां स्वैरेवौदारिकपुद्गलैर्गृह्यमाणैः सह यः सम्बन्धः स औदारिकौदारिकबन्धनम् । तेषामेवौदारिकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्ध औदारिकतैजसबन्धनम् । तथा तेषामेवौदारिकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्ध औदारिककार्मणबन्धनम् । तथा 'इयर दुजुत्ताणं तिण्णि' त्ति–इतराभ्यां तैजसकार्मणाभ्यां द्वाभ्यां समुदिताभ्यां युक्तानां वैक्रियाहारकौदारिकाणां त्रीणि बन्धनानि भवन्ति । तद्यथा—वैक्रियतैजसकार्मणबन्धनं, आहारकतैजसकार्मणबन्धनं, औदारिकतैजसकार्मणबन्धनम् । तत्र वैक्रियपुद्गलानां तैजसपुद्गलानां कार्मणपुद्गलानां च पूर्वगृहीतानां गृह्यमाणानां वा यः परस्परसम्बन्धस्तद्वैक्रियतैजसकार्मणबन्धनम् । एवमाहारकतैजसकार्मणबन्धनौदारिकतैजसकार्मणबन्धनयोरपि भावनाऽनुसर्त्तव्या । अनेन च बन्धनत्रिकेण सह पूर्वोक्तानि नव बन्धनानि द्वादश भवन्ति । तथा 'तेसिं च'त्ति –तयोश्च

त्वाङ्गीक्रियत इति यावत् । नन्ववच्छेदकतासम्बन्धेन चलनारोपं प्रति विशेष्यतासम्बन्धेन चलनग्रहः कारणमिति यत्र यत्रावयवे विशेष्यतासम्बन्धेन चलनग्रहस्तत्र तत्रावयवे अवच्छेदकतासम्बन्धेन चलनारोपो भवन् तत्तदवयवावच्छेदेनावयविविशेष्यकचलनप्रकारकारोपपर्यवसायी भवतीत्युक्तकार्यकारणभावादऽभिमतफलसिद्धिरिति चेत्, तर्हि यत्र सर्वावयवावच्छेदेनावयविनि कर्म तत्र सर्वावयवावच्छेदेनावयविनि तत्प्रत्यक्षं प्रमात्मकं यद्भवति तन्न स्यात्, आरोपकारणस्य सद्भावेन तदात्मकमेव तत्स्यात्, स्याच्च विशेष्यतासम्बन्धेनागृह्यमाणं चलनं यस्मिन्नवयवे तदवच्छेदेनावयविनि चलनप्रत्यक्षं प्रमात्मकम्, आरोपकारणाभावात्, न स्याच्च तदवयवे चलनग्रहस्तदवयवावच्छेदेनावयविनि कुत्रापि चलनप्रमा, आरोपकारणसद्भावादित्याशयेनाह—

विशेष्यतासम्बन्धेन यत्र चलनग्रहस्तत्रावच्छेदकतासम्बन्धेन चलनारोप इति सामग्रीबलकल्पने चागृह्यमाणचलनाश्रयावच्छेदेनैव चलनप्रमाविश्रान्तिप्रसङ्गः, स्वाश्रयवृत्तित्वसम्बन्धेन शाखायां चलनग्रहस्य विशेष्यतया शाखावच्छिन्नचलनप्रकारकारोपे हेतुत्वकल्पने च सर्वावयवावच्छेदेन चलनवत्यपि तत्प्रसङ्गः, शाखेतरवृत्तिचलनाभावसंवलितशाखाचलनग्रहस्य तद्धेतुत्वे च क्षुद्रक्षुद्रतरावयवावच्छिन्नशाखामात्रचलनग्रहेऽपि तदप्रसङ्गः ।

विशेष्यतासम्बन्धेन यत्रेत्यादि, शाखायां वृक्षश्चलतीत्याकारको विशेष्यतासम्बन्धेन शाखावच्छिन्नचलनप्रकारकवृक्षात्मकावयविविशेष्यको य आरोपः तं प्रति स्वविषयचलनाश्रयवृत्तित्वसम्बन्धेन शाखायां चलनग्रहस्य कारणत्वपक्षेप्युक्तदोषसद्भावेपि दोषान्तरमाह सर्वावयवावच्छेदेनेति, सर्वावयवावच्छेदेन यस्मिन् वृक्षे क्रिया तत्र तत्प्रमैव भवति, तत्रापि विशेष्यतासम्ब-

चौराणां सतां चौरसंपर्कतश्चौरता ॥४२॥

देशघातिविषयं प्रदर्शयन्नाह–



**घाइखओवसमेणं सम्मचरित्ताइं जाइं जीवस्स। ताणं हणंति देसं संजलणा नोकसाया य ॥४३॥**

(स्वो०)—'घातिक्षयोपशमेन सम्यक्त्वचारित्रे ये जीवस्य। तयोर्घ्नन्ति देशं संज्वलना नोकषायाश्चे'ति पदानि। पदार्थस्तु–सर्वघातिमोहनीयस्य क्षयोपशमेन सम्यक्त्वचारित्रे ये जीवस्य तयोर्मालिन्यं कुर्वन्ति संज्वलना नोकषायाश्चोदयप्राप्ता विपाकानुभवनेनानुभूयमाना इति गाथार्थः ॥४३॥

(मलय०)—संप्रति यदुक्तं प्राग् देशघातित्वं, तत्संज्वलननोकषायाणां विभावयन्नाह–मिथ्यात्वानन्तानुबन्ध्यादीनां क्षयोपशमेन ये जाते जीवस्य सम्यक्त्वचारित्रे, तयोर्देशमेकदेशं विपाकोदयप्राप्ताः संतः संज्वलनाः क्रोधादयो नोकषाया हास्यादयो घ्नन्ति, मालिन्यमात्रमुत्पादयन्तीति भावः। ततः संज्वलना नोकषायाश्च देशघातिनः। एवं ज्ञानदर्शनदानादिलब्ध्यैकदेशघातित्वान्मतिज्ञानावरणीयादयोऽपि प्रकृतयो देशघातिन्यो भावनीयाः ॥४३॥



परावर्त्तनद्वारमधिकृत्याह–



**विणिवारिय जा गच्छइ बंधं उदयं च अन्नपगईए। सा हु परियत्तमाणी अणिवारेंति अपरियत्ता ॥४४॥**

(स्वो०)—'विनिवार्य या गच्छति बन्धमुदयं वाऽन्यप्रकृतेः, सा हु परावर्त्तमाना, अनिवारयन्ती अपरावर्त्ता'इति पदानि। पदार्थ-

परावर्त्तमानाः । शेषास्तु गत्यादयो बन्धमुदयं वा सजातीयप्रकृतिबन्धोदयनिरोधतः प्रपद्यन्ते, ततस्ता उभयथापि परावर्त्तमानाः ॥४४॥

विपाक इति व्याख्यानयन्नाह—

**दुविहा विवगओ पुण हेउविवागाउ रसविवागाउ । एक्केक्का वि य चउहा जओ च सद्दो विगप्पेणं ॥४५॥**

(स्वो०)—'द्विविधा विपाकतः पुनः हेतुविपाकतो रसविपाकतो, एकैका अपि च चतुर्धा, यतश्चशब्दो विकल्पेने'ति पदानि । पदार्थस्तु—विपाकमधिकृत्य प्रकृतयो द्विधा भवन्ति—हेतुविपाका रसविपाकाश्च । हेतुप्राधान्येन विपाकनिर्देशो यासां तास्तथा, रसप्राधान्येन विपाकनिर्देशो यासां तास्तथा । पुनः भूय एकैकाः चतुर्विधा भवन्ति, तत्र हेतुविपाकाः पुद्गलक्षेत्रभवभावभेदाच्चतुर्विधाः, रसविपाका अपि चतुस्त्रिद्व्येकरसस्थानभेदाच्चतुर्विधा एव । कुत एतदवसीयते ? यतो द्वारगाथायां चशब्दो विकल्पेन कर्त्राभिप्रेत इति गाथार्थः ॥४५॥

(मलय०)—संप्रति विपाकतश्चतुर्धेति यदुक्तं, तद्व्याख्यानयन्नाह—विपाकतो विपाकमाश्रित्य प्रकृतयो द्विविधा द्विप्रकारा भवन्ति, तद्यथा—हेतुविपाका रसविपाकाश्च । तत्र हेतुतो हेतुमधिकृत्य विपाको निर्दिश्यमानो यासां ता हेतुविपाकाः, रसतो रसमुररीकृत्य विपाको निर्दिश्यमानो यासां ता रसविपाकाः । अपि पुनश्चतुर्धा चतुष्प्रकाराः, तत्र पुद्गलक्षेत्रभवजीवहेतुभेदाच्चतुर्विधा हेतुविपाकाः, तद्यथा—पुद्गलविपाकाः, क्षेत्रविपाकाः, भवविपाकाः, जीवविपाकाश्च, ताश्च प्रागेवोक्ताः । तथा चतुस्त्रिद्व्येकस्थानकरसभेदाच्चतुर्विधा रसविपाकाः, तद्यथा—चतुःस्थानकरसाः, त्रिस्थानकरसाः, द्विस्थानकरसाः, एकस्थानकरसाश्च । एकस्थानकादिभेदभिन्नश्च रसः प्रागेवोक्तः । ननु विपाकतो द्विधा प्रकृतयो भवन्तीति द्वारगाथायां नोपात्तं, तत्कथमिदानीं विवियते ? तदयुक्तमनुपात्तत्वासिद्धेः । तथा चाह—यतश्चशब्दोऽपि विकल्पेन, यतो यस्माद् द्वारगाथायां प्रकृतयश्चेत्यत्र चशब्दो विकल्पेन विकल्पलक्षणेनार्थेन बोद्धव्यः, ततोऽयमर्थः—

एवमुक्ते कश्चिदाह–

**अरइरईणं उदओ किन्न भवे पोग्गलाणि संपप्प। अप्पुट्ठेहि वि किन्नो एवं कोहाइयाणंपि ॥४७॥**

(स्वो०)—'अरतिरत्योरुदयः किं न भवेत् पुद्गलान् सम्प्राप्य। अस्पृष्टैरपि किं नो एवं क्रोधादीनामपि' पदानि। पदार्थस्तु–कण्टकादिद्रव्यं प्राप्यारतेः स्रक्चन्दनादि प्राप्य रतेः कस्माद्विपाकोदयो न भवति? शरीरसंस्थानादीनां पुद्गलविपाकिनीनामिव। अत्रोच्यते–अस्पृष्टैरपि पुद्गलैः किं तयोरुदयो न भवति? अपि तु भवत्येव, यतः प्रियाप्रियकथासम्बन्धेनापि तदुदयो भवति, तथाविध जीवस्य संवेदनमित्यतो जीवविपाकित्वमेव। अन्यच्च तदुदये शुभाशुभपुद्गलैः साहाय्यं कर्त्तव्यमेव, नैष नियमो, यथा पुद्गलविपाकिनीनां, एवं क्रोधादयोऽपि भावनीया इति गाथार्थः ॥४७॥

(मलय०)—एवमुक्ते सति पुद्गलविपाकत्वमधिकृत्य यत्परस्य वक्तव्यं तदनूद्य दूषयति–ननु यदि याः प्रकृतयः पुद्गलान् सम्प्राप्य विपाकोदयमधिश्रयन्ति ताः पुद्गलविपाकाः, तर्हि रत्यरत्योरप्युदयः किं न पुद्गलान् सम्प्राप्य भवति? तयोरपि पुद्गलानेव सम्प्राप्योदयो भवतीति भावः। तथाहि–कण्टकादिसंस्पर्शादरतेर्विपाकोदयः, स्रक्चन्दनादिसंस्पर्शात्तु रतेः, ततस्ते अपि पुद्गलविपाकिन्यौ युक्ते, न जीवविपाकिन्याविति। एवं परेण काक्वा प्रश्ने कृते सत्याचार्योऽपि काक्वा प्रत्युत्तरमाह–'अप्पुट्ठेहि वि किन्नो' अत्र सप्तम्यर्थे तृतीया, अस्पृष्टेष्वपि पुद्गलेषु किं तयोः रत्यरत्योर्विपाकोदयो न भवति? भवत्येवेति भावः। तथाहि–कण्टकादिस्पर्शव्यतिरेकेऽपि प्रियाप्रियदर्शनस्मरणादिना दृश्यते रत्यरत्योर्विपाकोदयः, ततः पुद्गलव्यभिचारान्न ते पुद्गलविपाकिन्यौ, किं तु जीवविपाकिन्यौ। एवं परोपन्यस्तपूर्वपक्षव्युदासेन क्रोधादीनामपि जीवविपाकित्वं भावनीयम् ॥४७॥

विद्यमानेऽपि संक्रमे यथा तासां नियतक्षेत्रप्राधान्येन स्वकीयो विपाकोदयो न तथाऽन्यासामतः क्षेत्रविपाकिन्य एव इति गाथार्थः ॥४९॥

(मलय०)—सम्प्रति क्षेत्रविपाकित्वमधिकृत्य परप्रश्नमपाकर्तुमाह–ननु यदि गतीनां स्वस्वभवव्यतिरेकेणाप्यन्यत्र भवान्तरे संक्रमेणोदयोऽस्तीति कृत्वा स्वभवव्यभिचारान्न ता भवविपाकिन्य उच्यन्ते, किन्तु जीवविपाकिन्यः, तद्वानुपूर्वीणां स्वयोग्यक्षेत्रव्यतिरेकेणान्यत्र किमुदयः संक्रमेण नास्ति ? न विद्यते ? येन ता नियमतः क्षेत्रविपाकिन्यो व्यवह्रियन्ते, अन्यत्राप्यस्ति संक्रमेणोदयः, ततः स्वक्षेत्रव्यभिचारान्न ताः क्षेत्रविपाकिन्यो वक्तुमुचिताः, किन्तु जीवविपाकिन्य एवेति परस्याभिप्रायः । अत्रोत्तरमाह–'सन्ते वि' इत्यादि, सत्यपि स्वयोग्यक्षेत्रव्यतिरेकेणान्यत्र संक्रमोदये यथा तासां क्षेत्रहेतुकः स्वविपाकः स्वविपाकोदयप्रादुर्भावः, तथा नान्यासां प्रकृतीनामित्यसाधारणक्षेत्रलक्षणहेतुख्यापनार्थं क्षेत्रविपाकिन्य उच्यन्ते ॥४९॥

जीवविपाकत्वमधिकृत्याह–

**संपप्प जीवकाला काओ उदयं न जंति पगईओ। एवमिणमोहहेउं आसज्ज विसेसयं नत्थि ॥५०॥**

(स्वो०)—'सम्प्राप्य जीवकालौ काः उदयं न यान्ति प्रकृतयः ?। एवमेतत् ओघहेतुं आश्रित्य विशेषितं नास्तीति,' पदानि । पदार्थः–जीवकालौ हेतुत्वेन प्राप्य कास्ताः प्रकृतयो या उदयं न यान्ति ? ताभ्यां विना उदयाभावात्, सर्वदा तयोरव्यवच्छेदादिति भावः, तस्मात् सर्वा जीवविपाकिन्यो भवन्त्विति काकुः ? उच्यते–एवमेतद्धेतुसामान्यग्रहणे, विशेषहेतुग्रहणे त्वासां यथा विशिष्टाः द्रव्यक्षेत्रभावाः पुद्गलादिविपाकिप्रकृतिहेतवः, एवं जीवकालयोरपि विशेषमधिकृत्य जीवविपाकिनीनामेव हेतुत्वमवसेयम्, यतस्तद्भावेऽपि सर्वासामनुदयादिति गाथार्थः ॥५०॥

केवलद्विकं ह्यशुभमतिविशुद्धकश्च बन्धकेषु क्षपकश्रेण्यारूढः सूक्ष्मसम्परायः, ततो मतिज्ञानावरणीयादेरिव सम्भवति केवलद्विकस्याप्येकस्थानकरसबन्धः, स किं नोक्तः ? इति प्रष्टुरभिप्रायः। तथा हास्यादिषु 'षष्ठीसप्तम्योरर्थे प्रत्यभेदात्' हास्यादीनां–हास्यरतिभयजुगुप्सानामशुभत्वात् अपूर्वोऽपूर्वकरणो, हास्यादिबन्धकानां मध्ये तस्यातिविशुद्धिप्रकर्षप्राप्तत्वात्। शुभादीनां च शुभप्रकृतीनां मिथ्यादृष्टिरतिसंक्लिष्टः, संक्लेशप्रकर्षसम्भवे हि शुभप्रकृतीनामेकस्थानकोऽपि रसबन्धः सम्भाव्यते, इति कथमेकस्थानकं रसं न बध्नाति ? येन पूर्वोक्ता एव सप्तदश प्रकृतयश्चतुस्त्रिद्व्येकस्थानकरसा उच्यन्ते, न शेषाः प्रकृतयः ? ॥५१॥

अत्रोच्यते–

**ज़लरेहसमकसाए वि एगठाणी न केवलदुगस्स । जं अणुयंपि हु भणियं आवरणं सव्वघाई से ॥५२॥**

(स्वो०)—'जलरेखासमकषायैरपि एकस्थानिको न केवलद्विकस्य, यतस्तनुकमपि हु भणितं आवरणं सर्वघाति तयोरि'ति पदानि। पदार्थस्तु–जलरेखातुल्येऽपि कषायोदये एकस्थानिकरसो न भवति केवलद्विकस्य, यतस्तस्याविततनुकोऽपि निकृष्टोऽपि सर्वघात्येव रसः प्रतिपादितः, हुशब्दस्यावधारणार्थत्वादिति गाथार्थः ॥५२॥

(मलय०)—अत्र सूरिराह–जलरेखासमेऽपि जलरेखातुल्येऽपि कषाये संज्वलनलक्षण उदयमागते न केवलद्विकस्य केवलज्ञानावरणकेवलदर्शनावरणरूपस्यैकस्थानिको रसो भवति, कुत ? इत्याह–यत् यस्मात् 'से' तस्य केवलद्विकस्य तनुकमपि सर्वजघन्यमप्यावरणं रसलक्षणं हु निश्चितं सर्वघाति भणितं तीर्थकरगणधरैः, सर्वजघन्योऽपि रसस्तस्य सर्वघाती भणित इति भावार्थः। सर्वघाती च रसो जघन्यपदेऽपि द्विस्थानक एव भवति नैकस्थानकः, ततो न केवलद्विकस्यैकस्थानरसबन्धसम्भवः ॥५२॥

संक्लिष्टेऽपि मिथ्यादृष्टौ नरकगतिप्रायोग्या वैक्रियतैजसादिकाः शुभप्रकृतयो बन्धमायान्ति, तासामपि तथास्वाभाव्याज्जघन्यतोऽपि द्विस्थानक एव रसो बन्धमधिगच्छति नैकस्थानकः ॥५३॥

आह परः–

**उक्कोसठिई अज्झवसाणेहिं एगठाणिओ होही। सुभियाण तन्न जं ठिइअसंखगुणिया उ अणुभागा॥**

(स्वो०)—'उत्कृष्टस्थित्यध्यवसायैरेकस्थानिको भविष्यति शुभानां, तन्न, यतः स्थित्यसंख्येयगुणा त्वनुभागा इति पदानि पदार्थः–
यैरध्यवसायविशेषैः शुभप्रकृतीनामुत्कृष्टा स्थितिर्भवति, तत्संक्लेशेन एकस्थानिको रसो भविष्यतीति पराभिप्रायः, शुभानां तन्न भवति,
कस्माद्–यतः स्थित्यध्यवसायेभ्योऽसंख्येयगुणा अनुभागबन्धाध्यवसायाः, तुशब्दविशेषणादसंख्येयाध्यवसायैरप्येका स्थितिः, समयवृ-
द्धावसंख्येयाः स्थितिविशेषाः, एकैकस्थितौ असंख्येया रससपर्द्धकविशेषाः, एवं हि द्विस्थानिकरसस्यैवासंख्येया विशेषा भवन्ति उत्कृ-
ष्टस्थितौ, न त्वेकस्थानिकरस इति गाथार्थः ॥५४॥

(मलय०)—अत्र परः प्रश्नयति–ननु सर्वासामपि शुभानामशुभानां वा प्रकृतीनामुत्कृष्टा स्थितिरुत्कृष्टे संक्लेशे वर्त्तमानस्य भवति, नान्यथा। उक्तं च–"सव्वठिईणमुक्कोसगो उक्कोससंकिलेसेणं।" ततो यैरेवाध्यवसायैः शुभप्रकृतीनामुत्कृष्टा स्थितिर्भवति, तैरेवाध्यवसायैरेकस्थानकोऽपि रसो भविष्यति, ततः कथमुच्यते न शुभानामपि प्रकृतीनामेकस्थानकरसबन्धः? अत्रोत्तरमाह–'तन्न' इत्यादि, यदेतदुक्तं तन्न, यस्मात्स्थितेरसंख्येयगुणा एवानुभागाः, तुरेवकारार्थः, कात्र भावना? इति चेत्, उच्यते–इह प्रथमस्थितेरारभ्य समयसमय वृद्ध्या सर्वसंकलनेन परिभाव्यमाना असंख्येयाः स्थितिविशेषाः, एकैकस्यां च स्थितावसंख्येया रसस्पर्द्धकसंघातविशेषाः, तत

चिन्न, तदध्रुवसत्कर्म । एवं च सति यत्परेणोच्यते, नन्वनन्तानुबन्धिनामप्युद्वलना संभवतीति कथं तेषामध्रुवसत्कर्मता नाभिधीयते ? इति तदपास्तमवगन्तव्यम् । तथा चाह—'धुवसंतं' इत्यादि, यतो यस्मात्कारणात्र प्रथमानामनन्तानुबन्धिनां कषायाणां नियमाद्गुणप्राप्तिमन्तरेणावश्यम्भावितया विसंयोगो विसंयोजना भवति, किन्तूत्तरगुणप्राप्तिवशात् । न चोत्तरगुणप्राप्तिवशतः सत्तोपरमः प्रकृतीनामध्रुवसत्कर्मव्यपदेशहेतुः, अन्यथा सर्वासामपि कर्मप्रकृतीनां तत्तदुत्तरगुणयोगतः सत्तोपरमोऽस्तीति सर्वा अप्यध्रुवसत्कर्मव्यपदेशयोग्या भवेयुः, न चैतदस्ति, तस्मात्प्रथमा अनन्तानुबन्धिनः कषाया ध्रुवसंत एव । सम्यक्त्वसम्यग्मिथ्यात्वतीर्थकराहारकाद्विकानि तूत्तरगुणप्राप्तावेव सत्तां लभन्ते, अतस्तानि सुप्रतीतान्येवाध्रुवसत्ताकानि ॥५५॥

अणुदयउदओभयबंधणी उ उभबंधउदयवोच्छया । संतरउभयनिरंतरबंधा उदसंकमुक्कोसा ॥१॥

अणुदयसंकमजेट्ठा उदएणुदए य बंधउक्कोसा । उदयाणुदयवइओ तितितिचउदुहाउ सव्वाओ ॥२॥

(मलय०)—इह वक्ष्यमाणप्रकृतिस्वरूपप्रतिपादकमन्यकर्तृकं द्वारगाथाद्वयमस्ति, तच्च मन्दमतीनां सुखावबोधहेतुरतस्तदपि लिख्यते—इह प्रकृतयस्त्रिधा, तद्यथा—स्वानुदयबन्धिन्यः, स्वोदयबन्धिन्यः, उभयबन्धिन्यश्च । तत्र स्वस्यानुदय एव बन्धो विद्यते यासां ताः स्वानुदयबन्धिन्यः, स्वस्योदये एव बन्धो विद्यते यासां ताः स्वोदयबन्धिन्यः, तथोभयस्मिन्नुदयेऽनुदये वा बन्धोऽस्ति यासां ता उभयबन्धिन्यः । पुनरप्यन्यथा त्रिधा प्रकृतयः, तद्यथा—समकव्यवच्छिद्यमानबन्धोदयाः, क्रमव्यवच्छिद्यमानबन्धोदयाः, उत्क्रमव्यवच्छिद्यमानबन्धोदयाश्च । तत्र समकमेककालं व्यवच्छिद्यमानौ बन्धोदयौ यासां ताः समकव्यवच्छिद्यमानबन्धोदयाः, ताश्च 'उभ' इत्यनेन

१६, एतासां तिर्यग्मनुष्यगतिस्थजीवानां ध्रुवबन्धिनीनामुदयपरावर्त्तनादुभयं, शेषाणां स्वभवयोग्यानां बन्धे परभवयोग्यानामबन्धे उदयो भावनीय इति गाथार्थः ॥५६॥

(मलय०)—सम्प्रत्येताः सर्वा अपि क्रमेण वक्तव्याः, तत्र प्रथमतः स्वानुदयोदयोभयबन्धिनीः प्रकृतीर्निर्दिदिक्षुराह—देवायुर्नरकायुर्देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियाङ्गोपाङ्गलक्षणं वैक्रियषट्कं, आहारकद्विकं—आहारकशरीरमाहारकाङ्गोपाङ्गरूपं तीर्थकरनामेत्येतासामेकादशप्रकृतीनां बन्धः स्वस्वानुदयकाल एव। तथाहि—देवत्रिकस्य देवगतौ वर्त्तमानस्योदयो, नरकत्रिकस्य नरकगतौ, वैक्रियद्विकस्योभयत्र, न च देवा नारका वैताः प्रकृतीर्बध्नन्ति तथाभवस्वाभाव्यात्। तीर्थकरनामापि च केवलज्ञानंप्राप्तावुदयमागच्छति, न च तदानीं तस्य बन्धः, अपूर्वकरणगुणस्थानक एव तस्य बन्धव्यवच्छेदात्। आहारककरणव्यापृतश्च लब्ध्युपजीवनेन प्रमादभावतः, तदुत्तरकालवर्त्ती तु तथाविधविशुद्ध्यभावतो मन्दसंयमस्थानवर्त्तित्वान्नाहारकद्विकबन्धमारभते, तत एताः सर्वा अपि स्वानुदयबन्धिन्यः। ध्रुवोदयानां पुनर्ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकमिथ्यात्वनिर्माणतैजसकार्मणस्थिरास्थिरवर्णादिचतुष्कागुरुलघुशुभाशुभलक्षणानां सप्तविंशतिप्रकृतीनामुदय एव सति बन्ध उपजायते, ध्रुवोदयतया तासां सर्वदोदयभावात्, अतो ध्रुवोदयाः स्वोदयबन्धिन्यः। शेषास्तु निद्रापञ्चकजातिपञ्चकसंस्थानषट्कसंहननषट्कषायषोडशकनवनोकषायपराघातोपघातातपोद्योतोच्छ्वाससातासातवेदनीयोच्चनीचैर्गोत्रमनुष्यत्रिकतिर्यक्त्रिकौदारिकद्विकप्रशस्ताप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थावरसूक्ष्मापर्याप्तसाधारणसुस्वरसुभगादेययशःकीर्त्तिदुःस्वरदुर्भगानादेयायशःकीर्तिरूपा व्यशीतिसंख्याः स्वोदयानुदयबन्धिन्यः। तथाहि—एताः प्रकृतयस्तिरश्चां मनुष्याणां वा यथायोगमुदयेऽनुदये वा बन्धमायान्ति, ततः स्वोदयानुदयबन्धिन्य उच्यन्ते ॥५६॥

षूदयः, दुर्भगोद्योतानादेयतिर्यक्स्त्यानर्द्धित्रिकनीचस्त्रीमध्यमसंहननचतुष्कानां पञ्चदशानां सास्वादनो बन्धकः अविरतादिषूदयः, अरतिशोकसंज्वलनलोभाः भाविता एव, एषा शेषा षडशीतिः। उत्क्रमेणाष्टानामिति सुरत्रिकवैक्रियद्विकायशसां प्रमत्तादिषु बन्ध उदयस्त्वविरते, आहारकद्विकस्यापूर्वकरणे बन्धः प्रमत्ते उदयः, एवं भाव्यमिति गाथार्थः ॥५७-५८॥

(मलय०)—संप्रति समकव्यवच्छिद्यमानबन्धोदयादिप्रकृतीरभिधित्सुराह—गतोऽपनीतश्चरमो लोभः संज्वलनरूपो यस्य स गतचरमलोभः, स चासौ ध्रुवबन्धिप्रकृत्यात्मको मोहश्च गतचरमलोभध्रुवबन्धिमोहः, मोहनीयसत्काः संज्वलनलोभहीनाः पञ्चदशकषायमिथ्यात्वभयजुगुप्सारूपा अष्टादश ध्रुवबन्धिन्य इत्यर्थः तासां, तथा हास्यरतिमनुजानुपूर्वीणां, तथा सूक्ष्मापर्याप्तसाधारणरूपसूक्ष्मत्रिकातपनाम्नोः सपुरुषवेदयोः पुरुषवेदसहितयोः सर्वसंख्यया षड्विंशतिप्रकृतीनां सममेव समकालमेव बन्धोदयौ व्यवच्छिद्येते। तथाहि—सूक्ष्मत्रिकातपमिथ्यात्वानां मिथ्यादृष्टौ, अनन्तानुबन्धिनां सासादने, मनुष्यानुपूर्वीद्वितीयकषायाणामविरते, प्रत्याख्यानावरणकषायाणां देशविरते, हास्यरतिभयजुगुप्सानामपूर्वकरणे, संज्वलनत्रिकपुंवेदयोरनिवृत्तिबादरसम्पराये बन्धोदयौ समकमेव व्यवच्छेदमाप्नुतः, तत एताः समकव्यवच्छिद्यमानबन्धोदयाः। शेषाणां तूक्तवक्ष्यमाणव्यतिरिक्तानां षडशीतिप्रकृतीनां क्रमेण बन्धोदयौ व्यवच्छिद्येते। तद्यथा—पूर्वं बन्धस्य व्यवच्छेदः, पश्चादुदयस्य। तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयानां सूक्ष्मसम्परायचरमसमये बन्धव्यवच्छेदः, उदयव्यवच्छेदः क्षीणकषायचरमसमये। निद्राप्रचलयोर्बन्धव्यवच्छेदोऽपूर्वकरणप्रथमभागे, उदयव्यवच्छेदः क्षीणकषायद्विचरमसमये। तथाऽसातवेदनीयस्य प्रमत्ते, सातवेदनीयस्य सयोगिचरमसमये बन्धव्यवच्छेदः, उदयव्यवच्छेदः पुनरुभयोरपि सयोगिकेवलिचरमसमयेऽयोगिकेवलिचरमसमये वा। तथा चरमसंस्थानस्य मिथ्यादृष्टौ, मध्यसंस्थानचतुष्टयाप्रशस्तविहायोगतिदुःस्वरनाम्नां

उपादानेति। तत्रापि तद्वतोरितिपक्षेऽपि। पूर्वापरप्रतीत्योस्सविकल्पवेद्यतया तेन तयोर्भेदस्य ग्रहणाद्भेदाग्रहस्य विशेषणस्याऽसत्त्वेन तद्विशिष्टोपादानोपादेयभावाभावादेकसन्तानपतितयोरपि तयोःप्रतिसन्धानं न स्यादित्याह प्रकृतेऽपीति। तत्सत्त्वात्—शिष्यालयविज्ञानाचार्यालयविज्ञानयोर्भेदाग्रहस्य सत्त्वात्, आलयविज्ञानं हि बौद्धमते स्वसम्वेदनसंवेद्यमेवाभ्युपगतमिति तत्र सविकल्परूपभेदग्रहाऽसम्भवात्, तथा च शिष्याचार्यधियोरपि प्रतिसन्धानं स्यात् तत्प्रयोजकस्य भेदाग्रहविशिष्टोपादानोपादेयभावस्य तत्र सत्त्वादितिभावः। भेदग्रहेपि तत्तच्छरीरव्यक्तिभेदग्रहे सत्यपि, प्रतिसन्धानात् बाल्ये योऽहं यदन्वभूवं सोऽहं तदेवेदानीं स्मरामीति प्रतिसन्धानात्, पितृशरीरवैजात्यस्य पितृशरीरवैजात्यत्वेन बालशरीरे कथमग्रहणमित्यत आह पितुरनुपस्थित्येति, पितृशरीरस्यानुपस्थित्येत्यर्थः, तद्वैजात्यस्य पितृशरीरवैजात्यस्य, तत्त्वेन पितृशरीरवैजात्यत्वेन, भेदाग्रहरूपविशेषणमुपपाद्योपादानोपादेयभावरूपविशेष्यस्योपपादनायाह पितृज्ञानस्यापीति, तथा च पितृपुत्रज्ञानयोरुपादानोपादेयभावोप्यऽस्तीति पित्रनुभूतस्य पुत्रेण प्रत्यभिज्ञानप्रसङ्ग इतिभावः, इदमिति पितृपुत्रज्ञानयोः प्रतिसन्धानप्रसञ्जनमित्यर्थः, ज्ञानावच्छेदकशरीरवैजात्यस्य वैजात्यत्वेनाग्रहो भेदाग्रह इति पक्ष एव भिन्नजन्मज्ञानाव्याप्तेरितिदोषं सङ्क्रमयतां मतमुपनिबध्नाति—

केचित्तु जातिस्मरणस्य प्राग्जन्मानुभूतप्रतिसन्धानं भवद्भिरभ्युपेयते तत् न स्यात् जातिस्मरणस्यानुभवस्मरणावच्छेदकशरीरयोर्वैजात्यस्य तत्त्वेन ग्रहसम्भवादित्याहुः। अन्ये तूपस्थिताच्छरीराद् भेदस्याग्रहोऽनुपस्थितादपि वा, आद्ये भिन्नेति, द्वितीयेऽनुपलब्धेतीत्याहुः, घटकपालक्षणयोर्भेदाग्रहाभावेन लक्षणाव्याप्तेश्च,

केचित्त्विति। जातिस्मरणतद्वतोर्बौद्धमतेनाऽभेदाज्जातिस्मरणस्येत्युक्तम्, अन्यमते जातिस्मरणवत इत्यर्थो ग्राह्य इति, तत्त्वेन

सान्तरास्सान्तरनिरन्तरा निरन्तरा इति प्रकृतीनां त्रैविध्यमाह–

**धुवबंधिणी उ तित्थगरनाम आउ य चउक्क बावन्ना । एया निरंतराओ सगवीसुभ संतरा सेसा ॥५९॥**

(स्वो०)—'ध्रुवबन्धिन्यः तीर्थङ्करनाम आयुःचतुष्कं द्वापञ्चाशत् एता निरंतराः, सप्तविंशतिरुभयाः, सान्तरा शेषा' इति पदानि। पदार्थः–ध्रुवबन्धिन्यः सप्तचत्वारिंशत्पूर्वोक्तास्तीर्थङ्करनाम आयुश्चतुष्कयुक्ता द्वापञ्चाशदेता निरन्तराः प्रकृतयः, सप्तविंशतिरुभया वक्ष्यमाणाः, शेषाः सान्तराः अरति२ हास्य २ नारकाहारकद्विकान्यसाताशुभविहायोगतिस्त्रीनपुंसकातपोद्योतैकेन्द्रियविकलजातयः, आद्यरहितानि संहननसंस्थानानि, स्थिरशुभयशःस्थावरादिदशकं एता एकचत्वारिंशच्छेषा इति गाथार्थः ॥५९॥

(मलय०)—साम्प्रतं सान्तरादिप्रकृतीः प्ररूपयति–ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणनवककषायषोडशकमिथ्यात्वभयजुगुप्साऽगुरुलघुनिर्माणतैजसकार्मणोपघातवर्णादिचतुष्टयरूपाः सप्तचत्वारिंशद् ध्रुवबन्धिन्यः, तीर्थकरनामायुश्चतुष्टयमिति द्विपञ्चाशत्संख्याः प्रकृतयो निरन्तरा वक्ष्यमाणशब्दार्था वेदितव्याः, तथा वक्ष्यमाणाः सप्तविंशतिप्रकृतय 'उभ' इति–उभयाः सांतरनिरन्तरा इत्यर्थः, शेषास्त्वेकचत्वारिंशत्प्रकृतयः सान्तराः ॥५९॥

पूर्वोद्दिष्टाः सप्तविंशतिप्रकृतीराह–

**चउरंसउसभपरघाउसासपुंसगलसायसुभखगई । वेउव्विउरलसुरनरातिरिगोयदु सुसरतस तिचऊ ॥६०॥**

(स्वो०)—'चतुरस्रर्षभपराघातोच्छ्वासपुंसकलसातशुभखगतयः। वैक्रियौदारिकसुरनरतिर्यग्गोत्रद्विकसुस्वरत्रसत्रिकचतुः' पदानि।

णवर्त्तिनोः कार्यकारणभावस्तयोर्नैकदेशवृत्तित्वम्, आधारस्य तव मते क्षणिकत्वेन क्षणद्वयावस्थायित्वाभावात्, न द्वितीयः, यतो ययोरेकक्षणवर्त्तिनोरेकाधारत्वं न तयोः कार्यकारणभावः, पूर्वापरक्षणवर्त्तिनोरेव तत्त्वादित्यसम्भवदोषग्रस्तमेव लक्षणं स्यादिति समाधत्ते-न, आधारस्यापीति, ननु यद्यप्याधारस्य क्षणिकत्वेनैकाधारत्वं पूर्वापरक्षणवर्त्तिनोर्न वास्तवं तथापि काल्पनिकं तु स्यादेवेति चेत्, तर्हि शरीरबुद्ध्याद्योरप्येकदेशताभिमानात्कार्यकारणभावाभिमानाच्चोपादानोपादेयभावस्स्यादित्याह काल्पनिकस्येति, एतेनेत्यादिकं विवृणोति एतेनेत्यादिना,एतेनेत्यस्यैकोऽर्थः घटकपालाद्यव्यापकत्वेनेति, घटकपालयोरभ्रान्तसमतैकावसायो नास्ति, विजातीयत्वात्, प्रकृतिविकारभावोऽपि नास्ति, अत्यन्तविसदृशसन्तान एव तदुपगमात्,तथा च लक्षणद्वयस्यापि तत्राव्याप्त्येत्यर्थः। द्वितीयोऽर्थः लक्षणयोः परस्पराक्रान्ताव्यापकत्वेन वेति, एकलक्षणविशिष्टेऽपरलक्षणाभावेनाव्याप्त्येत्यर्थः, लक्षणस्येतरभेदानुमापकतया लक्ष्यस्य पक्षरूपतया तदेकदेशे अभ्रान्तसमतैकावसायरूपैकलक्षणविशिष्टे सभागसन्ताने प्रकृतिविकारभावरूपापरलक्षणाऽभावात्, एवं प्रकृतिविकारभावरूपैकलक्षणविशिष्टे विसभागसन्ताने अभ्रान्तसमतैकावसायरूपापरलक्षणाभावादनुमाने भागासिद्धिदोष इति भावः। अभ्रान्तसमतैकावसाय इति विवृणोति—अभ्रान्ततयेत्यादि। पर्यवसितलक्षणमाह कार्यकारणभावे सतीत्यादिना। पर्यवसितोक्तलक्षणे निमित्तपर्यन्तानुधावनफलमाह—

अवसायस्य लक्षणघटकत्वे तदभावदशायामव्याप्तिरित्ययं पन्थाः। स्वरूपयोग्यताया निवेशाच्च न फलानुपधानदशायामव्याप्तिरिति गुणानन्दः। प्रकृतिविक्रिये प्रकृतिविकारभावः, इदं च विसभागे सन्ताने, सभागे चाद्यं लक्षणं, तत्र च पुञ्जात् पुञ्जोत्पत्तेरुपगमान्निरन्तरोत्पन्नयोर्नीलसन्तानयोः परस्परोपादानोपादेय-

सांतरा इति व्युत्पत्तिबलात् । ताश्चेमास्तद्यथा—असातवेदनीयस्त्रीवेदनपुंसकवेदहास्यरत्यरतिशोकनरकद्विकाहारकद्विकाद्यरहितसंस्थानपञ्चकाद्यरहितसंहननपञ्चकाद्यजातिचतुष्टयातपोद्योताप्रशस्तविहायोगतिस्थिरशुभयशःकीर्त्तयः स्थावरादिदशकं च । एता हि जघन्यतः समयमात्रं बध्यन्ते, उत्कर्षतोऽन्तर्मुहूर्त्तं, परतस्तु निजबन्धहेतुसद्भावेऽपि तथास्वाभाव्यतस्तद्योग्याध्यवसायपरावर्तनेन नियमतः प्रतिपक्षप्रकृतीर्बध्नाति, ततः सान्तरा अभिधीयन्ते । तथा यासां प्रकृतीनां जघन्यतः समयमात्रं बन्धः, उत्कर्षतः समयादारभ्य नैरंतर्येणान्तर्मुहूर्त्तस्योपर्यप्यसंख्येयं कालं यावत् ता उभयाः सान्तरनिरन्तरा इत्यर्थः । बन्धमधिकृत्यान्तर्मुहूर्त्तमध्ये सांतराश्च निरन्तराश्चेति कृत्वा, ताश्च प्रागुक्ताः समचतुरस्रादयः सप्तविंशतिप्रकृतयः, ता हि जघन्यत समयमात्रं बध्यन्ते, ततः सान्तराः, उत्कर्षतोऽनुत्तरसुरादिभिरसंख्येयमपि कालं, ततोऽन्तर्मुहूर्त्तमध्ये व्यवच्छेदाभावान्निरन्तराः । 'तंमि उ जहन्ने' इति–जघन्ये इति जघन्येनापि याः प्रकृतयोऽन्तर्मुहूर्त्तं यावन्नैरन्तर्येण बध्यन्ते ता निरन्तराः, निर्गतं बन्धमधिकृत्यान्तर्मुहूर्त्तमध्येऽन्तरं व्यवधानं व्यवच्छेदो यकाभ्यस्ता निरन्तरा इति व्युत्पत्तेः, ताश्च प्रागुक्ता ध्रुवबन्धिन्यादयः, ता हि जघन्येनाप्यन्तर्मुहूर्त्तं यावदवश्यं नैरन्तर्येण बध्यन्ते इति ॥६१॥

अथ प्रकृतीनां यथार्थमभिधानचतुष्टयमाह–

**उदए व अणुदए वा बंधाओ अन्नसंकमाओ वा। ठिइसंतं जाण भवे उक्कोसं ता तयक्खाओ ॥६२॥**

(स्वो०)—'उदये वाऽनुदये वा बन्धादन्यसंक्रमाद्वा स्थितिसत्कर्म यासां भवेदुत्कृष्टं तास्तदाख्या' इति पदानि । पदार्थस्तु–उदयकालेऽनुभूयमानानां स्वबन्धादुत्कृष्टं स्थितिसत्कर्म यासां ता उदयबन्धोत्कृष्टाभिधानाः, एवमनुदये बन्धादुत्कृष्टं स्थितिसत्कर्म यासां ता अनुदयबन्धोत्कृष्टाः, उदयेऽन्याभ्यः संक्रमेण उत्कृष्टं स्थितिसत्कर्म यासां ता उदयसंक्रमोत्कृष्टाः, अनुदये संक्रमेण उत्कृष्टं स्थितिसत्कर्म

प्रतिसन्धाननियामक उपादानोपादेयभावः, प्रतिसन्धानं च स इत्यात्माश्रयात्, तद्योग्यतेति चेत्, सैव केति चिन्त्यं, शक्तिविशेष एव सा, यद्यपि प्रतिसन्धानानुकूला शक्तिः प्रतिसन्धातर्यैव, न प्रतिसन्धेये, तस्य चिरातीतत्वेनाप्रयोजकत्वात्, तथापि तस्यापि शक्तिविषयत्वमित्यनुसन्धेयानुसन्धातृभाव एवोपादानोपादेयभाव इति चेत्, स तावन्न प्रतिक्षणनियतः,

एकसन्तानत्वमिति, तथाभावप्रसङ्गः एकसन्तानत्वप्रसङ्गः, तथा च शिष्याचार्यबुद्धयोरप्युपादानोपादेयभावप्रसङ्गेन प्रतिसन्धानप्रसङ्ग इतिभावः। स्वलक्षणे स्वस्य प्रवेशने स्वेनैव स्वस्य व्यवस्थापनं स्यात्, तथाचात्माश्रयस्स्यादित्याह कथं तेनैवेति, तद्योग्यतेति प्रतिसन्धानयोग्यतेत्यर्थः। उपादानोपादेयभावलक्षणमिति प्रकृतम्, प्रतिसन्धातरि स्मरणलक्षणोत्तरज्ञाने। तस्येति प्रतिसन्धेयस्य पूर्वज्ञानस्येत्यर्थः, अनुभवविषयकप्रतिसन्धानानुकूलशक्तिस्स्मरण इत्यनुभवस्य स्वकार्यविषयत्वाच्छक्तिविषयत्वमित्याह तस्यापि शक्तिविषयत्वमिति। यथा घटानुकूला शक्तिः कपालमात्रे, नतु तत्तत्कपालनियता, तथा प्रतिसन्धानानुकूला शक्तिरपि ज्ञानमात्रे, नतु तत्तज्ज्ञानव्यक्तिनियता, तथाच ज्ञानत्वेन सजातीययोश्शिष्याचार्यधियोरप्युपादानोपादेयभाव उक्तशक्तिमत्त्वात् स्यादित्युत्तरयति स तावन्नेति, स शक्तिविशेषः, न प्रतिक्षणनियतः न प्रतिव्यक्तिमात्रवृत्तिः, निषेधे हेतुमाह—

यथा हि तेन तत्कर्त्तव्यं तथा तादृशेन तत्कर्त्तव्यमित्यपि नियम एव, तज्जन्यजातीयकार्यमवश्यं तत्सजातीयकारणजन्यमित्यस्य सर्वसिद्धत्वात्, अन्यथा तेन तत्कर्त्तव्यमित्यपि न निश्चीयेत, क्षणस्य दुरुन्नेयत्वात्, तथा च निरीहं जगज्जायेत, प्रतिव्यक्तिकार्यकारणभावस्यानागतकार्यव्यक्तेरनुपस्थित्या ग्रहीतुमशक्यत्वात्,

वेदरूपं, शुभविहायोगतिः, वज्रर्षभनाराचादीनि पञ्च संहननानि, समचतुरस्रादीनि पञ्च संस्थानानि, उच्चैर्गोत्रमित्येतास्त्रिंशत्प्रकृतय उदयसंक्रमोत्कृष्टाः। आसां हि प्रकृतीनामुदयप्राप्तानां या विपक्षभूता नरकगत्यसातवेदनीयमिथ्यात्वादयः प्रकृतयस्तासामुत्कृष्टां स्थितिं बध्वा भूय आसामेवोदयप्राप्तानां बन्धमारभते, बध्यमानासु चैतास्वनन्तरबद्धनरकगत्यादिविपक्षप्रकृतिदलिकं संक्रमयति, शुभप्रकृतीनां च स्थितिः स्वबन्धेन स्तोकैवात्र भवति, अशुभानां तूत्कृष्टा, ततः संक्रमत आसामुत्कृष्टा स्थितिरवाप्यते, इत्येता उदयसंक्रमोत्कृष्टाभिधानाः ॥६३॥

मणुयाणुपुव्विमीसगआहारगदेवजुगलविगलाणि। सुहुमाइतिगं तित्थं अणुदयसंकमण उक्कोसा ॥६४॥

(स्वो०)—मनुजानुपूर्वी सम्यग्मिथ्यात्वं आहारकयुगलं देवयुगलं विगलेन्द्रियजातित्रिकं सूक्ष्मादित्रिकं तीर्थङ्करनाम एताः त्रयोदशानुदयसंक्रमोत्कृष्टाः। कथं? इत्युच्यते—मिथ्यादृष्टिमनुष्यस्य एता अनुदयप्राप्ता, मिथ्यात्वे नामोत्कृष्टस्थितिकाः प्रकृतीश्च बद्धा प्रागवत्तथाविधो भूत्वा तद्बन्धक इति भावः, ततोऽनुदये संक्रमयति, अतोऽनुदयसंक्रमोत्कृष्टा इति गाथार्थः ॥६४॥

(मलय०)—साम्प्रतमनुदयसंक्रमोत्कृष्टाः प्रतिपादयति—मनुष्यानुपूर्वी, सम्यग्मिथ्यात्वमाहारकयुगलं—आहारकशरीराहारकाङ्गोपाङ्गलक्षणं, देवयुगलं—देवगतिदेवानुपूर्वीलक्षणं, विकलत्रिकं—विकलेन्द्रियजातित्रिकं द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिरूपं, सूक्ष्मत्रिकं—सूक्ष्मापर्याप्तसाधारणलक्षणं, तीर्थकरनाम, एतास्त्रयोदश प्रकृतयोऽनुदयसंक्रमोत्कृष्टाः। यत एतासामुत्कृष्टा स्थितिः स्वबन्धतो नावाप्यते, किन्तु संक्रमतः, संक्रमतोऽप्युत्कृष्टा स्थितिस्तदावाप्यते, यदा एतद्विपक्षप्रकृतीरुत्कृष्टस्थितीर्बध्वा तदनन्तरमेतासु बध्यमानासु तद्दलिकं संक्रमयति। एतद्विपक्षप्रकृतीनां चोत्कृष्टस्थितिबन्धकः प्रायो मिथ्यादृष्ट्यादिर्मनुष्यः, न च तदानीमासामुदयोऽस्तीत्यनुदय-

ऽपि नोपलभ्येत, प्रतिसन्धाने शक्तेः प्रतिव्यक्तिविश्रान्तत्वेऽप्रतिसन्धेयाऽप्रतिसन्धातृव्यक्त्योरुपादानोपादेयभावो न स्यात्, तत्र तादृशशक्तौ मानाभावादित्यपि द्रष्टव्यम्। नापि प्रतिसन्ताननियतो, नियतव्यक्तिवृत्तित्वावच्छेदकविशेषाभावात्, नहि शिष्याचार्यनीलधियोर्मात्रयापि जातिकृतं विशेषमुपलभामहे, अदृश्यत्वादयमदोष इति चेत्, न, दृश्यसमवायिन्या जातेरदृश्यत्वानुपपत्तेः, योग्यव्यक्तिवृत्तित्वेनैव जातेर्योग्यत्वात्, उपपत्तौ वा धूमादावप्यवकाशप्रसङ्गात्, एवं यथा कारणेषु दृश्येषु ज्ञानविशेषेषु प्रतिसन्धानजनकतावच्छेदिका जातिरदृश्या, एवं कार्येष्वपि दृश्येषु धूमविशेषेषु वह्निजन्यतावच्छेदिका जातिरदृश्या स्यादिति शङ्कया धूमसामान्ये वह्निजन्यत्वाग्रहात् न तेन कार्येण कारणस्य वह्नेरनुमानं स्यात्, एवमेतदाद्यस्यैव तथाभावादिति चेत्, न, आद्योऽपि धूमो न तत्त्वेन वह्निजन्योऽपि तु तदवान्तरजात्येति शङ्काया दुर्वारत्वात्, तस्मात् कारणस्य वैजात्ये प्रमाणसिद्धे कार्यस्य सौसादृश्येऽप्यवान्तरजातिभेदः कल्प्यते, हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात्, अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात्, कारणसाजात्येऽपि तु कार्यवैजात्यं सहकारिवैजात्ये पर्यवस्यतीति युक्तमुत्पश्यामः।

आकस्मिकमिति, कार्यनियतजातीयत्वस्यानुगतजातिरूपेण कारणत्वानियम्यत्वात् तस्य चात्रानभ्युपगमादितिभावः। नोपलभ्येतेति तथाच कार्यसामान्येन कारणसामान्यानुमानमपि न स्यादिति धूमत्वाद्यवच्छिन्नेन वह्नित्वाद्यवच्छिन्नानुमानाभावात्तदर्थिनस्तत्र प्रवृत्तिर्न स्यादिति भावः। प्रतिसन्धानानुकूलायाश्शक्तेर्ययोरनुभवस्मरणव्यक्त्योः प्रतिसन्धानं तत्तद्व्यक्तिविश्रान्तत्वे अप्रति-

क्रमो नापि बध्यमानमायुर्दलिकं पूर्वबद्धस्यायुष उपचयाय प्रभवति, तत एकेनापि प्रकारेण तिर्यग्मनुष्यायुषोरुत्कृष्टा स्थितिर्नावाप्यत इति ते अनुदयबन्धोत्कृष्टादिसंज्ञाचतुष्टयातीते, देवनरकायुषी तु यद्यपि परमार्थतोऽनुदयबन्धोत्कृष्टे, तथापि प्रयोजनाभावतः पूर्वसूरिभिः संज्ञाचतुष्टयातीते विवक्षिते, इति तयोरपि प्रतिषेधः ॥६५॥

क्षपकश्रेण्युपयोग्यभिधानद्वयमभिधातुकाम आह–

चरिमसमयंमि दलियं जासिं अन्नत्थसंकमे ताओ। अणुदयवइ इयरीओ उदयवई होंति पगईओ ॥६६॥

(स्वो०)—'चरमसमये' अन्त्यसमये, दलं यद् व्यवस्थितं तत् यासामन्यत्र अन्यासु प्रकृतिषु संक्रमयेज्जीवः परिणामविशेषेण नयेत्, अन्यप्रकृतिव्यपदेशेनानुभवेत् न स्वोदयेनेति भावः ता अनुदयवत्यः। इतरा याः स्वोदयेन चरमसमये जीवोऽनुभवति ता उदयवत्य इत्यभिधानद्वयलक्षणमिति गाथार्थः ॥६६॥

(मलय०)—सम्प्रत्युदयवत्यनुदयवतीप्रकृतिलक्षणमाह–यासां प्रकृतीनां दलिकं चरमसमयेऽन्तसमयेऽन्यत्रान्यासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयेत्, संक्रमय्य चान्यप्रकृतिव्यपदेशेनानुभवेत्, न स्वोदयेन, ता अनुदयवत्योऽनुदयवतीसंज्ञाः, इतरास्तु प्रकृतय उदयवत्यो भवन्ति, यासां दलिकं चरमसमये स्वविपाकेन वेदयते ॥६६॥

ता एवाभिधातुकाम आह–

नाणंतरायआउगदंसणचउवेयणीयमपुमित्थी। चरिमुदयउच्चवेयग उदयवई चरिमलोभो य ॥६७॥

तृणजन्यवह्नेररणिजन्यवह्निना सह वह्नित्वेन साजात्येऽप्यवान्तरजातिभेदो व्यतिरेकव्यभिचारवारणाय प्रतिनियतकार्यतावच्छेदकतया कल्प्यते प्रकृते त्वनुसन्धातृरूपं यच्छिष्यगतं स्मरणं यच्चाचार्यगतं स्मरणं तत्र वैजात्यं न प्रत्यक्षं येन तत्प्रयोज्यतावच्छेदकतया कार्यवैजात्यमपि कल्प्येत, यत्र कारणसाजात्येऽपि कार्यवैजात्यमनुभूयते यथा घटकारणस्य दण्डस्य गवानयनकारणस्य च दण्डस्य दण्डत्वेन साजात्येऽपि घटगवानयनकार्यवैजात्यं, तत्र कपालगवादितत्तत्सहकारिवैजात्येन सामग्रीवैजात्यं नियामकं, न च प्रकृते कार्यवैजात्यमनुभूयते, शिष्याचार्यप्रतिसन्धानयोस्सजातीयत्वात्, तथा चाचार्यानुभूतस्य शिष्येऽनुसन्धानप्रसङ्गस्तदवस्थ एवेत्याशयेनाह तस्मादिति, अप्रयोजकत्व इति हेतुवैजात्यस्याप्रयोजकत्वे फलवैजात्यस्य कार्यतानवच्छेदकत्वं स्यात्, तथाच विजातीयकार्यस्य सत्त्वमसत्त्वं वा स्यादिति भावः। जन्मकालीनाद्यज्ञानं ज्ञानोपादानकं ज्ञानत्वात् इदानींतनज्ञानवदित्यनुमानेन पूर्वभवस्य एतद्भवीयचरमज्ञानं ज्ञानोपादानं ज्ञानत्वात् पूर्वज्ञानवदित्यनुमानेनोत्तरभवस्य सिद्धिरपि न स्यात्, यतो ज्ञानत्वावच्छिन्नं प्रति ज्ञानत्वेन ज्ञानस्य नोपापादानत्वं किन्तु ज्ञानत्वावान्तरजात्यवच्छिन्नं किञ्चिद् ज्ञानं प्रति ज्ञानत्वावान्तरजात्यवच्छिन्नस्य किञ्चिच ज्ञानं प्रत्यचेतनत्वावान्तरजात्यवच्छिन्नस्योपादानत्वम्, एवं चाद्यज्ञाने ज्ञानत्वावान्तरजात्यवच्छिन्नजन्यतावच्छेदकावान्तरजातेरनभ्युपगमेन तं प्रति किञ्चिदचेतनमेवाऽचेतनत्वावान्तरजात्योपादानम्, एवं मरणाव्यवहितप्राक्कालीनज्ञानेऽपि ज्ञानजनकतावच्छेदकावान्तरजातेरनभ्युपगमेन तन्नोत्तरज्ञानजनकमित्येवं परलोकोपि न सिद्ध्येदिति परलोकमभ्युपगच्छता न प्रमाणमन्तरेण वैजात्यमङ्गीकरणीयमित्याशयेनाह—

यदि च विनैव प्रमाणं वैजात्यमादाय कार्यकारणभावः कल्प्यते, तदा परलोकोऽपि न सिद्ध्येत्, इहैव

(मलय०)—सम्प्रति ता एवोदयवतीः प्रकृतीरभिधातुकाम आह—ज्ञानावरणपञ्चकमन्तरायपञ्चकमायुश्चतुष्टयं दर्शनचतुष्टयं सातासातवेदनीये स्त्रीनपुंसकवेदौ चरमोदया नामनवकरूपाः, ताश्चेमाः—मनुष्यगतिः पञ्चेन्द्रियजातित्रसनामबादरनामपर्याप्तकनामशुभनामसुस्वरनामादेयनामतीर्थकरनाम, तथोच्चैर्गोत्रं वेदकसम्यक्त्वं चरमलोभः—सञ्ज्वलनलोभः इत्येताश्चतुस्त्रिंशत्प्रकृतय उदयवत्यः। तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायान्त्यसमये, चरमोदयानां च नामनवकलक्षणानां सातासातवेदनीययोरुच्चैर्गोत्रस्य च सर्वसङ्ख्यया द्वादशप्रकृतीनामयोगिकेवलिचरमसमये, संज्वलनलोभस्य सूक्ष्मसम्परायान्त्यसमये, वेदकसम्यक्त्वस्य स्वक्षपणपर्यवसानसमये, स्त्रीनपुंसकवेदयोः क्षपकश्रेण्यामनिवृत्तिबादरसम्परायाद्धायाः सङ्ख्येयेषु भागेष्वतिक्रान्तेषु तदुदयान्त्यसमये, आयुषां च स्वस्वभवचरमसमये स्ववेदनमस्ति, तत एता उदयवत्योऽभिधीयन्ते। यद्यपि सातासातवेदनीययोः स्त्रीनपुंसकवेदयोश्चानुदयवतीत्वमपि सम्भवति, तथापि प्रधानमेव गुणमवलम्ब्य सत्पुरुषा व्यपदेशं प्रयच्छन्तीत्युदयवत्यः पूर्वपुरुषैरुपदिष्टाः। शेषास्तु चतुर्दशोत्तरशतसङ्ख्या अनुदयवत्यः, तासां दलिकस्य चरमसमयेऽन्यत्र संक्रमणतः स्वविपाकवेदनाभावात्। तथाहि—चरमोदयसंज्ञनामनवकनरकद्विकतिर्यग्द्विकैकद्वित्रिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणातपोद्योतवर्जाः शेषा नाम्न एकसप्ततिप्रकृतयो नीचैर्गोत्रं चेत्येता द्विसप्ततिप्रकृतीः सजातीयासु परप्रकृतिषूदयमागतासु चरमसमये स्तिबुकसंक्रमेण प्रक्षिप्य परप्रकृतिव्यपदेशेनानुभवत्ययोगिकेवली। एवं निद्राप्रचले क्षीणकषायः। तथा मिथ्यात्वं सम्यग्मिथ्यात्वे, तदपि सम्यक्त्वे प्रक्षिप्य सप्तकक्षयकालेऽनुभवति, अनन्तानुबन्धिनां क्षपणसमये तद्दलिकं बध्यमानासु चारित्रमोहनीयप्रकृतिषु गुणसंक्रमेण संक्रमय्योदयावलिकागतमुदयवतीषु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति। स्थावरसूक्ष्मसाधारणातपोद्योतैकद्वित्रिचतुरिन्द्रियजातिनरकद्विकतिर्यग्द्विकरूपा नामत्रयोदशप्रकृतीर्बध्यमानायां

क्षणप्रतिसन्धाननियामको विशेषोऽस्तीति तयोरनुसन्धेयानुसन्धातृभावादनुसन्धानं,नास्ति च शिष्याचार्यधियोर्भिन्नसन्तानगतयोरिति न तत्रानुसन्धानमिति भावः। निषेधे हेतुमाह नैयायिकः पूर्वापरधियामिति, तज्जातीयत्वम् प्रतिसन्धानप्रयोजकतावच्छेदकजातिरूपेण सजातीयत्वम् , जातिश्च ज्ञानत्वमृते नान्येति तद्रूपेण सजातीयत्वं शिष्याचार्यधियोरपीत्यत्रापि प्रतिसन्धानप्रसङ्ग इतिभावः। ययोर्नैककर्तृकत्वं न तयोः प्रतिसन्धीयमानत्वमिति व्यतिरेके कार्यकारणभावाभावस्य प्रतिसन्धीयमानत्वाभावरूपसाध्यव्यापकत्वे नैककर्तृकत्वाभावरूपसाधनाव्यापकत्वेन चोपाधित्वं, तत्प्रतियोगित्वाच्च कार्यकारणभावस्योपाधित्वं प्रतिसन्धानप्रयोजकत्वलक्षणं पराभिप्रेतमितोऽपि न सम्भवतीत्याह—

अथवा सम्भवन्नपि नायमुपाधिस्तत्र तावन्मात्रस्यानिबन्धनत्वात्, तथा हि सर्वज्ञः स्वप्रत्ययान् एककर्तृकतया प्रतिसन्धत्ते, न वा, आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धम्, ज्ञानाद्भेदश्च, धियामस्थैर्यस्य सर्वैरेव प्रतीतेः, प्रतिसन्धातुः क्षणिकतायाः सर्वज्ञेनाप्यनाकलनात्। अथ न प्रतिसन्धत्ते, न तर्हि कार्यकारणभावमात्रनिबन्धनं प्रतिसन्धानं, न ह्यस्ति सम्भवो यदन्वयेऽपि यस्यानन्वयस्तत्तावन्मात्रनिबन्धनमिति। प्रतिसन्धत्ते न तु सत्यं तत्प्रतिसन्धानमतो न तावन्मात्रात् कर्त्रैकत्वसिद्धिरिति चेत्, तर्त्कि सर्वज्ञस्यापि विपर्ययः, आहार्यो न दोषावह इति चेत्, निबन्धनाभेदेऽपि कथमेक आहार्योऽन्यस्तु स्वरसवाहीति वाच्यम्, निबन्धनं बुद्धीनामुपादानोपादेयभावः,

अथवेति, अयं कार्यकारणभावः। तत्र प्रतिसन्धाने, तावन्मात्रस्य कार्यकारणभावमात्रस्य, स्वप्रत्ययान् स्वज्ञानानि,

॥ अर्हम् ॥

# अथ चतुर्थं द्वारं प्रारभ्यते ॥

उक्तं बन्धव्यद्वारम् । अधुना चतुर्थं हेतुद्वारमुच्यते—

**बंधस्स मिच्छअविरइकसायजोगा य हेयवो भणिया । ते पंच दुवालस पन्नवीस पन्नरस भेइल्ला ॥१॥**

(स्वो०)—'बन्धस्य मिथ्यात्वाविरतिकषाययोगाश्च हेतवोभणिताः, ते पञ्चद्वादशपञ्चविंशतिपञ्चदशभेदवन्त' इति पदानि । पदार्थस्तु—जीवकर्मपुद्गलसंश्लेषो बन्धः, तस्य मिथ्यात्वाविरतिकषाययोगाश्चत्वारो मूलहेतवो भणिताः, चकारोऽनुक्तसमुच्चयार्थः, 'पडिणीय अंतरातिय' इत्यादि प्रतिकर्म विशेषहेतवोऽशेषाः सङ्गृहीताः, तेषां मूलहेतूनां उत्तरभेदसङ्ख्या यथासङ्ख्येन पञ्च द्वादश पञ्चविंशतिः पञ्चदशेति गाथार्थः ॥१॥

(मलय०)—तदेवमुक्तं बन्धव्यद्वारं, सम्प्रति बन्धहेतुलक्षणं चतुर्थं द्वारमभिधित्सुराह—बन्धस्य प्रागुक्तस्वरूपस्य हेतवः सामान्येन भणितास्तीर्थंकरगणधरैश्चत्वारः, तद्यथा—मिथ्यात्वमविरतिः कषाया योगाश्च । अत्र च शब्दः "पडिणीयमन्तराइय" इत्यादिरूपप्रतिकर्मविशेषहेतुसूचकः । ते च मिथ्यात्वादयोऽवान्तरभेदैश्चिन्त्यमाना यथाक्रमं पञ्चद्वादशपञ्चविंशतिपञ्चदशभेदवन्तः । पञ्चभेदं मिथ्यात्वं, द्वादशभेदाऽविरतिः, पञ्चविंशतिभेदाः कषायाः, पञ्चदशभेदा योगाः । "भेइल्ला" इत्यत्र इल्लशब्दो मत्वर्थे प्राकृतलक्षणवशादवसेयः,

मिथ्यात्वादिबन्धहेतवः

भेददर्शनमेवास्तीत्याहार्यमेवैककर्तृकत्वप्रतिसन्धानं तेषामपि स्यादिति समाधत्ते–न, प्रवृत्तिविज्ञानानामिति, तासामपि बुद्धीनामपि, भेददर्शनमेवोपपादयति रूपमद्राक्षमित्यादिना। प्रतीत्यतीतत्वाद्यवगाहित्वादिति प्रतीतिगतातीतत्वाद्यवगाहित्वादित्यर्थः, अत्रादिपदेन वर्त्तमानत्वानागतत्वे ग्राह्ये, नच प्रत्येतव्यं यद्रूपं सौरभं रसश्च तद्गतमेव यथाक्रममतीतत्वं वर्त्तमानत्वमनागतत्वञ्च भासते, नतु यथोक्तप्रतीतिगतं, तथा चास्मदादीनां न बुद्धीनां भेददर्शनमित्यभ्युपगमे दोषमाह प्रत्येतव्यगततदवगाहित्व इति, अनुपपत्तेरिति प्रत्येतव्यस्य वर्त्तमानत्वेनातीतत्वानागतत्वयोरभावेन तदवगाहित्वस्योक्तप्रत्ययानामनुपपत्तेरित्यर्थः। बुद्धित्वेन रूपेण पूर्वापरप्रत्ययानां भेदग्रहो नाऽस्तीत्येककर्त्तृकत्वेन पूर्वापरप्रत्ययानामभेदारोपो भविष्यतीत्याशङ्कते–बुद्धिमात्रेणेति, वृक्षत्वेन काष्ठत्वेन काष्ठत्वेनाङ्गारत्वेनाङ्गारत्वेन भस्मत्वेन च गृहीतभेदयोरपि वृक्षकाष्ठयोः काष्ठाङ्गारयोरङ्गारभस्मनोरुपादानोपादेयभावस्य पार्थिवत्वसामान्यधर्मेण भेदाग्रहस्य च सद्भावेनाभेदारोपतो यमेव वृक्षमन्वभूवं तदेव काष्ठं स्मरामीति य एव वृक्षस्तदेव काष्ठमिति वा, यदेव काष्ठमन्वभूवं तमेवाङ्गारं स्मरामीति यदेव काष्ठं स एवाङ्गार इति वा यमेवाङ्गारमन्वभूवं तदेव भस्म स्मरामीति य एवाङ्गारस्तदेव भस्मेति वा प्रत्यभिज्ञानापत्तिस्स्यादिति समाधत्ते–एवं तर्हीति, न चैवमिति उक्तप्रत्यभिज्ञानं नच भवतीत्यर्थः। अहमाकारस्यालयविज्ञानस्य प्रतिक्षणं भिन्नत्वेनोत्पादादनुभवस्मरणकालानुगामित्वाऽभावेन कस्याप्येकस्य तस्य यद्यपि तदुभयकर्त्तृत्वं न संभवति, तथापि प्रवृत्तिविज्ञानरूपपूर्वकालीनानुभवकर्त्रालयविज्ञानस्य प्रवृत्तिविज्ञानरूपोत्तरकालीनस्मरणकर्त्रालयविज्ञानस्य च सौसादृश्यमूलकभेदाग्रहादेव पूर्वापरधियामालयविज्ञानरूपैककर्त्तृकत्वप्रतिसन्धानमिति गूढाभिप्रायेणाशङ्कते—

स्यादेतत्–आलयभेदाग्रहात् प्रतिसन्धानमिति चेत्, न, स ह्यहमास्पदं प्रवृत्तिसन्तानादन्य एव वा स्यात्, तद-

माहिलादीनाम्। तथा सांशयिकं, यद्वशाद्भगवदर्हदुपदिष्टेष्वपि जीवादितत्त्वेषु संशय उपजायते, यथा न जाने किमिदं भगवदुक्तं धर्मास्तिकायादि सत्यमुतान्यथेति। तथा न विद्यत आभोगः परिभावनं यत्र तदनाभोगं तच्चैकेन्द्रियादीनामिति ॥२॥

शेषोत्तरभेदानाह—

छक्कायवहो मणइंदियाण अजमो असंजमो भणिओ। इइ बारसहा सुगमो कसायजोगा य पुव्वुत्ता ॥३॥

(स्वो०)—'षट्कायवधो मनइन्द्रियाणामयमोऽसंयमो भणित इति द्वादशधा, सुगमाः कषाययोगास्तु पूर्वोक्ता' इति पदानि। पदार्थः—पृथिव्यप्तेजोवायुवनस्पतित्रसवधभेदात् षड्भेदोऽसंयमः स्पर्शनरसनघ्राणचक्षुःश्रोत्राणां स्वविषयगृद्धावनिवारणं, मनसश्च सत्यादिचतुर्भेदावस्थितस्यैव यदभ्यधिकं भोगादिष्वसन्तोषः, तुशब्दाद्वाक्काययोरप्ययमः इत्यनेन प्रकारेण द्वादशविधोऽसंयमो भणितः। षोडश कषायाः नव नोकषायाः सुज्ञाताः, योगास्तु पुनः पूर्वोक्ता नोच्यन्त इति गाथार्थः ॥३॥

(मलय०)—संप्रत्यविरत्यादिगतान् द्वादशादिभेदान् प्रदर्शयति—षण्णां कायानां पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणानां वधो हिंसा, तथा मनसोऽन्तःकरणस्येन्द्रियाणां च श्रोत्रादीनां पञ्चानां स्वस्वविषये यथेच्छं प्रवर्त्तमानानामयमोऽनियन्त्रणमिति, एवममुना प्रकारेण द्वादशधा द्वादशप्रकारोऽसंयमोऽविरतिरूपो भणितस्तीर्थकरगणधरैः, एतेन स्वमनीषिकाशंकाव्युदासः कृतः, स च द्वादशप्रकारोऽसंयमः सुगमः, प्रतिपदव्याख्यामन्तरेणापि स्वयं सुखेन गम्यते, ततो न प्रतिपदं व्याख्यायते। कषाया योगाश्च यथाक्रमं पञ्चविंशतिपञ्चदशभेदाः पूर्वोक्ताः पूर्वमेव प्रतिपादिताः, अतस्तेऽपीह भूयो नाभिधीयन्ते ॥३॥

मूलहेतून् गुणस्थानेषु योजयितुकाम आह—

त्वम्, उभयस्येतिशेषः, आलयविज्ञानोपात्तं, आलयविज्ञानोपादेयम्, तथात्वे प्रवृत्तिविज्ञानस्य किञ्चिदपि कार्यं प्रत्युपादानत्वाभावे, उपादानत्वाऽभावेऽपि निमित्तत्वाभ्युपगमे उपादानजातीयं किञ्चित् स्वोपादेयकार्याकारित्वेऽपि किञ्चिन्नैमित्तिकं कार्यमुत्पाद्याऽर्थक्रियाकारित्वलक्षणं सत्त्वं निर्वाह्य विनश्येदिति स्वसन्तानमुच्छिद्येत, तेन स्वोपादेयकार्याऽजननात्, उपादानान्तरेणापि स्वसान्तानिकोपादेयभिन्नोपादेयकार्याजननात्, निरुपादानोपादेयकार्योत्पादाऽसम्भवाच्च, एवं सन्तानान्तरमप्युच्छिन्नं स्यादिति सर्वसन्तानोच्छेदः; उपादेयकार्याऽसम्भवे च किं प्रति निमित्तमपि स्यादित्युपादेयनैमित्तिककार्याकारित्वेनान्त्यस्याऽसत्त्वे पूर्वपूर्वस्यामूलमसत्त्वं स्यादित्येवं शून्यवादापत्तिः, तद्भिया तृतीयपक्षे प्रवृत्तिविज्ञानं प्रत्यालयविज्ञानस्यैवोपादानत्वे तदुपात्तं यत् प्रवृत्तिविज्ञानं तत् प्रवृत्तिविज्ञानं प्रति नोपादानं, किन्त्वन्यत्किञ्चिद्यादृच्छिकं प्रत्येव स्वीकर्त्तव्यं, तथाच यत्प्रवृत्तिविज्ञानमेकमालयविज्ञानेन जनितं यच्चापरं स्वसन्तानोच्छेदभयादालयविज्ञानं जनितं तत्र प्रवृत्तिविज्ञानेन विजातीयज्ञानसन्ततिरेव जननीया, आलयविज्ञानेन चैकमालयविज्ञानमन्यच्च प्रवृत्तिविज्ञानं जननीयम्, तेनापि प्रवृत्तिविज्ञानेन विजातीयज्ञानसन्ततिर्जननीया, आलयविज्ञानं पुनः पूर्ववदेव प्रवृत्तिविज्ञानमालयविज्ञानं चोपादत्ते इत्यास्थेयम्, तत्रापि तेनापि प्रवृत्तिविज्ञानेनान्या विजातीयज्ञानसन्ततिर्जननीयेत्येवं सन्तानानन्त्यप्रसङ्गः, ते च सर्वे सन्तानाः प्रत्येकं परंपरया आलयविज्ञानोपादानकत्वादालयविज्ञानसन्तानपदवाच्याः, प्रवृत्तिविज्ञानोपादानकत्वाच्च प्रवृत्तिविज्ञानसन्तानपदवाच्याः, सजातीयं चैकमालयविज्ञानसन्तानं स्वीकर्त्तव्यमित्येवमप्रामाणिकाऽनन्तसन्तानापादकोऽयं तृतीयपक्षो न युक्तः, एवमनन्तसन्तानाभ्युपगमेऽपि पूर्वापरप्रवृत्तिविज्ञानानां नैकसन्तानत्वैयत्यं तत एव च नोपादानोपादेयभावोऽपीति तद्रूपनियामकाऽभावात्प्रवृत्तिविज्ञाने पौर्वापर्यभावापन्नयोर्ज्ञानयोः प्रतिसन्धानानुपपत्तिस्तदवस्थैव, आल-

(स्वो०)—'पञ्चपञ्चाशत् पञ्चाशत्त्रिकषट्काभ्यां अभ्यधिका चत्वारिंशत् एकोनचत्वारिंशत् षट्चतुःसहिता द्वियुता च विंशतिः षोडश दश नव नव सप्त हेतवस्त्विति पदानि। पदार्थः-आहारकशरीरद्विकवर्जाः सर्वोत्तरहेतवो मिथ्यादृष्टौ भवन्ति, त एवापगतपञ्चमिथ्यात्वाः पञ्चाशत्सास्वादने भवति, त एवानन्तानुबन्धिकषायकार्मणौदारिकवैक्रियमिश्रसप्तकवर्जास्त्रिचत्वारिंशत्सम्यग्मिथ्यादृष्टौ भवन्ति, एत एव पूर्वोक्ताः पञ्चाशदनन्तानुबन्धिरहिताः षट्चत्वारिंशदविरतस्य भवन्ति, त एव पूर्वोक्तास्त्रिचत्वारिंशत् त्रसकायाविरत्यप्रत्याख्यानकषायरहिता वैक्रियमिश्रशरीरयुक्ता एकोनचत्वारिंशद्धेतवो देशविरते भवन्ति, एत एव एकोनचत्वारिंशत् एकादशाविरतिप्रत्याख्यानावरणचतुष्करहिता आहारकशरीरद्वययुक्ताः प्रमत्ते षड्विंशतिर्भवन्ति, त एव षड्विंशतिः वैक्रियाहारकमिश्राभ्यां रहिताश्चतुर्विंशतिरप्रमत्ते, त एवाहारकवैक्रियाभ्यां रहिताः द्वाविंशतिः अपूर्वकरणे, त एव हास्यादिषट्करहिताः षोडशानिवृत्तिबादरे, त एव वेदत्रयसंज्वलनत्रयरहिता दश सूक्ष्मसम्पराये भवन्ति, औदारिकमनोवाक्चतुष्कयोगा नवोपशान्तक्षीणमोहयोर्बन्धहेतवो भवन्ति, मनोवागौदारिकद्विकानि कार्मणं चैते सप्त सयोगिनि हेतवो भवन्ति, शरीरस्थस्याप्ययोगिनो बन्धाभावः क्रियाभावादिति। तुशब्दो विशेषणार्थः, किं विशेषयति? पर्याप्तसंज्ञिजीवस्थानस्यैते विशेषाः, शेषाणामेकमनभिगृहीतं मिथ्यात्वं एवं शेषहेतवोऽपि सम्भविनो भावनीया इति गाथार्थः ॥८॥

(मलय०)—उक्ता मिथ्यात्वादयो मूलभेदरूपा गुणस्थानकेषु बन्धहेतवः, संप्रति गुणस्थानकेष्वेव मिथ्यात्वाद्यवान्तरभेदसंभवमाह—इह मिथ्यात्वाद्यवान्तरभेदानामेकत्रमीलने सप्तपञ्चाशद्भवन्ति। तत्र मिथ्यादृष्टिगुणस्थानके आहारकाहारकमिश्ररहिताः शेषाः पञ्चपञ्चाशद्बन्धहेतवः सम्भवन्ति, आहारकद्विकं तु तत्र न घटते, संयमवतां तदुदयभावात्। तथा सासादने पञ्चाशद्बन्धहेतवो, मिथ्यात्वस्य पञ्चप्रकारस्यापीहासम्भवेनापनयनात्। सम्यग्मिथ्यादृष्टौ त्रिचत्वारिंशत्, यतोऽत्र "न सम्ममिच्छो कुणइ कालं" इति वचनान्न पर-

नोपात्ततदुपात्तादीनामेकसन्तानान्तःपात्युपादानत्वेनैव निर्वाहे सन्तानान्तरकल्पकाभावादिति दीधितिकारः।

यत्तु प्रवृत्तिविज्ञानेनेति, प्रवृत्तिविज्ञानस्यालयविज्ञानोपादेयत्वमेवेति नियमस्य कक्षीकारेण प्रवृत्तिविज्ञानस्य स्वसजातीयोपादानत्वासम्भवेऽन्यजातीयोपादानत्वानङ्गीकारे निमित्ततायां अप्यभावादसत्त्वमापद्येतेत्यतः प्रवृत्तिविज्ञानस्य विजातीयोपादानत्वं स्वीक्रियते, तदुपादेयस्य विजातीयस्य सजातीयोपादानत्वाभ्युपगमेऽपि क्षत्यभावेन किमर्थं विजातीयोपादानत्वमङ्गीकार्यम्, एवं तदुपात्तस्यापि सजातीयोपादानत्वमभ्युपगन्तव्यमित्येकसजातीयसन्तानस्य सम्भवात्प्रोक्तसन्तानानवस्थाप्रसङ्ग इत्याशयेन दीधितिकार उक्ताभिप्रायवर्णनं प्रतिक्षिपति तदसदिति, आलयविज्ञानं प्रवृत्तिविज्ञानम् आलयविज्ञानं चोपादत्ते, तत्र प्रवृत्तिविज्ञानं विजातीयसन्तानमारभते, आलयविज्ञानं पुनरालयविज्ञानं प्रवृत्तिविज्ञानं च, प्रवृत्तिविज्ञानञ्च विजातीयकार्यम्, आलयविज्ञानं पुनरालयविज्ञानं प्रवृत्तिविज्ञानं च, तत्राप्येवमित्येवमनन्तसन्तानप्रसञ्जनमालयप्रवृत्तिविज्ञानव्यक्तीनां प्रत्येकमेकैकसन्तानप्रवर्त्तनेऽनन्तसन्तानप्रसङ्ग इति ग्रन्थेन दीधितिकृता कृतं तन्न समीचीनम्, आलयविज्ञानप्रवृत्तिविज्ञानयोर्वैजात्याभावे तत्सन्तानयोरपि न भेदः, किन्तु यदेवालयविज्ञानं तदेव प्रवृत्तिविज्ञानमित्यालयविज्ञानप्रवृत्तिविज्ञानव्यक्तीनामिति भेदेनोपादानस्यायुक्तत्वात्, किन्त्वत्रैवं वक्तव्यं, यदालयविज्ञानं तदेव प्रवृत्तिविज्ञानं तत्स्वसजातीयं विजातीयं चोपादत्ते इति न वक्तुं शक्यम्, एकस्योभयोरुपादानत्वस्यानेकाश्रयत्वापत्तिभयादसम्भवात्, किन्तु तत्सन्तानान्तरस्थमेवोपादत्ते, न चैवं सजातीयसन्तानोच्छेदः, यथा प्रवृत्तिविज्ञानं विजातीयमुपादत्ते तथा किञ्चिदेवान्यत्प्रवृत्तिविज्ञानजातीयमुपादास्यते, तथा चाद्येन प्रवृत्तिविज्ञानेनैकं विजातीयसन्तानम्, एवं द्वितीयेन प्रवृत्तिविज्ञानेन द्वितीयं विजातीयसन्तानमित्येवं यावन्ति प्रवृत्तिविज्ञानानि विजातीयानेकसन्तानाःस्युः-

च्छेदाच्छेषा नव। एत एव नव बन्धहेतवः क्षीणमोहेऽपि। सयोगिकेवलिनि सप्त, तत्र द्वौ सत्याऽसत्यामृषारूपौ मनोयोगौ, द्वौ सत्याऽसत्याऽमृषारूपौ वाग्योगौ, कार्मणमौदारिकमौदारिकमिश्रं च। तत्र कार्मणौदारिकमिश्रे समुद्घातावस्थायां वेदितव्ये। अयोगिकेवलिनि पुनः शरीरस्थेऽपि सर्वथा मनोवाक्काययोगानामपि निरोधान्नैकोऽपि बन्धहेतुरिति ॥५॥

सत्तामात्रहेतवोऽभिहिताः, युगपत्कालभाविनो जघन्यमध्यमोत्कृष्टानाह—

**दस दस नव नव अड पंच जइतिगे दु दुग सेसयाणेगो। अड सत्त सत्त सत्तग छ दो दो दो इगि जुया वा ॥६॥**

(स्वो०)—'दश दश नव नवाष्टौ पञ्च यतित्रिके द्विद्विकं शेषकाणां एकः। अष्ट सप्त सप्त सप्तक षट् द्वि द्वि एकयुता चेति' पदानि। पदार्थस्तु-युगपत्कालभाविनो मिथ्यादृष्टौ जघन्याद्दशोत्कृष्टतोऽष्टादश तदन्तर्गता मध्यमा बन्धहेतवो भवन्ति, एवं सास्वादने जघन्या दशोत्कृष्टाः सप्तदश, सम्यग्मिथ्यादृष्टौ जघन्या नवोत्कृष्टाः षोडश, अविरते च, देशविरते जघन्या अष्टावुत्कृष्टतः चतुर्दश, प्रमत्ताप्रमत्तापूर्वकरणेषु जघन्याः पञ्चोत्कृष्टाः सप्त, अनिवृत्तिबादरे जघन्येन द्वौ त्रय उत्कृष्टतः, सूक्ष्मसम्परायादीनां गाथापूर्वार्द्धोक्ता एव द्व्येकसङ्ख्या भवन्ति, द्वितीयार्द्धोक्तानां तेषामसम्भवात्, शेषाणां पूर्वार्द्धोक्ता जघन्या, उभयोक्ता यथासंख्येन उत्कृष्टास्तदन्तर्भाविनो मध्यमा हेतवो भवन्तीति गाथार्थः ॥६॥

युगपत्कालभाविहेतुसमुदायानां प्ररूपणाय यन्त्रकमाह—

१०–१०–९–९–८–५–५–५–२–२–१–१–१

८–७–७–७–६–२–२–२–१

(मलय०)—तदेवं सम्भवतः सत्तामात्रेण मिथ्यात्वाद्यवान्तरभेदरूपाः पञ्चपञ्चाशदादयो गुणस्थानकेषु बन्धहेतव उक्ताः, सम्प्रत्येतानेव यस्मिन् गुणस्थानके यावन्तो जघन्यमध्यमोत्कृष्टपदेष्वेककालं प्राप्यन्ते, तस्मिन् तावत आह—इह पूर्वार्द्धेन मिथ्यादृष्ट्यादिगु-

वृत्तेर्भेदेन पूर्वापरज्ञानगतैकातद्व्यावृत्तेरप्यनन्तरूपत्वात् इत्यभिप्रायेण ग्रन्थकारस्स्वमतमाह—अत एवातद्व्यावृत्तिपक्षेऽपीति, अशक्तिरनुपादानादित्यादिश्लोकार्थमुपदर्शयति उपादानत्वाभाव इत्यादिना, अत्र प्रवृत्तिविज्ञानस्येति शेषः। तथा चाशक्तिरित्यस्याऽसत्त्वमित्यर्थो व्याख्यातः। अन्योपादाने प्रवृत्तिविज्ञानस्य सन्तानान्तरवर्त्तिज्ञानोपादानत्वे। नैकरूपतेति स्थाने अनेकसंश्रितिरिति पाठान्तरम्, तदाश्रित्यार्थमाह एकस्यानेकोपादेयत्वमिति। मिथो न प्रतिसन्धिश्चेति दोषमसहमानो बौद्धश्शङ्कते—

अथालयप्रवृत्तिविज्ञानसन्तानयोः परस्परमनुपादानोपादेयभावे कीदृशं प्रतिसन्धानमनुपपन्नं, न तावत् परस्परानुभूतस्य परस्परं स्मरणम्, आलयस्यैवानुभवितृत्वात् स्मर्तृत्वाच्च, नापि स्वप्रकाशतयाऽस्याप्यविषयत्वात् पूर्वापरविज्ञानयोरेककर्तृकत्वनिश्चयः, आलयविज्ञानयोस्तादृशप्रतिसन्धानाभावात्, प्रवृत्तिविज्ञानयोश्च कार्यकारणभावादेव तदुपपत्तेरिति चेत्,

अथेति, स्मरणमिति अत्रानुपपन्नमित्यनुषज्यते, आलयविज्ञानेनानुभूतस्य प्रवृत्तिविज्ञानेन तेन चानुभूतस्यालयविज्ञानेन स्मरणमित्येवं लक्षणं प्रतिसन्धानं तयोः परस्परमनुपादानोपादेयभावेऽनुपपन्नमित्यपि प्रवृत्तिविज्ञानस्यानुभवितृस्मर्तृत्वोभयाऽभावेनालयविज्ञानस्य चोभयभावेनेष्टापत्त्या परिहरति आलयस्यैवानुभवितृत्वादिति, आलयविज्ञानव्यक्तीनां स्वप्रकाशतया पूर्वेणोत्तरस्योत्तरेण च पूर्वस्यालयविज्ञानस्यानवगाहनात् तयोरेककर्तृकत्वनिश्चयरूपं प्रतिसन्धानमनुपपन्नमित्यपि न च वाच्यम्, आलयविज्ञानयोरेककर्तृकत्वप्रतिसन्धानं भवतीत्यनभ्युपगमात्, पूर्वापरयोः प्रवृत्तिविज्ञानयोरेवोक्तप्रतिसन्धानाभ्युपगमात्, तत्र च निमित्तं पूर्वापरयोः कार्यकारणभाव एव इत्यत आह नापीति, अस्याप्यविषयत्वादिति स्थाने अन्योन्याविषयत्वादिति पाठो

न संक्रमावलिकां यावदनन्तानुबन्धिनामुदयस्तदुदयाभावे च मरणाभावाच्च न भवान्तरभाविनो वैक्रियौदारिकमिश्रकार्मणा भवन्ति। अनन्तानुबन्धिभयजुगुप्साविकल्पितोदयाः चत्वार उत्तरगुणेषु प्रागुपन्यस्तहेतूनामभावं सूचयतीति गाथार्थः ॥७॥

(मलय०)—सम्प्रति मिथ्यादृष्टिगुणस्थानके ये जघन्यपदे दश बन्धहेतव उक्तास्तान् दर्शयति—पञ्चानां भेदानां मध्ये एकतमं मिथ्यात्वं, षण्णां च कायानां ये एककद्विकादिघातभेदात् षड् घातभेदास्तद्यथा–षण्णां कायानां मध्ये यदैकमन्यतमं कायं हंति तदैककायघातः, यदा तु द्वावन्यतमौ कायौ हंति तदा द्विककायघातः, यदा पुनस्त्रीनन्यतमान् कायान् हंति तदा त्रिकघातः, एवं चतुष्कघातः पञ्चकघातः षट्कघातश्च भावनीयः, तेषां षण्णां घातभेदानां मध्ये एकोऽन्यतमो घातभेदः। तथा पञ्चानामक्षाणां श्रोत्रादीनामन्यतमस्याक्षस्यासंयमः। तथा हास्यरतियुगलारतिशोकयुगलयोरन्यतरस्य युगलस्योदयः। तथा त्रयाणां वेदानामन्यतमस्यैकस्य वेदस्योदयः। त्रयाणामप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनरूपाणां कषायाणां सम्बन्धिनोऽन्यतमस्य क्रोधादित्रिकस्य, इह क्रोधमानमायालोभा युगपन्नोदयमायान्ति, किं तु क्रमेण, तथाहि–यदा क्रोध उदेति न तदा मानो नापि माया न चापि लोभः, यदापि मान उदयमधिगच्छति न तदा क्रोधो नापि माया इत्यादि, केवलमेकस्मिन्नप्रत्याख्यानादिके क्रोध उदयमाने शेषा अपि क्रोधाद्यो यथायथमुदयमायान्ति, एवं मानादौ मानादयोऽपि, ततोऽप्रत्याख्यानादिकषायाणां सम्बन्धिनोऽन्यतमस्य क्रोधादित्रिकस्य ग्रहणम्। तथा दशानां योगानामन्यतमो योगः। आह–ननु योगाः पञ्चदश भवन्ति, एतच्च प्रागेवानेकश उक्तं, ततः पञ्चदशानां योगानामन्यतमो योग इति वक्तव्यं, कथमुक्तं दशानां योगानामन्यतम इति ? उच्यते–इह मिथ्यादृष्टावाहारकद्विकहीनाः शेषास्त्रयोदश योगाः संभवन्ति, "आहारकद्विकं तु संयमवतां तदुदये" इति वचनप्रामाण्यान्मिथ्यादृष्टावसंभवि, एतच्च प्रागेवोक्तं, तत्रापि यदानन्तानुबन्धिनामुदयो न

ल्पनयेति न्यायादेकस्यैवालयाऽभेदस्य कारणत्वकल्पनं न्याय्यं, येनैककर्त्तृकत्वनिश्चयस्य याथार्थ्यमप्युपपन्नं भवेदित्याशयेनाह लाघवादालयाभेद इति, पूर्वोत्तरालयविज्ञानानुगतं विधिरूपं सादृश्यं स्थैर्यानभ्युपगमेऽनुपपन्नं, न चातद्व्यावृत्तिरूपं तद्भविष्यति, तस्यापि विधिनिरूप्यत्वात्, तच्च प्रागेव विवृतं द्वाविंशतितमश्लोकव्याख्यायामित्याह विधिरूपमिति, तदन्तरेण विधिरूपसादृश्यमन्तरेण,

एतेन प्रवृत्तिविज्ञानसन्तानान्तःपातिनामहमास्पदानां भेदाग्रहादेककर्तृकत्वप्रतिसन्धानमित्यपि निरस्तम्। कादाचित्काहंप्रत्यय एवालय इति द्वितीयपक्षोऽपि न क्षोदक्षमः, यतस्तस्यापि भेदाग्रहः स्वरूपतो वा स्याद्विषयतो वा, आद्येऽपि पूर्वाहमिति प्रत्ययमात्राद्वा, प्रवृत्तिविज्ञानेभ्योऽपि वा, न तावदाद्यः अहमज्ञासिषमिति जानाम्यहमिति ज्ञास्याम्यहमिति त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणानुपपत्तेः, अतीतत्वादिविरुद्धधर्मग्रहस्यैव भेदग्रहत्वात् ॥

एतेन लाघवादालयाऽभेदस्यैककर्त्तृकत्वप्रतिसन्धाननियामकत्वेनाऽनुगतधर्माभावात्सौसादृश्याऽभावेन तन्मूलकभेदाग्रहाऽभावेन चेत्यर्थः ॥ न तावदाद्य इति, पूर्वादहमिति प्रत्ययमात्रादुत्तरस्याहमिति प्रत्ययस्य भेदाग्रहो न सम्भवतीत्यर्थः। अतीतत्वादीति अहमज्ञासिषमिति जानाम्यहमिति ज्ञास्याम्यहमिति प्रतीतिविषयीभूतेऽहमिति ज्ञानांशे यथाक्रममतीतत्वं वर्त्तमानत्वं च भविष्यत्वं च भासंते, तेषां च धर्माणां विरुद्धधर्मरूपत्वेन भेदरूपतया तन्निश्चयस्य-प्रतिबन्धकस्य सत्त्वेन न भेदाग्रह इत्यर्थः। ननु नाहमिति ज्ञानांशे त्रैकाल्योल्लेखः, त्रिष्वप्युक्तज्ञानेष्वहमहमिति प्रत्ययस्य तुल्याकारत्वादित्यहं प्रत्ययाकारेण न भेदाग्रहानुपपत्तिरिति

२-३-४-१० इति गाथार्थः ॥८॥

(मलय०)—तदेवमुक्ता जघन्यपदभाविनो दश बन्धहेतवः, एतेषां च मिथ्यात्वकायघातादिभेदसंचारणे बहवो भङ्गाः संभवन्ति, ततस्तत्परिज्ञानार्थमुपायमाह—इत्येवमुक्तेन प्रकारेणैषां मिथ्यात्वादीनां मिथ्यात्वकायघातेन्द्रियासंयमयुगलवेदकषाययोगाणामेकग्रहणे एकैकभेदग्रहणे, तथाहि—प्राक् पञ्चानां मिथ्यात्वानामेकमन्यतमं मिथ्यात्वं गृहीतं, षण्णां कायघातानामेकतमः कायघातः, पञ्चानामिन्द्रियासंयमानामेकतम इन्द्रियासंयमो, द्वयोर्युगलयोरेकमन्यतरद् युगलं, त्रयाणां वेदानामेकोऽन्यतमो वेदः, चतुर्णां क्रोधादीनामेकोऽन्यतमः क्रोधादिकः कषायः, दशानां योगानामेकोऽन्यतमो योगः। एवं मिथ्यात्वादीनामेकैकभेदग्रहणे भङ्गसंख्याऽऽनयनाय तत्संख्या मिथ्यात्वादिभेदसंख्या स्थापनीया, तत्र मिथ्यात्वं पञ्चधेति प्रथमतस्तत्स्थाने पञ्च स्थाप्यन्ते। ततस्तेषामुपरि 'भंगया उ कायाणं' ति—कायानां पृथिवीकायादीनां घातमधिकृत्य य एककद्विकादिसंयोगरूपाः भङ्गाः षट् प्रागुपदर्शितास्ते स्थाप्यन्ते। तेषामप्युपरीन्द्रियाणि स्पर्शनादीनि पञ्चेति कृत्वा पञ्च स्थाप्यन्ते, षष्ठं तु मनः सदपि न विवक्षितमिन्द्रियान्तरगतत्वेनैव तस्य विवक्षणात्। ततस्तेषामुपरि युगलस्य स्थाने युगं द्विकं स्थापयेत्, द्वे युगले पर्यायेण प्राप्येते इति कृत्वा। तयोरपि वेदस्थाने त्रिकं, त्रयाणां वेदानां क्रमेण लभ्यमानत्वात्। ततः कषायाणां स्थाने चतुरश्चतुष्कं स्थापयेत्, क्रोधमानमायालोभा एव हि पर्यायेणोदयन्ते, ये तु क्रोधा अप्रत्याख्यानादयो, यदि वा माना माया लोभा वा, ते तु युगपदपि, ततः कषायस्थाने चतुष्कस्यैव स्थापना, ततस्तेषामुपरि योगा दश पर्यायेण प्राप्यन्ते, इति दशकं स्थापयेत्। अंकस्थापना—१०-४-३-२-५-६-५ ॥८॥

चक्राङ्करचनतः संख्यानयनमाह—

विशेषोऽपि करणव्युत्पत्त्याऽनुभवप्रभवत्वमात्रं वा, अनुभवितृसन्तानवैजात्यं वा। तत्र न प्रथमः, अनुत्पन्नानन्वयध्वस्तयोरविशेषात्,

अथवेत्यादिना। उक्तत्वादिति द्वाविंशतितमश्लोकव्याख्यायामितिशेषः। अतीन्द्रियोऽपि तत्कालावस्थायीति, अत्र अतीन्द्रियोऽपि तावत्कालावस्थायीति पाठान्तरम्। तदुत्तरतादृशबुद्धिधारारूप इति, अनुभवोत्तरतत्समानविषयकबुद्धिधारारूप इत्यर्थः। अत्र तदुत्तरबुद्धिधारारूपः तदन्यो वा तद्विशेषो वेति पाठान्तरमेव युक्तम्, नापि दृश्योऽन्य इत्युत्तरग्रन्थस्वारस्यात्, अनुत्पन्नाऽनुभवस्येव व्यापारानुत्पादनादनन्वयध्वस्तानुभवस्यापि न स्मरणोत्पादकत्वम्, तयोस्स्मरणाऽव्यवहितपूर्वकालेऽसत्त्वाविशेषादित्याशयेन तदुत्तरतादृशबुद्धिधारारूप इति पक्षनिषेधे हेतुमाह अनुत्पन्नेत्यादिना। तदन्यो वेति पक्षं निरस्यति—

नापि दृश्योऽन्यः, तस्यानुपलब्धिबाधितत्वात्, नाप्यनुभवप्रभवत्वमात्रं विशेषः, नहि कर्मकरकरोपनीतमेव बीजं क्षितिमासाद्याङ्कुरं जनयति, न तु प्रमादपतितं, तथा नीलाद्यनुभवसन्तानः (नीलाद्यनुभवप्रभवसन्तानः) पीतानुभवेन वोपनीयतां नीलाद्यनुभवेन वेति न कश्चिद्विशेषः, एवं च नीलाद्यनुभवस्य तत्त्वेनानुभवत्वेन वा पीतस्मरणप्रयोजकत्वेऽननुभूतेऽपि पीते स्मरणं स्यात्, नियामकाभावात्, अप्रयोजकत्वे च नानुभूतेऽपीति।

नापि दृश्योऽन्य इति, तद्विशेषो वेति द्वितीयपक्षीयप्रथमपक्षं निरसंति—नाप्यनुभवप्रभवत्वमात्रं विशेष इति, यथा बीजत्वावच्छिन्नं बीजं कर्मकरकरोपनीतत्वरूपविशेषशालि भवतु मा वा तथापि क्षित्यादिसहकारिसामग्रीं समासाद्याङ्कुरत्वावच्छिन्नं स्वकार्यमविशिष्टमेव करोति तथा नीलानुभवः पीतानुभवप्रभवत्वरूपविशेषवान् भवतु मा वा तस्य यदि नीलानुभवत्वेनानुभवत्वेन

शतान्येते सर्वेऽपि द्वादश समुदाया हेतूनामिति ५४६६०० । त एव पूर्वोक्ता दश भयजुगुप्सानन्तानुबन्धियुक्तास्त्रयोदश भवन्ति, अत्र त्रयोदश योगाः, भङ्गानां षट्चत्वारिंत्सहस्राण्यष्टौ शतानि ४६८००, चतुष्कायवधप्रक्षेपाच्च त्रयोदश भवन्ति, तत्र पञ्चदश भङ्गास्ततः प्राग्वल्लब्धानि हेतुत्रयोदशकानां नवतिसहस्राणि ९००००, त्रिकायवधभयप्रक्षेपे विंशतिसहस्रोत्तरं भङ्गकलक्षं १२००००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि १२००००, त्रिकायवधानन्तानुबन्धिप्रक्षेपे लक्षं षट्पञ्चाशत्सहस्राणि १५६०००, द्विकायवधभयजुगुप्साप्रक्षेपेण च त्रयोदश, तत्रापि नवतिसहस्राणि ९००००, द्विकायवधभयानन्तानुबन्धिप्रक्षेपे लक्षं सप्तदशसहस्राणि भङ्गानां ११७०००, एवं द्विकायवधानन्तानुबन्धिजुगुप्साप्रक्षेपेऽपि ११७०००, एवं त्रयोदशसमुदायहेतूनां सर्वसंख्या अष्टौ लक्षा षट्पञ्चाशत्सहस्राणि शतान्यष्टौ ८५६८००, गतास्त्रयोदश हेतव इति । त एव पूर्वोक्ता दश पञ्चकायवधयुक्ताश्चतुर्दश भवन्ति, तत्र षट् पञ्चकसंयोगाः प्राग्वत् षट्त्रिंशद्भङ्गसहस्राणि ३६०००, चतुष्कायवधभयप्रक्षेपाच्चतुर्दश नवतिभङ्गकसहस्राणि ९००००, चतुष्कायवधजुगुप्साप्रक्षेपेऽपि ९००००, चतुष्कायवधानन्तानुबन्धिप्रक्षेपे लक्षं सप्तदश सहस्राणि ११७०००, त्रिकायवधभयजुगुप्साप्रक्षेपे विंशत्युत्तरं लक्षं १२००००, त्रिकायवधभयानन्तानुबन्धिप्रक्षेपे षट्पञ्चाशत्सहस्राणि लक्षं १५६०००, एवं त्रिकायवधजुगुप्सानन्तानुबन्धिप्रक्षेपेऽपि १५६०००, द्विकायवधभयजुगुप्साऽनन्तानुबन्धिप्रक्षेपे सप्तदशोत्तरं लक्षं ११७०००, सर्वेऽपि चतुर्दश हेतुसमुदाया अष्टौ लक्षा द्व्यशीतिसाहस्रयः ८८२०००, एते चतुर्दश हेतुसमुदायाः । त एव पूर्वोक्ता दश षट्कायवधयुक्ताः पञ्चदश भवन्ति, तत्र षट्काययोग एकस्तत्र षट्सहस्राणि प्राग्वत् ६०००, पञ्चकायवधभयप्रक्षेपाच्च पञ्चदश, तत्र भङ्गानां षट्त्रिंशत्सहस्राणि ३६०००, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ३६०००, पञ्चकायवधानन्तानुबन्धिप्रक्षेपे षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि ४६८००, चतुष्कायवधभयजुगुप्साप्रक्षेपे नवतिसहस्राणि ९००००,

कुतश्चिद्बीजादङ्कुरानुत्पादेन तुल्ययोगक्षेमः कुतश्चित् तत्प्रभवात् स्मृत्यनुत्पादे इति, मैवम्, तत्प्रभवत्वं हि न तज्जन्यत्वं तदुपादेयत्वं वा, अन्तरितसान्तानिके तदभावात्, नापि तत्प्रयोज्यत्वं, शिष्याचार्यस्थलेऽतिप्रसक्तेः, तत्सान्तानिकत्वे सति तदुत्तरत्वं तदिति चेत्, न, अनतिप्रसक्तसन्तानत्वनिर्वचनाशक्यतायाः प्रागेव दर्शितत्वात्, वैजात्यं तु विशेषो भवेत्,

कुतश्चिदिति, तत्प्रभवात् पीतानुभवप्रभवात्, अनुभवस्य व्यवहितत्वेन स्मरणस्य तज्जन्यत्वाभावेऽपि परंपराकारणस्यापि प्रयोजकत्वेन तत्प्रयोज्यत्वमेव विशेष इति चेत्, तर्हि शिष्यबुद्धेरप्याचार्यबुद्धेः परंपरया जन्यत्वेनाचार्यानुभूतस्य शिष्यस्यापि स्मरणं स्यादित्याह नापि तत्प्रयोज्यत्वमिति, अनुभवितृसन्तानवैजात्यपक्षं खण्डयति वैजात्यं त्वित्यादिना, पूर्वपूर्वज्ञानादुत्तरोत्तरज्ञानं यज्जायते तत्र कारणगतं ज्ञानत्वमेवानुवर्तते, नतु कारणगतं नियतविषयत्वं पूर्वसर्वज्ञानीयविषयत्वं वैजात्यं वा, तथा सति नियतैकविषयकस्य सर्वविषयकस्य वा विजातीयज्ञानसन्तानस्यैव वाऽऽपत्तिस्स्यात्, एवञ्च पीतानुभवजनितो नीलानुभवजनितो वा यतः कुतश्चिज्जनितो वा यो नीलानुभवस्तस्य न वैजात्यकृतो विशेष इति पीतानुभवप्रभवनीलानुभवत्वेन पीतानुभवप्रभवाऽनुभवत्वेन वा पीतस्मरणं प्रति कारणत्वे पीतानुभवजनितान्नीलानुभवाद् यथा पीतस्मरणं तथाऽन्यतो जनितादपि नीलानुभवात् पीतस्मरणं स्यात् वैजात्यरूपविशेषाऽभावादिति भावः। तदेव सदृष्टान्तमुपपादयति—

यथा क्षीरावसेकादम्लत्वं परिहृत्य माधुर्यमुपादायानुवर्त्तमानाऽऽमलकी कालान्तरेऽपि फले माधुर्यमुन्मीलयति, लाक्षारसावसेकाद्वा धवलिमानमपहाय रक्ततामुपादायानुवर्त्तमानं कार्पासबीजं कुसुमेषु रक्ततां, न

भवन्ति, ते च दशसंख्यानां युगपद्बन्धहेतूनां मिथ्यादृष्टौ षट्त्रिंशत्सहस्रसंख्याः । तथाहि–मिथ्यात्वमवान्तरभेदापेक्षया पञ्चधा, ते पञ्चापि भेदा एकैकस्मिन् कायघाते सम्भवन्तीति षट् पञ्चभिर्गुण्यन्ते, जाता त्रिंशत्, सा चैकस्मिन्निन्द्रियासंयमे प्राप्यते, इन्द्रियासंयमाश्च पञ्च, ततस्त्रिंशता पञ्च गुण्यन्ते, जातं सार्धं शतं, इदं च सार्द्धशतमेकैकस्मिन् युगले प्राप्यते, इति सार्द्धशतेन द्वे गुण्येते, जातानि त्रीणि शतानि, अमूनि चैकैकस्मिन् वेदे सम्भवन्ति, तत एतैस्त्रिको गुण्यते, जातानि नव शतानि, तानि चैकैकस्मिन् क्रोधादित्रिके प्राप्यन्ते, क्रोधादयश्चत्वार इति चत्वारो नवशतैर्गुणिताः, जातानि षट्त्रिंशच्छतानि, तानि च प्रत्येकमेकैकस्मिन् योगे सम्भवन्ति, योगाश्च दशेति दशगुणितानि जातानि षट्त्रिंशत्सहस्राणि ३६०००, एतावन्तो जघन्यपदभाविनां युगपद्बन्धहेतूनां दशसंख्यानां विकल्पाः। संप्रत्येकादशादिविमध्यबन्धहेतुप्रतिपादनाय गाथोत्तरार्द्धमाह–अनन्तानुबन्धिभयजुगुप्सानां चारणा पुनर्विमध्यमेष्वेकादशादिषु भेदेषु कर्त्तव्या, सा चैवं–त एव प्रागुक्ता दश भयप्रक्षेपादेकादश, तत्र च भंगकास्त एव प्रागुक्ताः षट्त्रिंशत्सहस्राणि ३६०००, यदि वा जुगुप्साप्रक्षेपादेकादश, तत्रापि त एव भङ्गाः षट्त्रिंशत्सहस्राणि ३६०००, अथवानन्तानुबन्ध्यन्यतमक्रोधादिप्रक्षेपादेकादश, अनन्तानुबन्ध्युदये च योगास्त्रयोदश भवन्ति, कार्मणौदारिकमिश्रवैक्रियमिश्राणामपि तत्र सम्भवात्, एतच्च प्रागेवोपपादितं, ततः कषायैर्गुणनतो लब्धानि यानि षट्त्रिंशच्छतानि, तानि त्रयोदशभिर्योगैर्गुण्यन्ते, जातानि षट्चत्वारिंशत्सहस्राण्यष्टशताधिकानि ४६८००, अथवा प्राग् जघन्यपदभाविदशकमीलने यत्कायानामेककद्विकादिघातभेदात्सम्भविनां षण्णां कायघातानामन्यतमः कायघात इत्युक्तं, तदिह न गृह्यते, किन्तु तेषां पृथिव्यादीनां षण्णां कायानामन्यतमस्य कायद्वयस्य वध इति । ततः कायवधद्वयग्रहणे एकादश भवन्ति, षण्णां च पदानां द्विकसंयोगे भङ्गा पञ्चदश, ततः कायघातस्थाने पञ्चदश स्थाप्यन्ते, ततो मिथ्यात्वभेदैः पञ्चभिः पञ्चदश

जातिविशेषस्य योग्यानुपलम्भबाधितत्वात् योग्यव्यक्तिवृत्तितयैव जातेर्योग्यत्वात्, रक्तपीतोभयस्मारकनीलानुभवे सङ्करप्रसङ्गात्, तज्जातीयं प्रति जनकत्वेन व्यक्त्यन्तरस्यैवं तज्जातीयं प्रत्यपीत्यनवस्थितजातिपरम्पराकल्पनाप्रसङ्गाच्च,

जातिविशेषस्येति, ननु योग्यानुपलम्भो योग्यस्यैव बाधकः, आश्रयस्यानुभवस्य योग्यत्वेऽपि तद्गता पीतादिस्मरणकुर्वद्रूपत्वजातिस्त्वयोग्यैवेति न तस्यास्स बाधक इत्याशङ्कायामाह योग्यव्यक्तिवृत्तितयैवेति, येनेन्द्रियेण यद्वस्तु गृह्यते तेन तद्गता जातिस्तदभावश्च गृह्यते इति नियमादाश्रयस्य योग्यत्वादयोग्यत्वाद्वा तद्गतजातेरपि तत्त्वमित्यनुभवस्याश्रयस्यैन्द्रियकत्वे तद्गताया अप्युक्तजातेरैन्द्रियकत्वमेवेति नातीन्द्रियत्वेनायोग्यत्वं कल्पयितुं शक्यमिति भावः। उक्तनियमानभ्युपगमेऽपि दण्डमाह रक्तपीतोभयेति, पीतस्मरणाव्यवहितपूर्वज्ञाने पीतस्मरणकुर्वद्रूपत्वमयोग्यमपि जातिरूपं कल्पयितुं नच शक्यम्, तस्य रक्तस्मरणकुर्वद्रूपत्वेन सह रक्तपीतोभयस्मारकनीलानुभवे साङ्कर्यात्, यत्र पूर्वं पीतानुभवः ततः कदाचिन्नीलानुभवे सति पीतस्मरणं तत्र तत्पूर्ववर्त्तिनि नीलानुभवे रक्तस्मरणकुर्वद्रूपत्वाभाववति पीतस्मरणकुर्वद्रूपत्वं, यत्र च पूर्वं रक्तानुभवः ततः कदाचिन्नीलाद्यनुभवे सति रक्तस्मरणं तत्र तत्पूर्ववर्त्तिनि नीलानुभवे पीतस्मरणकुर्वद्रूपत्वाभाववति रक्तस्मरणकुर्वद्रूपत्वं, यत्र रक्तपीतोभयानुभवात्परंपरया नीलानुभवे सति रक्तपीतोभयस्मरणं तत्र तत्पूर्ववर्त्तिनि नीलानुभवे रक्तस्मरणकुर्वद्रूपत्वं पीतस्मरणकुर्वद्रूपत्वं चेति साङ्कर्यं, यदि च समूहालम्बनस्मरणकुर्वद्रूपत्वं प्रत्येकस्मरणकुर्वद्रूपत्वाभ्यामतिरिक्तमेव स्वीक्रियते तदा सामानाधिकरण्याऽभावेन नोक्तरीत्या साङ्कर्यमतो दोषान्तरमाह तज्जातीयं प्रतीति, पीतस्मरणकुर्वद्रूपात्मकोऽव्यवहित एव नीलाद्यनुभवो भवति नत्वन्य इत्यस्योपपत्तये पीतस्मरणकुर्व-

द्वादशबन्धहेतवः। अथ त्रयोदशबन्धहेतवः प्रतिपाद्यन्ते—त एव पूर्वोक्ता दश बन्धहेतवो भयजुगुप्सानन्तानुबन्धिप्रक्षेपात्त्रयोदश, अनन्तानुबन्ध्युदये च योगास्त्रयोदश पर्यायेण प्राप्यन्ते, ततः प्राग्वल्लब्धानि षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि ४६८००, यदि वा कायचतुष्टयवधपरिग्रहात्त्रयोदश, षण्णां च पदानां चतुष्कसंयोगे भङ्गाः पञ्चदश, ते कायवधस्थाने स्थाप्यन्ते, ततः पूर्वक्रमेण व्यवस्थापितानामङ्कानां ताडने जातानि भङ्गानां नवतिसहस्राणि ९००००, अथवा भयकायत्रयवधप्रक्षेपे त्रयोदश, षण्णां च कायानां त्रिकसंयोगे भङ्गा विंशतिः, ते कायवधस्थाने स्थाप्यन्ते, ततः प्राग्वल्लब्धं विंशतिसहस्राधिकं लक्षं १२००००, एवं जुगुप्साकायत्रयवधप्रक्षेपेऽपि १२००००, अथवानन्तानुबन्धिकायत्रयवधपरिग्रहे त्रयोदश, तत्र प्रागुक्तानुसारेणाङ्कानां ताडने भङ्गसङ्ख्या लक्षं षट्पञ्चाशत्सहस्राणि १५६०००, यदि वा जुगुप्साभयकायद्वयवधप्रक्षेपे त्रयोदश, तत्र च प्राग्वद्भङ्गसङ्ख्या नवति सहस्राणि ९००००, भयानन्तानुबन्धिकायद्वयवधप्रक्षेपाद्वा त्रयोदश, तत्र प्रागुक्तानुसारेण भङ्गपरिमाणं लक्षं सप्तदशसहस्राधिकं ११७०००, एवमनन्तानुबन्धिजुगुप्साकायद्वयवधपरिग्रहेऽपि ११७०००, सर्वसङ्ख्यया त्रयोदशबन्धहेतुभङ्गकानामष्टौ लक्षाः षट्पञ्चाशत्सहस्राण्यष्टशताधिकानि ८५६८००, इति त्रयोदशबन्धहेतवः समाप्ताः। तथा त एव पूर्वोक्ता दश बन्धहेतवः कायपञ्चकवधपरिग्रहे चतुर्दश षण्णां कायानां पञ्चकसंयोगे भङ्गाः षट्, ते कायवधस्थाने स्थाप्यन्ते, ततः प्राग्वदङ्कानां गुणने जातानि भङ्गानां षट्त्रिंशत्सहस्राणि ३६०००, अथवा कायचतुष्टयवधभयपरिग्रहाच्चतुर्दश, षण्णां च कायानां चतुष्कसंयोगे भङ्गाः पञ्चदश, ते कायघातस्थाने स्थाप्यन्ते, ततः प्राग्वत्परस्परमङ्कानां गुणने जातानि भङ्गकानां नवतिसहस्राणि ९००००, एवं कायचतुष्टयवधजुगुप्सापरिग्रहेऽपि ९००००, अथवा कायचतुष्टयवधानन्तानुबन्धिपरिग्रहे चतुर्दश, अनन्तानुबन्ध्युदये च योगास्त्रयोदशेति योगस्थाने त्रयोदश स्थाप्यन्ते ततः

वादिमतेऽपि बोध्यम्। ननु संस्कारः परम्परया स्वोपादानके सन्ताने स्मृतिं जनयति, तादृशश्च प्रवृत्तिसन्तानोऽपीति न तत्र स्मरणानुपपत्तिरिति चेत्, न, देवदत्तवर्त्तिनीलसंस्कारसन्तानस्य पीतसंस्कारसन्तानस्य च परम्परयैकोपादानत्वात् पीतसंस्कारसन्तानेऽपि नीलस्मरणप्रसङ्गात्, एवं प्रवृत्तिसन्ताने स्मरणोत्पादकाले संस्कारसन्तानसहस्रेऽपि स्मरणसहस्रं स्मरणमित्येव च तत्प्रत्ययः स्यात्, न तु स्मरामीति, संस्कारस्यानहमास्पदत्वात्,

स चेति, अतीन्द्रियसंस्कारश्चेत्यर्थः। निषेधे हेतुमाह तत्रैवेति, अतीन्द्रियसंस्कारसन्तान एव चरमसंस्कारेण स्मृतिजनने संस्कारसन्तानपतितैव स्मृतिस्स्यादिति प्रवृत्तिविज्ञानसन्ताने स्मृत्यादिफलानुदयस्स्यात्, तथाच घटस्य स्मरणमित्येवं प्रत्ययस्स्यात्, नतु घटमहं स्मरामीत्याकारकानुव्यवसायरूपः, प्रवृत्तिविज्ञानसन्तानान्तःपतितस्यैव ज्ञानस्याहंपदवाच्यत्वेन संस्कारसन्तानान्तः-पातिनोऽहंपदावाच्यत्वादिति भावः। आलयविज्ञानमेवाहमास्पदमिति पक्षेऽप्युक्तप्रत्ययानुपपत्तिरुक्तदिशावसेयेत्याह एवमालयविज्ञानेति, अथ संस्कारो येनानुभवेन जनितस्तदुपादानके सन्ताने स्मृतिजननप्रत्यल इति तेनानुभवेन यथा संस्कारसन्तानो जनितस्तथा प्रवृत्तिविज्ञानसन्तानोऽपीत्युभयस्यैकोपादानकत्वेन तदुपादानकप्रवृत्तिविज्ञानसन्तानान्तःपातिनि प्रवृत्तिविज्ञाने न स्मरणानुपपत्तिरित्याशङ्कते बौद्धः नन्विति, येनानुभवेन संस्कारो जनितस्तदुपादानकप्रवृत्तिविज्ञानसन्तानान्तःपातिनि प्रवृत्तिविज्ञाने स्मरणं स्मरामीत्यनुव्यवसायश्च यद्यप्युपपद्येतां तथापि यद्विषयकोऽनुभवस्तद्विषयके तदुपादानके संस्कारसन्तानान्तःपातिनि संस्कारेऽपि स्मृतिप्रसङ्गस्तदवस्थ एवेति दोषसद्भावेऽपि दोषान्तरप्रदर्शनेन प्रतिक्षिपति—न, देवदत्तवर्त्तीति, यथा मूलभूतेन नीलानुभवेन

नन्तानुबन्धिप्रक्षेपे षोडश, तत्र भङ्गानामष्टसप्ततिशतानि ७८००, कायपञ्चकवधभयजुगुप्साप्रक्षेपे वा षोडश, तत्र प्राग्वद्भङ्गकानां षट्त्रिंशत्सहस्राणि ३६०००, अथवा कायपञ्चकवधभयानन्तानुबन्धिप्रक्षेपे षोडश, तत्र पूर्वक्रमेण भङ्गाः षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि ४६८००, एवं कायपञ्चकवधजुगुप्सानन्तानुबन्धिप्रक्षेपेऽपि ४६८००, यद्वा कायचतुष्टयवधभयजुगुप्सानन्तानुबन्धिग्रहणे षोडश, तत्र प्राग्वद्भङ्गकानां सप्तदशसहस्राधिकं लक्षं ११७०००, सर्वसङ्ख्यया षोडशबन्धहेतुभङ्गा द्वे लक्षे षट्षष्टिसहस्राणि चत्वारि शतानि २६६४००, उक्ताः षोडशबन्धहेतवः। तथा त एव पूर्वोक्ता दश कायषट्कवधभयजुगुप्सोपादाने सप्तदश भवन्ति, तत्र च पूर्ववदङ्कानां ताडने लब्धानि भङ्गानां षट्सहस्राणि ६०००, यदि वा षट्कायवधभयानन्तानुबन्धिप्रक्षेपे सप्तदश, तत्र पूर्ववद्भङ्गकानामष्टसप्ततिशतानि ७८००, एवं षट्कायवधजुगुप्सानन्तानुबन्धिप्रक्षेपेऽपि ७८००, अथवा कायपञ्चकवधभयजुगुप्सानन्तानुबन्धिप्रक्षेपे सप्तदश, तत्र भङ्गानां षट्चत्वारिंशत्सहस्राण्यष्टौ शतानि ४६८००, भावना सर्वत्र प्रागुक्तानुसारेण परिभावनीया। सर्वसङ्ख्यया सप्तदशबन्धहेतुभङ्गकानामष्टषष्टिसहस्राणि चतुःशताधिकानि ६८४००, उक्ताः सप्तदशबन्धहेतवः। सम्प्रत्यष्टादशबन्धहेतवोऽभिधीयन्ते, तत्र त एव पूर्वोक्ता दश षट्कायवधभयजुगुप्सानन्तानुबन्धिप्रक्षेपेऽष्टादश, तत्र भङ्गानामष्टसप्ततिशतानि ७८००। तदेवं सर्वसङ्ख्यया मिथ्यादृष्टौ बन्धहेतुसमुदायविकल्पभङ्गाश्चतुस्त्रिंशल्लक्षाः सप्तसप्ततिसहस्राणि षट्शताधिकानि ३४७७६००, समाप्ता मिथ्यादृष्टिबन्धहेतवः ॥९॥

मिथ्यादृष्टौ बन्धहेतूनां भङ्गाः

अनन्तानुबन्धिविकल्पितोदयकारणमाह—

**अणउदयरहियमिच्छे जोगा दस कुणइ जन्न सो कालं। अणणुदओ पुण तदुवलगसम्मदिट्ठिस्स मिच्छुदए॥**

भवितृज्ञानस्येति, संस्कारः स्वोपादानोपादनके स्मृतिं करोतीत्यभ्युपगमे पूर्वानुभवेन कालान्तरभाविनो विज्ञानस्याजननात् पूर्वानुभवानुपादेये कालान्तरभाविनि ज्ञाने एकसन्तानपतितेऽपि संस्कारस्स्मृतिं न जनयेत्, नचाचार्यीयविज्ञानसन्तानाच्छिष्यविज्ञानसन्तानं विजातीयमिति न तत्तदुपादानमित्यपि वक्तुं शक्यं, तत्तन्मात्रवृत्तिसन्तानत्वस्यानुगतस्य पूर्वं निरस्तत्वादिति भावः। हेत्वन्तरमप्याह संस्कारस्येत्यादि, संस्कारस्य स्वोपादानोपादानके स्मृतिजनकत्वापेक्षया स्वोपादाने स्मृतिजनकत्वस्य कल्पने लाघवमपि, तथा चानायासेनात्मसिद्धिरितिभावः।

एतेन धर्माधर्मलक्षणोऽपि संस्कारो व्याख्यातः। तथा च यो यः संस्कारः क्वचित् सन्तान आहितः, स तत्रैव फलदानयोग्यो नान्यत्रेत्यादि निरस्तम्, अतिरिक्तसंस्कारपक्षे हेतोर्व्यधिकरणत्वात्, स्मृतिहेतोः संस्कारान्तःपातिनः प्रवृत्तिसन्तानावृत्तित्वादित्यर्थः।

एतेनेति, यथा स्मृतिहेतुभावनासंस्कारः कालान्तरे फलजनकत्वात् स्थिररूपस्सन् तदुपादानविधया स्थिरात्मसाधकस्तथा विहितनिषिद्धक्रियाजन्यधर्माऽधर्मस्वरूपसंस्कारोऽपि कालान्तरभाविसुखदुःखादिफलजनकत्वात्पूर्वदर्शितरीत्या प्रकारान्तरानुपपत्त्याऽतीन्द्रियस्स्थिररूपस्सन् तदुपादानविधया स्थिरात्मसाधक इत्येवं प्रकारेणेत्यर्थः,व्याख्यात इति स्थिरात्मसाधकतयेतिशेषः। परोत्प्रेक्षितप्रकारान्तरमप्येतेन निरस्तमित्याह तथा चेति, अस्य निरस्तमित्यनेनान्वयः। यो यः संस्कार इति अत्र संस्कारः स्वजनकप्रवृत्तिविज्ञानसन्तान एव फलजनकः तत्सन्तान एव जायमानत्वादित्यनुमानेन स्वोपादाने प्रवृत्तिविज्ञानसन्तान एव संस्कारस्य स्मृतिफलोत्पादनसामर्थ्यं सिद्धमिति शिष्याचार्यधियां न प्रतिसंधानं, चैत्रीयसन्ताने च प्रतिसंधानमित्येवं प्रतिनियतसन्ताने स्मृत्यु-

प्रथमं वेदैः योगान् हत्वा रूपमपनयेत्, एकैकवेदोदये त्रयोदश योगास्त्रिभिर्वेदैरेकोनचत्वारिंशत्, नपुंसकोदये न भवति वैक्रियमिश्रः, शेषाः अष्टात्रिंशत् ३८, एते चैकैके कायवधे अतः षड्गुणा अष्टाविंशत्यधिकं शतद्वयं, एते चैकैकेन्द्रियव्यापारेऽपि भवन्ति, अतः पञ्चगुणं चत्वारिंशदधिकान्येकादश शतानि ११४०, एतान्येकैके युग्मेऽतो अशीत्यधीकानि द्वाविंशतिशतानि २२८०, एतान्येकैके कषायोदये अतश्चतुर्गुणानि विंशत्यधिकान्येकनवतिशतानि ९१२०, एते हेतुदशकसमुदायाः। एवं शेषेष्वपि भावना कार्या।

दश पूर्वोक्ता एव द्विकायवधप्रक्षेपादेकादश तत्र प्राग्वत् द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, भयप्रक्षेपाद्वा एकादश तत्रैकनवतिशतानि विंशत्युत्तराणि ९१२०, एवं जुगुप्साप्रक्षेपेऽपि ९१२०, सर्वेऽप्येकादश हेतुसमुदाया एकचत्वारिंशत्सहस्राणि चत्वारिंशदधिकानि ४१०४० एते एकादश समुदायाः। पूर्वोक्ता दश त्रिकायवधप्रक्षेपात् द्वादश भवन्ति, तत्र प्राग्वत् आगतानि त्रिंशत्सहस्राणि चत्वारि शतानि ३०४००, अथवा भयद्विकायवधप्रक्षेपात् द्वादश, तत्र द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, एवं द्विकायवधजुगुप्साप्रक्षेपेऽपि २२८००, अथवा भयजुगुप्साप्रक्षेपात् द्वादश, तत्रैकनवतिशतानि विंशताधिकानि ९१२०, एवं सर्वेऽपि द्वादश समुदायाः पञ्चाशीतिसहस्राणि विंशत्युत्तरं शतं ८५१२०, एते द्वादश समुदायाः। एत एव पूर्वोक्ता दश चतुष्कायवधप्रक्षेपात् त्रयोदश भवन्ति, प्राग्वत्तत्र द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, अथवा भयत्रिकायवधप्रक्षेपात् त्रयोदश, तत्र त्रिंशत्सहस्राणि चत्वारि शतानि ३०४००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि ३०४००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपात् त्रयोदश, तत्र भङ्गानां द्वाविंशतिसहस्राण्यष्टौ शतानि २२८००, सर्वोऽप्येकत्र चतुःषष्ठिशतान्वितो लक्षः १०६४०० एते त्रयोदश हेतुसमुदायाः। त एव पूर्वोक्ता दश पञ्चकायवधप्रक्षेपाच्चतुर्दश भवन्ति, तत्रैकनवति शतानि विंशत्युत्तराणि ९१२०, अथवा चतुष्कायवधभयप्रक्षेपाच्चतुर्दश, तत्र द्वाविंशतिसहस्राणि

सासादने मिश्रे च बन्धहेतु भङ्गाः

बौद्धमते आश्रयासिद्धिमाह नचातीन्द्रियोऽपीति, तस्य संस्कारस्य, परोक्षत्वानुपपत्तेरिति, ज्ञानमात्रस्य स्वसंविदितत्वादिति भावः। अज्ञानत्व इति, संस्कारस्याऽज्ञानरूपत्वे तं प्रति ज्ञानमुपादानं न स्यादिति तत्सन्ताने तदुत्पत्तिर्न स्यादित्यर्थः। अयं घटः पटोऽयमिदं नीलमिदं पीतमित्यादिज्ञानान्तरस्य प्रत्यक्षरूपत्वेऽपि संस्काररूपस्य विज्ञानस्य सन्तानान्तरत्वेन परोक्षत्वे तत्सन्तानान्तःपातिनस्स्मृतिसुखादेरपि परोक्षत्वप्रसङ्गः, तस्यापि सन्तानान्तरत्वेऽनियमप्रसङ्गोऽनवस्थाप्रसङ्गश्चेत्याशयेनाह—

सन्तानान्तरत्वेन ज्ञानस्यापि पारोक्ष्ये तदन्तःपातिनः स्मृतिसुखादेरपि तथाभावप्रसङ्गादिति। तदिदमुक्तरूपं पूर्वापरप्रतीत्योरेकाश्रयत्वावगाहीत्यर्थः, प्रतिसन्धानं प्रत्यभिज्ञानं स्मरणं वा निमित्तवत्तया व्याप्तम्, अनिमित्तकत्वे नियमानुपपत्तेः, तच्चानेककर्तृकत्वे भिन्नाश्रयत्वरूपे नास्तीति व्यापकानुपलब्ध्या निमित्तविरहेण विपक्षान्निवर्त्तमानं विश्राम्यति निमित्तवत्येककर्तृकत्वे, एकाश्रयत्व इत्यर्थः। तदियं व्यतिरेकप्रतिबन्धसिद्धिः। एवं सति चान्वयोऽपि नर्त्तकीभ्रूलताक्षेपादौ द्रष्टव्यः, सैव हि भ्रूलता त एव वा परमाणवः प्रतिसन्धीयमाननानाज्ञाननिमित्तत्वेनावस्थिताः,

सन्तानान्तरत्वेनेति, पूर्वापरविज्ञाने एकाश्रिते प्रतिसन्धीयमानत्वादित्यनुमानहेतुघटकेन प्रत्यभिज्ञानस्मरणान्यतरलक्षणप्रतिसन्धानेनाऽऽत्मसिद्धिमुपसंहरति तदिदमुक्तरूपमिति, अस्य प्रतिसन्धानमित्यनेन सम्बन्धः। उक्तरूपमित्यस्यान्तराऽर्थमाह पूर्वापरेत्यादिना, प्रतिसन्धानमित्यस्य स्वरूपोपवर्णनं प्रत्यभिज्ञानं स्मरणं वेति, प्रतिसन्धानात्मको हेतुः स्वव्यापककारणनिवृत्त्याऽनेककर्तृकाद्विपक्षाद्व्यावर्त्तमानस्स्वव्यापकनिमित्तवत्येककर्तृकत्वे एकाश्रयत्वरूपे विश्राम्यति, प्रतिसन्धानात्मको हेतु-

सासादने मिश्रे च बन्धहेतु भङ्गाः

ष्टादश सहस्राणि १८०००, अथवा भयप्रक्षेपाद्दश तत्र द्विसप्ततिशतानि ७२००, जुगुप्साप्रक्षेपाच्च दश, तत्रापि द्विसप्ततिशतानि ७२००, एवमेकत्र दशसमुदायानां द्वात्रिंशत्सहस्राणि चत्वारि शतानि ३२४०० एते दश हेतवः। एत एव पूर्वोक्ता नव त्रिकायवधप्रक्षेपादेकादश भवन्ति, तत्र चतुर्विंशतिसहस्राणि २४०००,तथा द्विकायवधभयप्रक्षेपात् एकादश भवन्ति, तत्र अष्टादश सहस्राणि १८०००, एवं द्विकायवधजुगुप्साप्रक्षेपेऽपि १८०००, अथवा भयजुगुप्साप्रक्षेपादेकादश भवन्ति, तत्र भङ्गानां द्विसप्ततिशतानि ७२००, एवं सर्वेऽपि मिलिता सप्तषष्टिसहस्राणि शतद्वयं च ६७२००, एवमेते एकादश समुदायाः। एत एव पूर्वोक्ताः नव चतुष्कायवधप्रक्षेपात् द्वादश भवन्ति, तत्र चाष्टादश सहस्राणि १८०००, अथवा त्रिकायवधभयप्रक्षेपात् द्वादश भवन्ति, तत्र चतुर्विंशतिभङ्गकसहस्राणि २४०००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि २४०००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपात् द्वादश, अत्राप्यष्टादश सहस्राणि १८०००, एवं सर्वेऽप्येकत्र मिलिताश्चतुरशीतिसहस्राणि ८४०००, एते द्वादश समुदायाः। त एव पूर्वोक्ता नव पञ्चकायवधप्रक्षेपात् त्रयोदश भवन्ति, तत्र द्वासप्ततिशतानि भङ्गानां ७२००, अथवा चतुष्कायवधभयप्रक्षेपात् त्रयोदश भवन्ति, तत्र अष्टादश भङ्गकसहस्राणि १८०००, एवं चतुष्कायवधजुगुप्साप्रक्षेपेऽपि १८०००, अथवा त्रिकायवधभयजुगुप्साप्रक्षेपात् त्रयोदश भवन्ति, चतुर्विंशतिभङ्गसहस्राणि २४०००, सर्वेऽप्येकत्र मिलिताः सप्तषष्टिसहस्राणि शतद्वयं च ६७२०० एते त्रयोदशसमुदायाः। त एव पूर्वोक्ता नव षट्कायवधप्रक्षेपाच्चतुर्दश भवन्ति, अत्र भङ्ककशतानि द्वादश १२००, अथवा पञ्चकायवधभयप्रक्षेपाच्चतुर्दश भवन्ति, अत्र द्वासप्ततिभङ्गकशतानि ७२००, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ७२००, अथवा चतुष्कायवधभयजुगुप्साप्रक्षेपाच्चतुर्दश, तत्र अष्टादश सहस्राणि भङ्गानां १८०००, एवं सर्वेऽपि त्रयस्त्रिंशत्सहस्राणि षट्शतानि ३३६००, एते चतुर्दश समुदायाः। त एव पूर्वोक्ता नव षट्कायवधभयप्रक्षेपात्पञ्चदश भवन्ति,

पैककर्त्राश्रितत्वेनैकधर्मिसम्बन्धित्वान्न बाध इत्यन्वयोऽप्यात्मसाधको युक्त इत्यभिप्रायेणाह दीधितिकारः—

आश्रयत्वविषयत्वसाधारणैकधर्मिसम्बन्धित्वमात्रे साध्येऽन्वयोऽपि युक्त इति दीधितिकारः। विरुद्धधर्मविरहिविषयत्वेन तु विशेषणीयमत्र प्रतिसन्धानम्, अन्यथा य एव बालस्त्वया दृष्टः स एव युवा मयेति प्रतिसन्धानेनानेकान्तात्, युवा बाल इत्यनेन दृश्यगोचरस्य प्रतिसन्धानस्य दृश्यांशे विरुद्धधर्माध्यासो दर्शितः, त्वया मयेत्यनेन द्रष्टृंशे द्रष्टृगोचरस्येति बोध्यम्। तदयं सङ्क्षेपः—स्थिरे तावदात्मनि सोऽहमिति प्रत्यभिज्ञानमेव प्रमाणं, बाधकविरहात्, योऽहं घटमद्राक्षं सोऽहं स्पृशामीति प्रतिसन्धानान्यथानुपपत्तेश्च प्रतिपत्तुरनन्यस्यैव प्रत्येतव्यस्याहमाश्रयत्वात्,

आश्रयत्वविषयत्वेति, पूर्वापरज्ञाने एककर्तृके विरुद्धधर्मविरहिविषयकप्रतिसन्धीयमानत्वादित्यनुमाने हेतौ विरुद्धधर्मविरहिविषयकत्वविशेषणोपादानात्त्वया मयेति भिन्नकर्तृपदवाच्ययुष्मदस्मद्रूपभिन्नकर्तृकज्ञानद्वयप्रतिसन्धानस्यैककर्तृकत्वाभाववति ज्ञाने विषयतासम्बन्धेन सत्त्वेऽपि न व्यभिचारः, एकधर्मिसम्बन्धित्वस्य साध्यत्वे बालो युवेति पदवाच्यबालयुवात्मकभिन्नविषयरूपभिन्नधर्मिसम्बन्धिज्ञानद्वयविषयकप्रतिसन्धानस्यैकधर्मिसम्बन्धित्वाभाववति ज्ञाने विषयतासम्बन्धेन सत्त्वेऽपि न व्यभिचार इत्याह विरुद्धधर्मविरहिविषयत्वेनेति, कःपुनरात्मस्थैर्यन्यायः, प्रतिसन्धानमित्यारभ्य प्रतिसन्धानेनानेकान्तादित्यन्तेन सन्दर्भेण निष्टङ्कितमर्थं निष्कृष्योपदर्शयति तदयं सङ्क्षेप इत्यादिना क्षणभङ्गभङ्गेनाश्रयवासनयोः स्थैर्ये बाधकाभावादितीत्यन्तेन। तत्र स्थिरे तावदात्मनीत्यारभ्य प्रत्येतव्यस्याहमाश्रयत्वादित्यन्तेन प्रतिसन्धानमित्यारभ्य

ततो योगास्त्रयोदश, तदनन्तरं षट्कायाः, ततः पञ्चेन्द्रियासंयमाः, तदनन्तरं द्वे युगले, ततश्चत्वारः कषायाः। स्थापना चेयं—४-२-५-६-१३-३, अमीषां चांकानां ताडनमेवं—त्रिभिर्वेदैस्त्रयोदशयोगा गुण्यन्ते, जातैकोनचत्वारिंशत् ३९, अस्या एकरूपमपसार्यते, स्थिताऽष्टात्रिंशत् ३८, सा चैकैकस्मिन् कायवधे प्राप्यते, इति षड्भिर्गुणिता, जातमष्टाविंशत्यधिकं शतद्वयं २२८, तच्चैकैकस्मिन्निन्द्रियासंयमेऽवाप्यते, इति पञ्चभिर्गुण्यते, जातानि चत्वारिंशदधिकान्येकादशशतानि ११४०, एतानि प्रत्येकमेकैकस्मिन् युगले संभवन्तीति द्विकेन गुण्यन्ते, जातानि द्वाविंशतिशतान्यशीत्यधिकानि २२८०, अमूनि चैकैकस्मिन्कषाये भवन्तीति कषायचतुष्टयेन गुणितानि जातानि विंशत्यधिकान्येकनवतिशतानि ९१२०, एतावन्तो दशबन्धहेतूनां सासादने भङ्गाः। एवमुत्तरत्रापि गणितभावना भावनीया। सांप्रतमेकादशबन्धहेतव उच्यन्ते—तत्र त एव दश बन्धहेतवः कायस्थाने कायद्वयवधपरिग्रहादेकादश, षण्णां च कायानां द्विकसंयोगे भङ्गाः पञ्चदश, ते कायस्थाने स्थाप्यन्ते, ततः प्रागुक्तक्रमेणांकानां ताडने जातानि द्वाविंशतिसहस्राण्यष्टशताधिकानि २२८००, अथवा त एव पूर्वोक्ता दश भयप्रक्षेपादेकादश, तत्र भङ्गानां प्राग्वदेकनवतिशतानि विंशत्यधिकानि ९१२०, एवं जुगुप्साप्रक्षेपेऽपि ९१२०, सर्वसंख्ययैकादशबन्धहेतूनां भङ्गा एकचत्वारिंशत्सहस्राणि चत्वारिंशदधिकानि ४१०४०, उक्ता एकादशबन्धहेतवः। अधुना द्वादशबन्धहेतवोऽभिधीयन्ते—त एव पूर्वोक्ता दश कायत्रयवधपरिग्रहे द्वादश, षण्णां च कायानां त्रिकसंयोगे भङ्गा विंशतिः, ते कायवधस्थाने स्थाप्यन्ते, ततः प्राग्वदङ्कानां गुणने लब्धानि त्रिंशत्सहस्राणि चतुःशताधिकानि ३०४००, अथवा भयकायद्वयवधोपादाने द्वादश, तत्र भङ्गानामष्टशताधिकानि द्वाविंशतिसहस्राणि २२८००, एवं कायद्वयवधजुगुप्साप्रक्षेपेऽपि २२८००, यदि वा भयजुगुप्साप्रक्षेपाद् द्वादश, तत्रैकनवतिशतानि विंशत्यधिकानि भङ्गकानां ९१२०, सर्वसंख्यया द्वादशबन्धहेतूनां भङ्गाः पञ्चाशीतिसहस्राणि विंशत्युत्तरं शतं

॥१६७॥

सन्तानैक्यमेव तथास्तीति चेत्, किं सन्तानत्वं, कार्यकारणप्रवाहत्वमिति चेत्, अनतिप्रसक्तस्य तस्यैव दुर्वचत्वात्, सुषुप्तौ सन्तानविच्छेदाच्च। प्रवृत्तिविज्ञानसन्तानोच्छेदेऽप्यालयविज्ञानसन्ताना अनुवर्त्तन्त इति चेत्, जागरे स्वतन्त्रसन्तानद्वयाननुभवात्। सर्वं एवालयोऽनुभूयते स्वमात्रसाक्षिणा स्वेन केनचित् परेणापि, स चोपादानं प्रवृत्तिविज्ञानस्यापि, ज्ञानद्वयोपादानत्वाविरोधात्, अनुपादानस्यापि प्रवृत्तिविज्ञानस्य ज्ञानाद्यन्तरनिमित्तत्वात् नासत्त्वं, न वा सन्तानानन्त्यम्, आश्रयश्च प्रवृत्तिविज्ञानस्य सुखादेश्च, अत एवालय इत्युच्यते, गृह्यते चाहं जानेऽहं सुखीत्यादिना स्वोपादेयेन प्रवृत्तिविज्ञानान्तरेणेति चेत्, शिष्याचार्यधियां कुतो नैकसन्तानत्वं, सादेश्यादेर्नियामकस्य निराकृतत्वात्, वैजात्यादिति चेत्, न, सन्तानयोर्वैजात्ये मानाभावात्, अनन्तालये वैजात्ययोः कल्पनामपेक्ष्य एकालयकल्पनाया एव न्याय्यत्वात्, क्षणभङ्गस्य भग्नत्वात्,

सन्तानैक्यमेव तथास्तीति चेदित्यादिना क्षणभङ्गस्य भग्नत्वादित्यन्तेन, तथा नियामकम्, जाग्रद्दशायां प्रवृत्तिविज्ञानसन्तानस्यानुभूयमानत्वेऽप्यालयविज्ञानसन्तानस्याननुभूयमानत्वेन सुषुप्तावपि तदनुवर्त्तनाऽभावादित्याह जागर इति, सन्तानयोः शिष्याचार्यधीसन्तानयोः, सन्तन्यमानानां शिष्यालयधियामाचार्यालयधियाञ्चानन्तत्वेन तासु सर्वासु वैजात्यभेदकल्पनामपेक्ष्यैकस्याचार्यालयस्य स्थिरस्यैकस्य शिष्यालयस्य च स्थिरस्य कल्पनमेव लाघवादुचितमिति स्थिरात्मसिद्धिरित्याह अनन्तालय इति, अथवानुभवजन्यसंस्कारस्येत्यारभ्य दृष्टगोचरस्येति बोध्यमित्यन्तस्य पूर्वोक्तग्रन्थस्य निर्गलितार्थमाह—

अपि चान्येनानुभूतस्यान्येन स्मरणे कुतो नातिप्रसङ्गः, एकसन्तानादेरनुभवितृप्रभवत्वस्येव नियामक-

सर्वसंकलने पञ्चदशबन्धहेतुभङ्गा द्विचत्वारिंशत्सहस्राणि षष्ट्यधिकानि पञ्चशतानि ४२५६०, समाप्ताः पञ्चदशबन्धहेतवः। सम्प्रति षोडशबन्धहेतव उच्यन्ते–त एव पूर्वोक्ता दश कायषट्कवधभयप्रक्षेपे षोडश, तत्र पञ्चदशशतानि विंशत्युत्तराणि भङ्गकानां १५२०, एवं कायषट्कवधजुगुप्साप्रक्षेपेऽपि १५२०, अथवा कायपञ्चकवधभयजुगुप्साप्रक्षेपे षोडश, षण्णां च कायानां पञ्चकसंयोगे भङ्गाः षट्, ते कायस्थाने स्थाप्यन्ते, ततः प्रागुक्तक्रमेणांकानां ताडने भङ्गा एकनवतिशतानि विंशत्युत्तराणि ९१२०, सर्वे षोडशबन्धहेतुभङ्गा द्वादशसहस्राणि षष्ट्यधिकशतान्यधिकानि १२१६०, गताः षोडशबन्धहेतवः। अथ सप्तदशबन्धहेतव उच्यन्ते–त एव पूर्वोक्ता दश कायषट्कवधभयजुगुप्साप्रक्षेपात्सप्तदश, तत्र भङ्गाः प्रागुक्तक्रमेण पञ्चदशशतानि विंशत्युत्तराणि १५२०। सर्वसंख्यया सासादनबन्धहेतुभङ्गा लक्षत्रयं त्र्यशीतिसहस्राणि चत्वारिंशदधिकानि ३८३०४०, उक्ताः सासादनबन्धहेतवः।

सम्प्रति मिश्रे नवादयः षोडशपर्यन्ता बन्धहेतवो विभाव्यन्ते–तत्र त एव सासादनोक्ता दशानन्तानुबन्ध्युदयरहिताः शेषा नव जघन्यपदे सम्यग्मिथ्यादृष्टौ भवन्ति, योगाश्चात्र सम्भविनो दश, सम्यग्मिथ्यादृष्टेः कालाकरणतो वैक्रियमिश्रौदारिकमिश्रकार्मणकाययोगासम्भवात्। अंकस्थापना त्वियं—१०–४–३–२–५–६, अमीषां चांकानामभ्यासे कृते जातानि द्विसप्ततिशतानि ७२००, एतावन्तः सम्यग्मिथ्यादृष्टेर्नवबन्धहेतुभङ्गाः। त एवानन्तरोक्ता नव कायद्वयवधप्रक्षेपे दश, षण्णां च कायानां द्विकसंयोगे भङ्गाः पञ्चदश, ते कायस्थाने स्थाप्यन्ते, ततः पूर्वक्रमेण परस्परमङ्कानां गुणने जातान्यष्टादशसहस्राणि १८०००, अथवा भयप्रक्षेपाद्दश, तत्र भङ्गाः प्राग्वद् द्विसप्ततिशतानि ७२००, एवं जुगुप्साप्रक्षेपेऽपि ७२००, सर्वसंख्यया दशबन्धहेतुभङ्गा द्वात्रिंशत्सहस्राणि चत्वारि शतानि ३२४००, गता दशबन्धहेतवः। अथैकादशबन्धहेतव उच्यन्ते–त एव पूर्वोक्ता नव कायत्रयवधप्रक्षेपादेकादश, षण्णां च कायानां त्रिक-

न चेदं विरुद्धधर्मसंसर्गविरहिविषयत्वमसिद्धम्, देहस्यैव चेतनत्वात्, तथा च पूर्वापराहंप्रत्ययास्पदयोर्भेदाग्रहादभेदप्रतिसन्धानं नानुपपन्नम्, उपपन्नश्चाहं जानामीत्यादिकः प्रत्ययः, भवतामिवास्माकमपि ज्ञानस्याज्ञानोपादेयत्वादिति वाच्यम्, मृतदेहवद्देहत्वभूतत्वमूर्त्तत्वरूपादिमत्त्वादिना जीवतोऽपि देहस्याचेतनत्वात्, न च भूतानां समुदायपर्यवसितं चैतन्यं, प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात्, नापि प्रत्येकपर्यवसितम्, करचरणाद्यवयवविगमे तदनुभूतस्य स्मरणायोगात्, देहस्य चैतन्ये च बालस्य प्रथमप्रवृत्तिप्रसङ्गात्, इच्छाद्वेषावन्तरेण प्रयत्नानुत्पत्तेः, इष्टाभ्युपायतानुसन्धानं विनेच्छानुत्पत्तेः, इह जन्मन्यननुभूतस्य प्रतिबन्धस्यास्मृतौ प्रतिसन्धानायोगात्, जन्मान्तरानुभूते चानुभवितरि भस्मसाद्भूतेऽन्येनास्मरणात्, अनुभवादीनां प्रवृत्त्यन्तानां कार्यकारणभावस्येहैव जन्मनि निश्चितत्वात्, तदभावे तदभावस्य सुलभत्वात्, अन्यथा त्वतत्त्वप्रसङ्गात्,

न चेदमिति, शरीरस्य चेतनत्वे तस्याहारनिहारपुद्गलाधीनोपचयापचयाभ्यां प्रतिक्षणं भिन्नत्वेनानुभवितृसर्त्तृभेदात्कथं प्रतिसन्धानमित्यत आह तथा चेति, देहस्य चेतनत्वे चेत्यर्थः। यथा नैयायिकानां मते ज्ञानानात्मकेनात्मनोपादीयते ज्ञानं तथा भूतवादिनामस्माकं मतेऽपि ज्ञानानात्मना शरीरेणेत्याह भवतामिवेति, मृतदेहवदिति जीवदेहमचेतनं देहत्वाद् भूतत्वान्मूर्त्तत्वाद्रूपादिमत्त्वाद्वा मृतदेहवदिति प्रयोगोऽत्र द्रष्टव्यः, प्रयत्नानुत्पत्तेरिति प्रवृत्तिं प्रत्युपायेच्छाया निवृत्तिं प्रत्युपायद्वेषस्य कारणत्वात् तादृशेच्छां प्रति चेष्टसाधनत्वज्ञानस्य तादृशद्वेषं प्रति चानिष्टसाधनत्वज्ञानस्य कारणत्वात्तदुभयाभावेनोपायेच्छाद्वेषाभावेनाऽऽ-

दशबन्धहेतवः। सम्प्रति चतुर्दशबन्धहेतवः ख्याप्यन्ते–त एव पूर्वोक्ता नव कायषट्कवधप्रक्षेपे चतुर्दश, परं षण्णां कायानां षट्कसंयोगे भङ्ग एक इति कायस्थान एकोऽवस्थापनीयः, ततः पूर्वपरिपाट्या व्यवस्थापितानामङ्कानां गुणने जातानि भङ्गकानां द्वादशशतानि १२००, अथवा कायपञ्चकवधभयप्रक्षेपाच्चतुर्दश, नवरं कायस्थाने षट् स्थापनीयाः, षण्णां पञ्चकसंयोगे षण्णामेव भङ्गकानां लभ्यमानत्वात्, अत्र भङ्गा द्विसप्ततिशतानि ७२००, एवं कायपञ्चकवधजुगुप्साप्रक्षेपेऽपि ७२००; यदि वा कायचतुष्टयवधभयजुगुप्साप्रक्षेपे चतुर्दश, अत्र कायस्थाने पञ्चदश स्थापनीयाः, चतुष्कसंयोगे षण्णां भङ्गपञ्चदशकस्य प्राप्यमाणत्वात्, ततः प्राग्वदंकानां गुणने जातानि तत्र भङ्गकानामष्टादशसहस्राणि १८०००, सर्वसंकलनतश्चतुर्दशबन्धहेतुभङ्गास्त्रयस्त्रिंशत्सहस्राणि षट्शतानि ३३६००, गताश्चतुर्दशबन्धहेतवः। सम्प्रति पञ्चदशबन्धहेतवो भाव्यन्ते–तत्र त एव पूर्वोक्ता नव कायषट्कवधभयप्रक्षेपे पञ्चदश। षण्णां च कायानां षट्कसंयोगे भङ्ग एक इति कायस्थान एकः स्थाप्यते, ततः प्राग्वल्लभ्यन्ते भङ्गकानामत्र द्वादशशतानि १२००, एवं कायषट्कवधजुगुप्साप्रक्षेपेऽपि १२००, अथवा कायपञ्चकवधभयजुगुप्साप्रक्षेपे पञ्चदश, षण्णां च कायानां पञ्चकसंयोगे भङ्गाः षट्, ततस्तान् कायस्थाने स्थापयित्वा प्राग्वदंकताडने कृते लब्धानि भङ्गकानां द्विसप्ततिशतानि ७२००, सर्वसंख्यया पञ्चदशबन्धहेतुभङ्गाः षण्णवतिशतानि ९६००, उक्ताः पञ्चदशबन्धहेतवः। अथ षोडशबन्धहेतवोऽभिधीयन्ते–त एव पूर्वोक्ता नव कायषट्कवधजुगुप्साभयप्रक्षेपे षोडश, तत्र भङ्गाः प्रागुक्तक्रमेण द्वादशशतानि १२००, सर्वसंकलने सम्यग्मिथ्यादृष्टौ बन्धहेतुभङ्गा लक्षत्रयं चतुर्विंशतिशतानि ३०२४०० ॥११॥

सासादने मिश्रे च बन्धहेतुभङ्गाः

अविरतहेतुविशेषमाह–

क्तेन्द्रियकरणकं चक्षुरादीन्द्रियाकरणकत्वे सतीन्द्रियकरणकत्वादिति परिशेषानुमानेन मनसः करणतयैव सिद्धेरितिभावः। प्रतिबन्धसिद्धिरिति एतावता प्रबन्धेन विरुद्धधर्मविरहिविषयकप्रतिसन्धानैककर्तृकत्वयोर्व्याप्तिरुपपादितेत्यर्थः, ननूक्तरीत्या व्याप्तिसिद्धावुक्तानुमानेन भवत्वेतद्भवे पूर्वापरप्रतीत्योरेककर्तृकत्वेनात्मसिद्धिः, पूर्वोत्तरभवे तु कथमित्याशङ्कायामाह अनादिश्चासाविति। नन्वात्मनोऽन्यथानुपपद्यमानसरागजन्मत्वेनैतद्भवकारणत्वेनाव्यवहितपूर्वभवस्य सिद्धावपि तत्पूर्वभवादीनां कथं सिद्धिरित्याशङ्कायामुक्तसूत्रस्यैव भावार्थमाह पूर्वजन्मन्यपीति। अनादित्वे च सिद्धे आत्मा अनन्तः सत्त्वे सत्यनादित्वात्, यन्नैवं तन्नैवं, यथा घट इत्यनुमानेनात्मनोऽनन्तत्वसिद्धिरित्याह अनन्तश्चेति, अत्र सत्त्वे सतीति विशेषणात् प्रागभावे न व्यभिचारः। आत्मा विभुः नित्यद्रव्यत्वे सत्यमूर्त्तत्वादिति विभुत्वसाध्यकानुमाने परमाणुषु व्यभिचारवारणायोपात्तस्याऽमूर्त्तत्वस्य विशेष्यस्य पक्षेऽसिद्धिनिवृत्त्यर्थमाह अमूर्त्तश्चेति। आत्मनि पक्षे निष्क्रियत्वहेतोरऽसिद्धिनिवृत्त्यर्थमाह निष्क्रियश्चेति, तत्र हेतुः नित्यत्वे सत्यसदादिप्रत्यक्षत्वात् नित्यत्वे सति जातिभिन्नप्रत्यक्षधर्माश्रयत्वाद्वेति, अत्र नित्यत्वे सतीति विशेषणान्न रूपधर्ममादाय घटादौ व्यभिचारः, जातिभिन्नेतिविशेषणात् पृथिवीत्वजातिमादाय न परमाणौ व्यभिचार इति॥ आत्मा अनादिरित्यनुमाने विपक्षबाधकतर्कमाह आदिमत्त्वे इति, आत्मा आदिमान् यदि स्यात्तर्हि स्तन्यपाने इष्टसाधनत्वज्ञानाभावान्न तत्रादिप्रवृत्तिस्स्यात्, तथात्वे च न कुत्रापि प्रवृत्तिस्स्यादिति निश्चेष्टं जगत्स्यादिति भावः। अनन्तत्वानुमाने तर्कमाह सान्तत्वे इति, अनादिरपि सान्तस्स्यात्तर्हि सत्ताजातिमत्त्वं न स्यात् प्रागभाववदित्यर्थः, द्रव्यत्वानुमाने तर्कमुपदर्शयति अद्रव्यत्वे इति। विभुत्वानुमानोपष्टम्भकतर्कमाह—

अविभुत्वे दहनपवनादेः क्रियानुत्पत्तिप्रसङ्गः, नानादिग्वर्त्तिदहनादिषु युगपददृष्टवदात्मसंयोगाभावात्

स्राणि २१०००, अथवा त्रिकायवधभयप्रक्षेपात् द्वादश भवन्ति, तत्र भङ्गानां अष्टाविंशतिसहस्राणि २८०००, एवं त्रिकायवधजुगुप्साप्रक्षेपेऽपि २८०००, अथवा द्विकायवधभयजुगुप्साप्रक्षेपात् द्वादश भवन्ति,तत्रैकविंशतिभङ्गकसहस्राणि २१०००, सर्वेऽप्येकत्राष्टानवतिसहस्राणि ९८०००, एते द्वादश हेतुसमुदायाः। त एव पूर्वोक्ता नव पञ्चकायवधप्रक्षेपात् त्रयोदश भवन्ति, तत्र भङ्गानां चतुरशीतिशतानि ८४००, अथवा चतुष्कायवधभयप्रक्षेपात् त्रयोदश भवन्ति, तत्र भङ्गानां एकविंशतिसहस्राणि २१०००, एवं चतुष्कायवधजुगुप्साप्रक्षेपेऽपि २१०००, अथवा त्रिकायवधभयजुगुप्साप्रक्षेपात् त्रयोदश भवन्ति; तत्राऽप्यष्टाविंशतिभङ्गकसहस्राणि २८०००, सर्वेऽप्येकत्र अष्टसप्ततिसहस्राणि चत्वारि शतानि ७८४००, एते त्रयोदश हेतुसमुदायाः। त एव पूर्वोक्ता नव षट्कायवधप्रक्षेपाच्चतुर्दश भवन्ति, तत्र भङ्गानां चतुर्दश शतानि १४००, अथवा पञ्चकायवधभयप्रक्षेपाच्चतुर्दश भवन्ति, तत्र चतुरशीतिभङ्गकशतानि ८४००, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि ८४००, अथवा चतुष्कायवधभयजुगुप्साप्रक्षेपाच्चतुर्दश, तत्र भङ्गानामेकविंशतिसहस्राणि २१०००, सवऽप्येकत्र एकोनचत्वारिंशत् सहस्राणि शतद्वयं च ३९२००, एते चतुर्दशहेतुसमुदायाः। त एव पूर्वोक्ता नव षट्कायवधभयप्रक्षेपात् पञ्चदश भवन्ति, तत्र चतुर्दश भङ्गकशतानि १४००, एवं षट्कायवधजुगुप्साप्रक्षेपेऽपि १४००, अथवा पञ्चकायवधभयजुगुप्साप्रक्षेपात् पञ्चदश भवन्ति,तत्र भङ्गानां चतुरशीतिशतानि ८४००, सर्वेऽप्येकत्र मिलिताः सहस्राण्येकादश शतद्वयं च ११२००, एते पञ्चदश समुदायाः। त एव पूर्वोक्ता नव षट्कायवधभयजुगुप्साप्रक्षेपात् षोडश भवन्ति, तत्र चतुर्दश शतानि १४००, एवं सर्वेऽप्येकत्र लक्षत्रयं द्विपञ्चाशत्सहस्राण्यष्टौ शतानि ३५२८०० एते चाविरतहेतुसमुदायाः।

देशविरतस्य त्रसकायविरतेः पञ्चकायाः, तेषामेकद्विकत्रिकचतुष्पञ्चसंयोगाश्च चारणीया, अस्याष्टौ हेतवः, एकः कायः, एकमिन्द्रियं,

अविरत सम्यग्दृष्टौ बन्धहेतु भङ्गाः

त्पत्तिप्रसङ्गादित्यर्थः। तथा च या संदंशिका न शरीरसंयुक्ता तत्रापि प्रयत्नेन स्वाश्रयाऽऽत्मसंयुक्तशरीरसंयुक्ताकाशसंयोगात् क्रियोत्पत्तिस्स्यात्, नचानुभवबाधादभ्युपगन्तुं शक्यमित्याशयः। तथैव स्वाश्रयात्मसंयुक्ताकाशसंयोगादेव, अविभुवाद्याशङ्कते—

अथ जनयतु प्रयत्नो यथा तथा, अदृष्टं तु यथाकथंचित् परम्परया स्वाश्रयसंयोगादेव जनयति, अतिप्रसङ्गस्तु वैभवेऽपि तुल्य इति चेत्, न, लाघवेन स्वाश्रयसंयोगेन जनकताया एव कल्पनात्, अपकृष्टमहत्त्वे चात्मनोऽवयवित्वमनित्यत्वं च स्यात्, मूर्त्तत्वे नित्यस्यास्मदादिप्रत्यक्षधर्मानाधारत्वप्रसङ्गः, विशेषगुणवत आरम्भकत्वप्रसङ्गश्च, सक्रियत्वे मूर्त्तत्वप्रसङ्ग इति शास्त्रार्थसङ्ग्रहः।

अथेति, यथा तथेति, क्वचित् क्रियाद्वारकस्वाश्रयसंयुक्तसंयोगात् क्वचिच्च साक्षात्स्वाश्रयसंयोगादित्यर्थः, यथा कथञ्चिदिति, परंपराघटको येन सह साक्षात्संयोगः क्रियाजनकः स चरमसंयोगप्रतियोगिपदार्थः सक्रियो भवतु अक्रियो वा उभयथाऽपि तत्संयोगेनादृष्टं क्रियाजनकमित्यर्थः, परंपरासंयोगस्य क्रियाजनकत्वे यत्रापि क्रिया न जायते तत्राप्युक्तसम्बन्धस्य विद्यमानत्वेन क्रिया स्यादित्यतिप्रसङ्गस्तु विभुत्वपक्षेऽपि तुल्यः, स्वाश्रयसंयोगस्य मूर्त्तमात्रे सद्भावादित्याशयेनाह अतिप्रसङ्गस्त्विति, आत्मनि विभुत्वसाधकानुमाने तर्कान्तरमप्युपदर्शयति—अपकृष्टमहत्त्वे चेति, आत्मा अमूर्त्तः निष्क्रियत्वादित्यनुमाने तर्कमाह—मूर्त्तत्वे इति, आत्मा नित्यत्वे सति मूर्त्तस्स्यात् तदा जातिभिन्नास्मदादिप्रत्यक्षधर्मानाधारःस्यात्, परमाणुवत् मनोवच्चेत्यर्थः, विशेषगुणवत इति आत्मा यदि नित्यत्वविशिष्टमूर्त्तत्वे सति विशेषगुणवान् स्यात् द्रव्यारंभकस्स्यात् इत्यर्थः। आत्मनि निष्क्रियत्वानुमाने तर्कमाह सक्रियत्व इति, आत्मा सक्रियस्स्यात् मूर्त्तस्स्यादित्यर्थः, आत्मनि विभुत्वानुमानस्य बाधकानुमानं कस्यचिन्मतेनाह—

त्रिकायवधभयजुगुप्साप्रक्षेपाद् द्वादश, त्रयोदश सहस्राणि द्विशतं च भङ्गानां १३२००, सर्वेऽप्येकत्र सप्तविंशतिसहस्राणि सप्तशतानि विंशत्युत्तराणि २७७२० एते द्वादश हेतुसमुदायाः। ते एव पूर्वोक्ता अष्टौ पञ्चकायवधभयप्रक्षेपात् त्रयोदश भवन्ति, तत्र त्रयोदश शतानि विंशत्युत्तराणि भङ्गानां १३२०, एवं पञ्चकायवधजुगुप्साप्रक्षेपेऽपि १३२०, अथवा चतुष्कायवधभयजुगुप्साप्रक्षेपात् त्रयोदश भवन्ति, तत्रापि षट्षष्टिशतानि भङ्गानां ६६००, सर्वेऽप्येकत्र द्विनवतिशतानि चत्वारिंशदुत्तराणि ९२४०, एते त्रयोदश हेतुसमुदायाः। त एव पूर्वोक्ता अष्टौ पञ्चकायवधभयजुगुप्साप्रक्षेपाच्चतुर्दश भवन्ति, तत्र विंशत्युत्तराणि त्रयोदश शतानि भङ्गानां १३२०,एते चतुर्दश हेतुसमुदायाः। सर्वेऽप्येकत्र लक्षं त्रिषष्टिसहस्राणि षट्शतानि अशीत्यधिकानि भङ्गानां १६३६८० एते देशविरतिभङ्गकाः। गतौ मिथ्यात्वाविरतिहेतू, अनन्तानुबन्धिकायवधभङ्गकचारणा च। "अणबन्धिभयदुगुंछाण" कस्मादित्थमुपन्यास? उच्यते—अनन्तानुबन्धिनां मिथ्यादृष्टावेव चारणा विकल्पेनोदयादतः प्रथमोच्चारणं, कायवधभङ्गानां तु देशविरतं यावच्चारणा अतो द्वितीयस्थाने भणनम्, भयजुगुप्सयोस्तु हास्यादिषट्कस्य उदयं प्रत्यपूर्वकरणं यावद् गमनादित्थमुपन्यासः। आह—अविरतेर्द्वादशमभेदस्य मनोऽभिधानस्य मिथ्यादृष्ट्यादिषु प्राग्बन्धहेतुतामुक्त्वा किमिति युगपत् बन्धहेतुषु न दर्शिता? अत्रोच्यते—"तन्मनश्चित्तभेदेषु, चरच्छीनं न दृश्यते। सङ्ख्याधिक्यं च नो कुर्याद् बन्धहेतुस्तथापि तत् ॥१॥ आह भोः को विशेषोऽत्र विरताविरतचित्तयोः?। बन्धं प्रति महानत्र विशेषोऽस्ति स उच्यते ॥२॥ सङ्ख्यावस्त्वसाम्येऽपि विशेषश्वेतरक्तयोः। यथेहास्ति तथाऽत्रापि स्थितेर्भेदाच्च चिन्तयेत् ॥३॥" यथा मांजिष्टं वस्त्रं बहुमूल्यं श्वेतादथवा कृष्णमपवित्रं श्वेतादिति विशेषः। एवं सयोगिमनसा कृतो बन्धः सामयिको भवति अविरतियुक्तमनसा कृतो बन्धः सागरोपमकोटाकोटीः स्थितौ करोतीति, रसादिभिश्च विशेषः स्वमत्या चिन्तयेत् ॥१२॥

भावे च मुमुक्षुत्वमेव न स्यात्, अतस्तदन्यथाऽनुपपत्त्या स्थिरात्मदर्शनमेवाङ्गीकर्त्तव्यम्, न च स्थिरात्मदर्शिनो मुमुक्षोर्विषमिश्रितान्नवत्संसारसुखमपि दुःखमिश्रितत्वाद् वस्तुगत्या दुःखरूपमेवेति दुःखहानेच्छासत्त्वे मुमुक्षुत्वव्याघात इति वाच्यम् फलेच्छाया उपायेच्छाद्वारा प्रवृत्तिं प्रति कारणतया फलेच्छाया अभावे उपायेच्छाया अप्यभावात्कारणाभावेन मोक्षरूपेष्टसाधने चित्तवृत्तिनिरोधादौ प्रवृत्तिरेव न स्यात्, तदभावे मोक्षोऽपि निरुपायः कथं स्यादिति तदन्यथानुपपत्त्या प्रवृत्तौ तादृशेच्छायास्तदुपयोगितयैवाङ्गीकर्त्तव्यत्वात्, मोक्षविरोधिविषयकेच्छाया एव मुमुक्षुत्वव्याघातकत्वात्, उक्तेच्छायास्त्वनुकूलत्वमेवैष्टव्यम्, तथाहि यो हि सांसारिकसुखं विषमिश्रितेष्टाऽन्नवद्दुःखसंभिन्नत्वेनानभिलाषुकः मोक्षसुखमेव तद्विपरीतात्मकमुपादित्सुस्स तद्धेतौ रक्तो न स्यात्तर्हीष्टसाधनत्वस्य चिकीर्षादेश्चाऽभावेनोदासीनवत् नैव तदुपादानार्थं प्रवर्त्तेत, तदननुकूले द्विष्टश्च न स्यात्, तथाच द्वेषादिकारणाऽभावेन नैव निवर्त्तेत तदभावे च न मोक्षसुखात्मकफलोत्पत्तिरिति मोक्षैकहेतूपादित्सा तद्द्वारा मोक्षसुखफलेच्छा च प्रवृत्त्यङ्गतयैवाभ्युपगन्तव्येति सा न मुमुक्षुत्वविघातिकेति सर्वमभिप्रेत्य समाधत्ते नैयायिकः—नेति, तत्र हेतुमाह—

अनात्मदर्शिनो मुमुक्षुत्वव्याघातात्, न ह्यात्मानमप्रतिसन्धाय कश्चिद् दुःखं हातुमिच्छेत्, सुखं वाऽवाप्तुं, मया स्वर्गापवर्गभागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेः, अभियोगः प्रवृत्तिः अननुवृत्तावभियोगनिवृत्तौ फलासिद्धेः, इयं च नैरात्म्यदृष्टिर्नास्तिक्यं द्रढयेत्, नास्ति परलोकः नास्ति कर्मफलमिति निश्चयो नास्तिक्यं, तच्चामुष्मिकभयाभावेन प्रबलविषयतृष्णां, सा च तमोऽनन्तं प्रस्रवति, न चेदेवं कुतो यावज्जीवेदित्यादयो निःशङ्कमुल्लापाः,

गुण्यन्ते, जातैकोनचत्वारिंशत् ३९, ततो रूपचतुष्टयमपसार्यते, स्थिता शेषा पञ्चत्रिंशत् ३५, तया कायषट्कं गुण्यते, जातं दशोत्तरं शतद्वयं २१०, तेनेन्द्रियासंयमपञ्चकगुणनाज्जातानि पञ्चाशदधिकानि दशशतानि १०५०, तैर्युगलद्विके गुणिते जातान्येकविंशतिशतानि २१००, तैः कषायचतुष्टयताडनाल्लब्धानि चतुरशीतिशतानि ८४००, उक्ता नवबन्धहेतवः । सम्प्रति दशबन्धहेतवोऽभिधीयन्ते–तत्र त एवानन्तरोक्ता नव कायद्वयवधप्रक्षेपे दश, षण्णां च कायानां द्विकसंयोगे भङ्गाः पञ्चदश, ततोऽत्र कायस्थाने पञ्चदश स्थाप्यन्ते, ततः प्रागुक्तक्रमेणांकगुणने जातानि भङ्गकानामेकविंशतिसहस्राणि २१०००, अथवा भयप्रक्षेपे दश, तत्र भङ्गाः प्राग्वच्चतुरशीतिशतानि ८४००, एवं जुगुप्साप्रक्षेपेऽपि ८४००, सर्वसंकलने दशबन्धहेतुभङ्गाः सप्तत्रिंशत्सहस्राण्यष्टौ शतानि ३७८००, गता दशबन्धहेतवः । अथैकादशबन्धहेतव उच्यन्ते–त एव पूर्वोक्ता नव कायत्रयवधपरिग्रहादेकादश, षण्णां च कायानां त्रिकसंयोगे भङ्गा विंशतिः, ततोऽत्र विंशतिः कायस्थाने स्थाप्यते, ततः प्राग्वदंकानामभ्यासे लब्धानि भङ्गकानामष्टाविंशतिसहस्राणि २८०००, अथवा कायद्वयवधभयप्रक्षेपे एकदश, कायद्वयवधप्रक्षेपे च कायस्थाने पञ्चदश स्थाप्यन्ते, ततः प्राग्वद्भङ्गकानामेकविंशतिसहस्राणि २१०००, एवं कायद्वयवधजुगुप्साप्रक्षेपेऽपि २१०००, यदि वा भयजुगुप्साप्रक्षेपादेकादश, तत्र कायस्थाने षडेव प्राप्यन्ते, इति प्राग्वद्भङ्गाश्चतुरशीतिशतानि ८४००, सर्वसंख्ययैकादशबन्धहेतुभङ्गा अष्टसप्ततिसहस्राणि चत्वारि शतानि ७८४००, गता एकादशबन्धहेतवः । संप्रति द्वादशबन्धहेतव उच्यन्ते–तत्र त एव पूर्वोक्ता नव कायचतुष्टयवधप्रक्षेपे द्वादश, षण्णां च कायानां चतुष्कसंयोगे भङ्गाः पञ्चदश, तत्रोऽत्र कायस्थाने पञ्चदश स्थाप्यन्ते, ततः प्रागुक्तक्रमेणांकगुणने लब्धानि भङ्गकानामेकविंशतिसहस्राणि २१०००, अथवा कायत्रयवधभयप्रक्षेपे द्वादश, तत्र कायस्थाने विंशतिः स्थाप्यन्ते, इति प्राग्वद्भङ्गा अष्टाविंशतिसहस्राणि २८०००, एवं काय-

तदर्थं यत्नस्तथा तथा प्रतिपत्तेः, उपेक्षेतेति चेत्, कृतैवैतावन्तं कालमुपेक्षा, तथापि तद्धानासिद्धेः, यत्नाभावेऽप्यहं गौरोऽहं सुखीत्यादिप्रतिपत्तेः सन्तन्यमानत्वात्, तत्त्वज्ञानविरहेऽपि संसारस्यानुवर्त्तमानत्वादिति भावः।

सोपाधिश्च तथा–शरीरावच्छिन्नात्मा दुःखहेतुः। अशक्यत्वादित्यस्य हेतोरुपपादनार्थमाह न हि तस्येति, वियोग इति, विप्रयोग इत्यपि पाठः; विभाग इत्यर्थः, यथा यथात्मनोऽप्रतिपत्त्यर्थं प्रवृत्तिस्तथा तथाऽऽत्मज्ञानमेव, न ह्यात्मानमज्ञात्वा तत्प्रतिपत्तिनिषेधार्थं यत्नस्सम्भवति, अप्रसक्तस्य निषेधाऽयोगादित्याह–नाप्यऽप्रतिपत्तिरिति। आत्मविषयकज्ञाननिमित्तक-यत्नाकरणलक्षणोपेक्षां कुर्यादित्याशङ्कते उपेक्षेतेति चेदिति, अद्याप्युपेक्षा कृतैव न च तथाप्यात्महानं सम्पन्नमित्युत्तरयति कृतैवेति, तदेव प्रपञ्चयति यत्नाभावेऽपीति, आत्महानं तदा स्याद्यदि यत्नाकरणे आत्मज्ञानं न स्यात्, यद्वा शरीरव्यतिरिक्ततयाऽऽत्मनो ज्ञानाभावेऽपि मुक्तिनिलयावाप्त्या संसारो नैव प्रवर्त्तेत; न चैतद्वयमिति भावः। निष्प्रयोजनत्वाच्चेति पूर्वोक्तद्वितीय-हेतोरुपपादनायाह—

निष्प्रयोजनं चैतत्, सोपाधेर्हि त्यागो दुःखहानाय, निरुपाधेस्तु किमर्थं, पुनः सोपाधित्वशङ्क्येति चेत्, न, बीजाभावादिति, कुतः पुनरुपादेयः, तथा सति भावनाक्रमेण निःश्रेयससिद्धेः। किमस्योपादानं, विवेकः, कुतः, अनात्मनः शरीरादेः, किं पुनरत्र प्रमाणं, न्याय आम्नायश्च, न्यायश्च शरीरमेव हि तावन्मूर्धाभिषिक्तमनात्मानमात्मानं मन्यमानस्य तदुपादाय तदनुकूलत्रैलोक्यविषया तृष्णा विजृम्भते, तथा तत्प्रतिकूलविषयद्वेषः, न चैतत्केवलात्मदर्शिनः सम्भवति, निरुपाधेः पुत्रवित्तलोभाभावात्, तैरनुपकार्यत्वात्,

भङ्गानां चतुर्दशशतानि १४००, एवं कायषट्कवधजुगुप्साप्रक्षेपेऽपि १४००, यदि वा कायपञ्चकवधभयजुगुप्साप्रक्षेपे पञ्चदश । नवरमत्र कायस्थाने षट् स्थाप्यन्ते, कारणं प्रागेवानेकश उक्तम् । ततः प्राग्वदङ्कानां गुणने लब्धानि भङ्गानां चतुरशीतिशतानि ८४००, सर्वसङ्कलने पञ्चदशबन्धहेतुभङ्गा एकादशसहस्राणि शतद्वयं ११२००, उक्ताः पञ्चदशबन्धहेतवः। षोडशबन्धहेतव इमे-त एवपूर्वोक्ता नव कायषट्कवधभयजुगुप्साप्रक्षेपे षोडश, तत्र प्रागुक्तक्रमेण भङ्गाश्चतुर्दशशतानि १४००, सर्वसङ्ख्ययाऽविरतसम्यग्दृष्टौ भङ्गास्त्रीणि लक्षाणि द्विपञ्चाशत्सहस्राण्यष्टौ शतानि ३५२८००, उक्ता अविरतसम्यग्दृष्टिबन्धहेतवः ।

सम्प्रति देशविरतेऽष्टादयश्चतुर्दशपर्यन्ता बन्धहेतवः ख्याप्यन्ते-तत्र देशविरते कायवधाः पञ्च, षष्ठस्य त्रसकायवधस्य प्रत्याख्यातत्वात्, योगाश्चैकादश कार्मणौदारिकमिश्राहारकद्विकानामसंभवाज्जघन्यपदभाविनश्चाष्टौ बन्धहेतव इमे-पञ्चानां कायवधानामन्यतम एकः कायवधः, पञ्चानामिन्द्रियासंयमानामन्यतम एक इन्द्रियासंयमः, द्वयोर्युगलयोरेकमन्यतरद्युगलं,त्रयाणां वेदानामेकोऽन्यतमो वेदः, अप्रत्याख्यानकषायाणामत्रोदयाभावात् प्रत्याख्यानावरणसंज्वलनसंज्ञौ द्वावन्यतमौ क्रोधादिकौ,एकादशानां योगानामेकोऽन्यतमो योगः। पञ्चानां कायानामेककसंयोगे भङ्गाः पञ्च प्राप्यन्ते, इति कायस्थाने पञ्च स्थाप्यन्ते, पञ्चेन्द्रियासंयमस्थाने, द्वौ युगलस्थाने, त्रयो वेदस्थाने, चत्वारः कषायस्थाने, एकादश योगस्थाने, स्थापना-११-४-३-२-५-५। तत्र कायवधपञ्चकं प्रत्येकं पञ्चस्विन्द्रियासंयमेषु सम्भवन्तीति तेन पञ्च गुण्यन्ते, जाता पञ्चविंशतिः २५, सा युगलद्विके प्रत्येकमवाप्यत इति तया द्विको गुण्यते, जाता पञ्चाशत् ५०, तया वेदत्रिकं गुण्यते, लब्धं सार्द्धशतं १५०, तदपि प्रत्येकं कषायचतुष्टये प्राप्यते, इति तेन चतुष्को गुण्यते, जातानि षट् शतानि ६००, तानि च प्रत्येकमेकादशसु योगेषु सम्भवन्तीति तैरेकादश गुण्यन्ते, जातानि षट्षष्टिशतानि ६६००, एतावन्तोऽष्टबन्धहेतवः । सम्प्रति नवब-

देशविरते बन्धहेतु भङ्गाः

नादिति हेतोरिति भावः। तत्त्वज्ञानिनो विधिनिषेधानधिकारित्वेन विहितनिषिद्धक्रियाभ्यां तत्कृताभ्यां न धर्माधर्मयोरुत्पत्तिः, अधिकारसम्पत्तेरेव तयोस्सद्भावादिति नाऽनिर्मोक्षप्रसङ्ग इत्यभिप्रायेणाह विधिनिषेधेति, मनुष्यादिजन्मब्राह्मणत्वादिजातिबालाद्यवस्थाधनोपनयनादिसंस्कारादिसम्बन्धेन विधिनिषेधादिप्रवृत्तेरात्मज्ञस्य च स्वात्मनि शरीरसम्बन्धिनां तेषामऽभावनिश्चयान्न विधिनिषेधाधिकारित्वमित्याह जन्मजातीति। तत्प्रवृत्तेः विधिनिषेधप्रवृत्तेः। अनात्मनि शरीरादावात्मग्रहः संसारनिदानमित्यत्र हेतुमाह मिथ्याज्ञानवत एवेति, अत्र परः शङ्कते नन्विति। अत्रैव समाधानमुत्प्रेक्ष्यापहस्तयति—अलं प्रत्ययादिनेति। नैयायिकस्समाधत्ते—

अत्रापीदमेवोत्तरम्—अनात्मन्यात्मग्रहो निदानं संसारस्येति, मिथ्याज्ञानवासनासहायं हि कर्म धर्माधर्मजननक्षममिति। ननु मिथ्याज्ञानवासनानां धर्माधर्मजनकत्वे मानाभावः, अथ भोगेन कर्मक्षयार्थं प्रवृत्तस्य तत्त्वज्ञानवतोऽप्यपूर्वधर्माधर्मोत्पादे मोक्षासम्भवात् श्रुतिप्रामाण्यान्यथानुपपत्त्या तत्सिद्धिरिति चेत्, न, आहत्यैव तत्त्वज्ञानस्य धर्माधर्मनाशकत्वात्, नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति स्मृतेर्नैवमिति चेत्, न, प्रायश्चित्तेनापि दुरितनाशात्,

अत्रापीदमेवोत्तरमिति। मिथ्याज्ञानवासनासहायं हीति, तत्त्वज्ञानिनस्तु मिथ्याज्ञानाभावेन तन्मूलकरागद्वेषयोरभावात् तन्मूलकविहितनिषिद्धविषयकप्रवृत्त्यभावादपूर्वधर्माधर्मानुत्पत्तौ पूर्वकृतकर्मणो भोगात्प्रक्षये संसारविच्छेदस्सम्भवतीति भावः। श्रुतिप्रामाण्येति तमेव विदित्वाऽतिमृत्युमेतीति न स पुनरावर्त्तत इत्यादिश्रुतिप्रामाण्येत्यर्थः। तत्सिद्धिः मिथ्या-

स्थान एकः स्थाप्यते, पञ्चानां पञ्चकसंयोगे एकस्यैव भङ्गस्यावाप्यमानत्वात् । ततः प्राग्वदंकानामभ्यासे भङ्गानां त्रयोदशशतानि विंशत्युत्तराणि १३२०, यदि वा कायचतुष्टयवधभयप्रक्षेपाद् द्वादश, अत्र कायस्थाने भङ्गाः पञ्च स्थाप्यन्ते, पञ्चानां चतुष्कसंयोगे भङ्गपञ्चकस्य सम्भवात्, ततः प्राग्वदंकानामभ्यासे जातानि भङ्गानां षट्षष्टिशतानि ६६००, एवं कायचतुष्टयवधजुगुप्साप्रक्षेपेऽपि ६६००, अथवा कायत्रयवधजुगुप्साभयप्रक्षेपे द्वादश, तत्र कायस्थाने दश स्थाप्यन्ते, पञ्चानां त्रिकसंयोगे भङ्गदशकलाभात्, ततोऽत्र भङ्गास्त्रयोदशसहस्राणि शतद्वयाभ्यधिकानि १३२००, सर्वमीलने द्वादशबन्धहेतुभङ्गाः सप्तविंशतिसहस्राणि सप्तशतानि विंशत्यधिकानि २७७२०, गता द्वादश बन्धहेतवः । अथ त्रयोदश बन्धहेतवः प्रकाश्यन्ते—त एव पूर्वोक्ता अष्टौ कायपञ्चकवधभयप्रक्षेपात्त्रयोदश, अत्र कायस्थान एकः स्थाप्यते, पञ्चानां पञ्चकसंयोग एकस्यैव भङ्गस्य भावात्, ततः प्राग्वद्भङ्गास्त्रयोदशशतानि विंशत्यधिकानि १३२०, एवं कायपञ्चकवधजुगुप्साप्रक्षेपेऽपि १३२०, यदि वा कायचतुष्टयवधभयजुगुप्सोपादाने त्रयोदश, तत्र कायस्थाने पञ्च स्थाप्यन्ते, ततो लब्धानि भङ्गकानां षट्षष्टिशतानि ६६००, सर्वसंख्यया त्रयोदशबन्धहेतुभङ्गा द्विनवतिशतानि चत्वारिंशदधिकानि ९२४०, गतास्त्रयोदशबन्धहेतवः। अधुना चतुर्दशबन्धहेतवो विभाव्यन्ते—त एव पूर्वोक्ता अष्टौ कायपञ्चकवधभयजुगुप्साप्रक्षेपाच्चतुर्दश, तत्र कायस्थान एकः स्थाप्यते, ततः प्राग्वदंकगुणने भङ्गास्त्रयोदशशतानि विंशत्युत्तराणि १३२०, सर्वसंख्यया देशविरतबन्धहेतुभङ्गा लक्षं त्रिषष्टिसहस्राणि षट्शतान्यशीत्यधिकानि १६३६८० ॥१२॥

प्रमत्ताप्रमत्तयोर्विशेषमाह—

दोरूवाणि पमत्ते चयाहि एगं तु अप्पमत्तंमि । जं इत्थिवेयउदए आहारगमीसगा नत्थि ॥१३॥

ननु माभूदतिपातकस्य मातृगमनादेः प्राणान्तं प्रायश्चित्तमेतद्भवीयक्रियाधिकारसंपादकं, जन्मान्तरीयक्रियाधिकारसंपादकं तु
भविष्यतीति चेत्, स्यादेतत् यद्येतद्भवीयमातृगमनादिपातकं जन्मान्तरीयाधिकारानर्हत्वसंपादकं स्यात्, न चैवमित्याह न
च जन्मान्तरीयमपीति, अथ कृतं कर्म भोगादेव नश्यति, न च प्रायश्चित्तेन कर्मणो भोगफलं विनापि विनाशाद्व्यभिचारः,
तत्रापि कर्मफलेन प्रायश्चित्ताचरणजन्यदुःखोपभोगेनैव कर्मनाशादिति चेत्, मैवम्, ब्रह्मघातमातृगमनादिजन्यकर्मणो नरकादि-
दुःखोपभोगफलस्यागमोपदिष्टत्ववत्तस्यागमानुपदिष्टत्वात्, कर्मणोऽवश्यं फलदानप्रत्यलत्वेनानिच्छोरप्यतिपातकिनो नरकादिपात-
फलवत् प्रायश्चित्तं विनापि कर्मणो माहात्म्यादेव तदाचरणजन्यदुःखफलस्याप्यवश्यं भावित्वेन प्रायश्चित्तस्याप्यानर्थक्यप्रसङ्गाच्च
इत्याह न च प्रायश्चित्ताचरणदुःखमेवेति। एतदेवोपपादयति तेन विनापीति, प्रायश्चित्तमन्तरेणापीत्यर्थः, न कलञ्जं भक्ष-
येदित्यादिवाक्यं कलञ्जकर्मकभक्षणं न कर्त्तव्यमित्येवं कलञ्जभक्षणनिवृत्तिबोधजनकं न, येन कलञ्जभक्षणादिकरणे तन्निवृत्ति-
मभूत् नरकादिस्तु कथमिति शङ्क्येत, किन्तु कलञ्जभक्षणमनिष्टसाधनमिति बोधजनकमेव, तथा च कृते कलञ्जभक्षणे यदि
तज्जन्यमनिष्टं न स्यात्तदा तद्बोधकस्य न कलञ्जं भक्षयेदिति निषेधवाक्यस्याप्रामाण्यं स्यात्,अतोऽवश्यं कलञ्जभक्षणेनाऽनिष्टं सम्पाद-
नीयं, तथाच प्रायश्चित्ताचरणदुःखं यदि कलञ्जभक्षणफलं स्यात् तदा प्रायश्चित्ताऽकरणेऽपि तत्स्यादेवेत्याशयेनाह न खलु निवृत्तये
इति, प्रायश्चित्तकरणेऽपि तज्जन्यं यस्य दुःखं न जातं तस्य कर्मनिवृत्त्यभावेन प्रायश्चित्तं निष्फलमेव प्रसज्येत, कृतेपि प्रायश्चित्ते
कर्मणस्तदवस्थानात्, तद्भोगार्थं महारौरवादिनरकपातश्च स्यादित्याह विना प्रायश्चित्तेत्यादीति। प्रायश्चित्तस्य कर्मनाशफलकत्वे
श्रुत्यादिप्रमाणमाह—

कशतद्वय २१६, एते पञ्च हेतुसमुदायाः। भयप्रक्षेपादेते एव षड् भङ्गसमुदायाः, भङ्गास्ते एव २१६, जुगुप्साप्रक्षेपेऽपि षट् समुदायाः भङ्गास्ते एव २१६, उभयप्रक्षेपे सप्तसमुदायाः भङ्गास्त एव २१६, सर्वेऽप्येकत्र अष्टौ शतानि चतुःषष्ठ्यधिकानि ८६४, एते अपूर्वकरणहेतवः।

बादरस्य यन्त्रकं ४–९ कषाययोगभेदात् षट्त्रिंशद् द्विकसंयोगा भवन्ति, ३६ एते द्विकसमुदायाः। बादरस्य पञ्चबन्धकस्य वेदो-
१–१
दयोऽप्यस्ति, अतो वेदप्रक्षेपात्त्रयो हेतवः, भङ्गास्त एव त्रिगुणाः अष्टोत्तरं शतं १०८ एते त्रिहेतुसमुदायाः। सर्वेऽप्येकत्र चतुश्चत्वारिंशदधिकं शतं १४४, एते बादरकषायहेतवः। सूक्ष्मादीनां यन्त्राभावो गुणनाभावादिति। सूक्ष्मकषायस्य एक एव कषायः, एको योगः, ९। उपशान्तस्य नवैव। क्षीणकषायेऽपि नवैव हेतवः। सयोगिनि सप्तैव हेतवः, ७। यतो योगकृतो बन्धस्ते च तेष्वियत्प्रमाणा इति ॥

(मलय०)—उक्ता देशविरतबन्धहेतवः, सम्प्रति प्रमत्ते पञ्चादयः सप्तपर्यन्ता वक्तव्यास्तत्र योगविषये प्रमत्ताप्रमत्तयोर्विशेषमाह—इहापि पूर्वगाथातो वेदाहतानां निजकयोगानामित्यनुवर्त्तते, ततोऽयं पदानां समन्वयः—प्रमत्तसंयतेऽप्रमत्तसंयते च प्रथमतो वेदैर्निजकयोगान् गुणयेत्, गुणयित्वा च तन्मध्यात्प्रमत्ते प्रमत्तसंयते द्वे रूपे त्यज, अप्रमत्तसंयते पुनरेकं रूपं, कस्मात्? इति चेत्, अत आह—यद्यस्मात्कारणात् स्त्रीवेदोदय आहारकाहारकमिश्रकौ न स्तः, स्त्रीणां चतुर्दशपूर्वाधिगमसम्भवाभावादाहारकद्विकासम्भवः। चतुर्दशपूर्वाधिगमोऽपि कस्मान्न भवति? इति चेत्, उच्यते—स्त्रीणां दृष्टिवादाध्ययनप्रतिषेधात्। उक्तं च—"तुच्छा गारववहुला, चलिंदिया दुव्वला य धीईए। इय अइसेसज्झयणा, भुयावाओ उ नो थीणं ॥१॥ ततः प्रमत्ते वेदाहतेभ्यो निजकयोगेभ्य आहारकाहारकमिश्ररूपौ

तथा च श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति। स्मृतिरपि 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इति।

तथा च श्रुतिः "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इत्यादि, तस्मिन् ब्रह्मणि, परावरे परेऽपरे च, दृष्टे साक्षात्कृते, अस्य परमात्मसाक्षात्कारिणः, हृदयग्रन्थिः आत्मशरीरयोरभेदसंस्कारः, भिद्यते विनश्यति, ईश्वरसाक्षात्कारे जाते तत्सामग्रीनियतसामग्रीजन्यतया जीवात्मसाक्षात्कारो भवत्येव अतस्तद्विपरीतगोचरात्मशरीराद्यभेदसंस्कारो नश्यतीति हृदयम्, छिद्यन्ते सर्वसंशया इति, ईश्वरसाक्षात्कारे सति योगजधर्मबलेन दोषविरहाद् निखिलपदार्थानां यथार्थ एव साक्षात्कारो जायते, कोऽपि ततः संशयो भवितुं नैवार्हति, कर्माणि सञ्चिताद्दष्टानि, क्षीयन्ते नश्यन्तीत्यर्थः, नाशकान्तरविरहेण परमात्मसाक्षात्कारेणैवाद्दष्टनाश इति भावः। ननु मिथ्याज्ञानेत्यादिना प्रबन्धेन कृतस्य पूर्वपक्षस्य समाधानमाह—

अत्राहुः—उक्तश्रुतिस्मृतिवचनैर्न तत्त्वज्ञानस्य कर्मक्षयजनकत्वं बोध्यते, परन्तु ज्ञानानन्तर्यं कर्मक्षयस्य, तच्च फलसकारणभावभोगद्वारैवोपपद्यमानं न कारणत्वव्यवस्थापकं, न च व्यभिचारेण भोगो न तत्त्वज्ञानद्वारमिति वाच्यम्, युगपदनेकदेहसम्पादनीयभोगानां तदधीनत्वमात्रस्य विवक्षितत्वात्, जन्यजनकभावः परमस्ति न वेत्यन्यदेतत्, समानाधिकरणभोगप्रागभावासमानकालीनो भोगस्तत्त्वज्ञानजन्य इत्यपि कश्चित्,

अत्राहुरित्यादिना,उक्तश्रुतीति भिद्यते हृदयग्रन्थिरित्यादिश्रुतीत्यर्थः, स्मृतीति ज्ञानाग्निः सर्वकर्माणीत्यादिस्मृतीत्यर्थः, तच्च—कर्मक्षयनिष्ठं ज्ञानानन्तर्यञ्च, भोगस्य कर्मक्षयं प्रति कारणत्वं तु नाभुक्तं क्षीयते कर्मेत्यादिश्रुत्या प्रागेव सिद्धमिति तत्त्वज्ञा-

द्वात्रिंशत् , सा प्रत्येकं युगले प्राप्यते, इति तया द्विको गुण्यते, जाता चतुःषष्टिः, सापि प्रत्येकं कषाये सम्भवतीति तया च चतुष्को गुण्यते, जातं षट्पञ्चाशदधिकं शतद्वयं २५६, इयन्तोऽप्रमत्तसंयते पञ्चबन्धहेतुभङ्गाः । त एव पूर्वोक्ताः पञ्च भयेन सह षट्, तत्रापि त एव भङ्गाः २५६, अथवा जुगुप्साप्रक्षेपे षट्, तत्रापि त एव भङ्गाः २५६, सर्वमीलने षड्बन्धहेतुभङ्गाः पञ्चशतानि द्वादशोत्तराणि ५१२, त एव पञ्च जुगुप्साभयप्रक्षेपे सप्त, तत्रापि त एव षट्पञ्चाशदधिकशतद्वयप्रमाणा भङ्गाः २५६, सर्वसंख्ययाऽप्रमत्तसंयते बन्धहेतुभङ्गा दशशतानि चतुर्विंशत्यधिकानि १०२४, उक्ता अप्रमत्तबन्धहेतवः ।

संप्रत्यपूर्वकरणबन्धहेतवोऽभिधीयन्ते—अपूर्वकरणे योगा नव, वैक्रियाहारकयोरपि तत्रासम्भवात् । जघन्यपदे पञ्च ते चामी बन्धहेतवः—त्रयाणां वेदानामन्यतमो वेदः, नवानां योगानामन्यतम एको योगः, द्वयोर्युगलयोरन्यतरद्युगलं, चतुर्णां संज्वलनक्रोधादीनामेकतमः क्रोधादिकः । वेदस्थाने त्रयः स्थाप्यन्ते, योगस्थाने नव, युगलस्थाने द्वौ, कषायस्थाने चत्वारः । स्थापना–४–२–३–९, तत्र वेदत्रिकेण योगनवकं गुण्यते, जाता सप्तविंशतिः, तया युगलद्विकं गुण्यते, जाता चतुःपञ्चाशत् ५४, तया कषायचतुष्टयं गुण्यते, जाते द्वे शते षोडशोत्तरे २१६, एतावन्तोऽपूर्वकरणे पञ्च बन्धहेतुभङ्गाः । त एव पञ्च भयप्रक्षेपात् षट्, तत्रापि तावन्त एव भङ्गाः २१६, अथवा जुगुप्साप्रक्षेपात् षट्, तत्रापि पूर्वोक्तसंख्याका एव भङ्गाः २१६, एकत्र मीलने षड्बन्धहेतुभङ्गाश्चत्वारि शतानि द्वात्रिंशदधिकानि ४३२, त एव पञ्च भयजुगुप्साप्रक्षेपे सप्त, तत्रापि त एव षोडशोत्तरद्विशतसंख्या भङ्गाः २१६, सर्वसंख्ययाऽपूर्वकरणे बन्धहेतुभङ्गा अष्टौ शतानि चतुःषष्ट्यधिकानि ८६४, उक्ता अपूर्वकरणे बन्धहेतवः ।

सम्प्रत्यनिवृत्तिबादरबन्धहेतवोऽभिधीयन्ते—तत्रानिवृत्तिबादरे जघन्यपदे द्वौ बन्धहेतू, तौ चेमौ—चतुर्णां सञ्ज्वलनानामेकतमः

इत्यादिवचनविरोधानुरोधेन तत्त्वज्ञानं कायव्यूहसम्पादनद्वारा झटिति सकलकर्मभोगं निर्वाह्य तानि नाशयतीत्यत्रैव ज्ञानस्य कर्मनाशकताबोधकवाक्यानां तात्पर्यं, यथाऽग्नेरिन्धननाशद्वारैव भस्मजनकत्वात्परम्परया हेतुता तथा ज्ञानस्यापि विशिष्टभोगद्वारैव कर्मनाशकत्वात्परम्परया हेतुतेत्येतत्सूचनायैव ज्ञानस्याऽग्नित्वेन निरूपणमित्याशयेनाह—

स्मृतेरपि वह्नेः परम्परया भस्मजनकत्वात् ज्ञानस्यापि विशिष्टभोगद्वारा कर्मनाशकत्वमित्यत्र कर्मपदमुख्यत्वानुरोधात् तत्त्वज्ञानेन प्रतिबन्धाद्विहितनिषिद्धक्रियातो न धर्माधर्मोत्पाद इत्यत्र वा तात्पर्यम्, न त्वाहत्यैव ज्ञानस्य कर्मनाशकत्वे, 'आचार्यवान् पुरुषो वेद–तस्य तावदेव चिरं–यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इत्यन्यथोपवर्णयितुमशक्यायाः श्रुतेर्विरोधात्, तदर्थश्च तस्यात्मसाक्षात्कारवतस्तावदेव चिरं विलम्बो यावन्न विमोक्ष्ये न विमोक्ष्यते उपात्तकर्मराशेः सकाशात् फलोपभोगेन, अथ तस्मिन् सति सम्पत्स्ये सम्पत्स्यते कैवल्येनेति, वाक्यशेषश्च भवति भोगेन त्वितरे क्षपयित्वेति।

स्मृतेरपीति, अस्य कर्मनाशकत्वमित्यत्रेत्यस्य च तात्पर्यमित्यनेनान्वयः, तत्त्वज्ञानस्य विशिष्टभोगद्वारा पूर्वकृतकर्मणो धर्माधर्मरूपस्य नाशकत्वमित्येवं रूपेऽस्मिन् पक्षे ज्ञानाग्निः सर्वकर्माणीत्यत्र कर्मपदं धर्माधर्मपरत्वाल्लाक्षणिकमिति। पक्षान्तरमाह कर्मपदमुख्यत्वानुरोधादिति, अस्मिँश्च पक्षे कर्मपदं विहितनिषिद्धक्रियाशक्तमेव, तत्र भस्मसाद्भवनं च तत्त्वज्ञानरूपप्रतिबन्धकसद्भावाद् धर्माधर्मलक्षणकार्याऽनर्जकत्वम्, तथाच तत्त्वज्ञानकाले विहितनिषिद्धक्रियाकरणेऽपि न धर्माधर्मोत्पाद इति भावः। भोगं विनैव ज्ञानस्य कर्मनाशकत्वे श्रुतिविरोधमाह–आचार्यवानिति, तस्य उत्पन्नतत्त्वज्ञानस्य, चिरं विलम्बः कैवल्यप्रागभाव

साम्प्रतं जीवस्थानेष्वाह—

**सोलसट्ठारस हेऊ जहन्न उक्कोसया असन्नीणं। चोद्दसट्ठारसऽपज्जस्स सन्निणो सन्निगुणगहिओ ॥१५॥**

(स्वो०)—'षोडशाष्टादशहेतू जघन्योत्कृष्टकौ असंज्ञिनां, चतुर्दशाष्टादशापर्याप्तकस्य संज्ञिनः संज्ञिगुणगृहीतः' इति पदानि। पदार्थः–द्वादशानामसंज्ञिनां जघन्येनापि षोडश बन्धहेतवः, उत्कृष्टेनाष्टादश, संज्ञिनि अपर्याप्तके चतुर्दश जघन्येनोत्कृष्टतोऽष्टादश, पर्याप्तकसंज्ञी पुनः गुणस्थानकस्थ एव त्रयोदशस्थानापन्न उक्त एव नेहोच्यत इति गाथार्थः ॥१५॥

(मलय०)—तदेवमुक्ता गुणस्थानकेषु युगपत्कालभाविनो बन्धहेतवस्तेषां च भंगसंख्या। साम्प्रतं जीवस्थानकेषु युगपद्भाविबन्धहेतुसंख्याप्रतिपादनार्थमाह–असंज्ञिनां संज्ञिपञ्चेन्द्रियरहितानां शेषाणां द्वादशानामपि जीवस्थानानां प्रत्येकं जघन्यपदे षोडशबन्धहेतवः, उत्कर्षेणाष्टादश। इदं च मिथ्यादृष्टिगुणस्थानकमधिकृत्योक्तं वेदितव्यम्। सासादनगुणस्थानके तु बादरैकेन्द्रियाणामपर्याप्तानां जघन्यपदे पञ्चदशबन्धहेतवो द्रष्टव्याः। तथा संज्ञिपञ्चेन्द्रियस्यापर्याप्तस्य जघन्यपदे चतुर्दशबन्धहेतवः, उत्कृष्टपदेऽष्टादश। यस्तु संज्ञिपञ्चेन्द्रियः पर्याप्तः स गुणगृहीतो गुणस्थानकग्रहणेन गृहीतः, पर्याप्तसंज्ञिपञ्चेन्द्रियो हि चतुर्दशगुणस्थानसम्भवी, ततस्तद्ग्रहणेनैव स गृहीत इति न भूयो भण्यते ॥१५॥

अत्रापि चक्ररचनाविशेषमाह—

**मिच्छत्तं एगं चिय छक्कायवहो तिजोगसन्निम्मि। इंदियसंखा सुगमा असन्निविगलेसु दो जोगा ॥१६॥**

वणपदवाच्यात्मविषयकशाब्दबोधस्य मननपदवाच्यशास्त्रादिबोधितव्यतिरेकिलिङ्गकात्मपक्षकेतरभेदानुमितेः श्रवणादिमूलकसंस्काराधीनतत्समानविषयकध्यानोपहितेच्छाया निदिध्यासनपदवाच्याया ध्यानस्य वा सत्त्वेऽपि न मोक्षोत्पत्तिः, द्वारं विना द्वारिणः कार्यानर्जकत्वात्, नच श्रवणादिसत्त्वेऽप्यात्मसाक्षात्कार एव कथमिदानीं नोत्पद्यत इति वाच्यम्, तस्य चिरकालीनध्यानपरम्परासाध्यत्वात्, तदुक्तं "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥१॥" इति, ध्यानाभ्यासरसः पौनः पुन्येन स्मरणेच्छा, ध्यानं वा, त्रिधा प्रज्ञां श्रवणमनननिदिध्यासनरूपत्रिविधज्ञानं, प्रकल्पयन् सम्पादयन्, उत्तमं योगमात्मसाक्षात्काररूपं लभत इत्यलं पल्लवितेन। कारणनिवृत्तौ मिथ्याज्ञानरूपकारणनिवृत्तौ,कार्यं धर्माधर्मलक्षणं कार्यं, तत्त्वज्ञानस्य मोक्षं प्रति हेतुत्वं न्यायप्रक्रिययोपदर्श्यागमरीत्योपदर्शयति—

आम्नायसङ्क्षेपस्त्वशरीरं वावसन्तमित्यादिरात्मज्ञानस्य देहेन्द्रियाद्युपाधिविगमे संसारनिवृत्तिं दर्शयति, "तदप्रामाण्यं प्रपञ्चमिथ्यात्वसिद्धान्तभेदतत्त्वोपदेशेष्वनृतव्याघातपुनरुक्तदोषेभ्यः" प्रपञ्चमिथ्याश्रुतीनां प्रत्यक्षादिप्रमाणान्तरविरोधादनृतत्वं, नानासिद्धान्तप्रतिपादिनीनां श्रुतीनां परस्परव्याघातः, एकस्मिन्नेव तत्त्वे पुनःपुनरुपदिश्यमाने पौनरुक्त्यम्, एभिर्हेतुभिर्नाम्नायस्य प्रामाण्यमित्येतत्सूत्रार्थ इति चेत्,

आम्नायेत्यादिना, अशरीरं वावसन्तमित्यादिरिति, अत्रादिपदेन प्रियाप्रिये न स्पृशतः इत्यस्योपग्रहः, तस्य चायमर्थः वावेति सम्बोधनम्,सन्तमात्मानम्,तथाच तत्त्वज्ञानादिना शरीररहितमात्मानं प्रियाप्रिये सुखदुःखे न स्पृशतः न सम्बध्नीत इत्यर्थः। आचार्यास्तु वावसन्तमिति यङ्लुकि सिद्धम्, छान्दसत्वान्नकारागमश्च, तथा च शरीररहितं सत् अतिशयेन वसन्तम् उत्तरावधिरा-

क्षया षण्णां कायानामेककद्विकादिसंयोगतो भङ्गप्ररूपणा घटते। असंज्ञिनस्तु सर्वानपि कायान्प्रति सर्वदैवाविशिष्टपरिणामा इति तेषा-मेक एव सदा षट्कायवधभङ्ग इति कायस्थानेऽप्येककः स्थाप्यते। तथाऽपर्याप्तके संज्ञिनि त्रय एव योगाः कार्मणौदारिकमिश्रवैक्रियमिश्ररूपाः सम्भवन्ति, न शेषाः, ततोऽपर्याप्तसंज्ञिपञ्चेन्द्रियबन्धहेतुभङ्गचिन्तायां योगस्थाने त्रिकः स्थापनीयः। तथा त्रयोदशानामपि जीवस्थानानामिन्द्रियसंख्या सुगमा सुप्रसिद्धत्वात्, तथाहि—पञ्चेन्द्रियाणां पञ्च, चतुरिन्द्रियाणां चत्वारि, त्रीन्द्रियाणां त्रीणि, द्वीन्द्रियाणां द्वे, एकेन्द्रियाणामेकं, अतस्तत्तज्जीवगतबन्धहेतुभङ्गचिन्तायामिन्द्रियासंयमस्थाने तथा तथा संख्या स्थापनीया, तथाऽसंज्ञिविकलेन्द्रियाणां पर्याप्तानामपर्याप्तानां वा द्वौ द्वौ योगौ, तत्रापर्याप्तानां कार्मणौदारिकमिश्ररूपौ, पर्याप्तानामौदारिकासत्यामृषाभाषारूपौ, ततस्तेषां बन्धहेतुभङ्गचिन्तायां योगस्थाने द्विकः स्थापनीयः॥१६॥

**एवं च अपज्जाणं बायरसुहुमाण पज्जयाण पुणो। तिण्णेक्ककायजोगा सण्णि अपज्जे गुणा तिन्नि॥१७॥**

(स्वो०)—'एवं चापर्याप्तानां बादरसूक्ष्माणां पर्याप्तानां पुनः त्रयः एकः काययोगः संज्ञिनि अपर्याप्ते गुणास्त्रय' इति पदानि। पदार्थस्तु—यथाऽसंज्ञिविकलानां तथा बादरसूक्ष्मैकेन्द्रियाणामप्यपर्याप्तकानां द्वौ योगौ कार्मणौदारिकमिश्रौ, पर्याप्तानां पुनर्बादराणां त्रयः काययोगा औदारिकवैक्रियवैक्रियमिश्राः, सूक्ष्माणां पुनरेक औदारिककाययोगः, संज्ञिन्यपर्याप्तके गुणास्त्रयः मिथ्यादृष्टिसास्वादनाविरताख्याः, चकारकरणात् सूक्ष्मापर्याप्तकवर्जितेषु शेषेषु बादरविकलासंज्ञिष्वपर्याप्तकेष्वपि द्वितीयः सास्वादनगुणो भवति, तत्र च जघन्याः पञ्चदश हेतवो भवन्ति, मिथ्यात्वाभावादिति, तत्र कार्मणौदारिकमिश्रावेव द्वौ काययोगौ भवतः, यतोऽसौ करणापर्याप्तकेषु भवति न पर्याप्तकेष्विति गाथार्थः॥१७॥

हितकर्मसामान्यानुष्ठानेऽविशेषेण तात्पर्यमिति तत्र कस्यापि न विरोध इत्याह वेदविहितेति, उक्तयुक्त्याऽप्रामाण्यपरिहारेऽपि प्रामाण्यमागमस्य कुत इत्यत आह—प्रामाण्यं त्विति। द्वाषष्टितमश्लोकावतरणिकामाह अत्रेत्यादिना, नैयायिकेन यदेकान्तस्थैर्यं बौद्धेन च यदेकान्तक्षणिकत्वमभ्युपगतं तत्र तयोर्विरोधप्रदर्शकत्वेनापरिशुद्धमेकान्तत्वांशं निरस्य निमित्तभेदेनाविरोधप्रदर्शकत्वेन परिशुद्धमनेकान्तत्वांशमिति प्रमाणपुरस्सरं तद्व्यवस्थापनार्थमाह ग्रन्थकारः—

भिन्नक्षणेष्वपि यदि क्षणता प्रकल्प्या, क्लृप्तेषु साऽस्त्विति जगत्क्षणिकत्वसिद्धिः ॥
तद्द्रव्यता तु विजहाति कदापि नो त–त्सन्तानतामिति तवायमपक्षपातः ॥ ६२ ॥

भिन्नक्षणेष्वपीति मूलश्लोकः स्पष्टार्थः, अन्वयमात्रमुपदर्श्यते, यदि क्षणता भिन्नक्षणेष्वपि प्रकल्प्या, तदा सा क्षणता क्लृप्तेषु पदार्थेष्विति शेषः, अस्त्विति हेतोर्जगत्क्षणिकत्वसिद्धिः, तु पुनः, तद्द्रव्यता तत्सन्तानतां कदापि नो विजहातीति हे भगवन्निति शेषः, तवायमपक्षपात इति।

यो हि दीधितिकारस्तार्किकमूर्धाभिषिक्तंमन्यः क्लृप्तपदार्थातिरिक्तं क्षणिकं क्षणं कल्पयति, तेनातिरिक्तेष्वनन्तक्षणेषु क्षणत्वमतिरिक्तमवश्यं कल्पनीयम्, तद्वरं धर्मीति न्यायात् क्लृप्तेषु पदार्थेष्वेव तत्त्वमभ्युपगम्यताम्, एवं जगतः क्षणिकत्वमपि स्याद्वादेऽप्रतिषिद्धमिति सिद्धम्, विरोधस्य पर्यायत्वद्रव्यत्वाभ्यां तत्पर्यायत्वतद्द्रव्यत्वाभ्यां वा परिहारात्, नो चेत्, क्षणेष्वपि प्रतिस्वं क्षणिकत्वं घटिकात्वमुहूर्त्तत्वदिनत्वादिना चाक्षणिकत्वमिति कथं घटेत, तद्द्रव्यता तु तत्सन्तानतां नो कदापि जहाति, अहमिति प्रतीतिसिद्धस्य तदा-

त्रीणि शतानि विंशत्यधिकानि ३२०, त एव चतुर्दशानन्तानुबन्धिसहिता एते पञ्चदश हेतवः। एत एव पञ्चदश भययुक्ताः पोडश हेतवः भङ्गास्तावन्त एव ३२०, एवं जुगुप्साप्रक्षेपेऽपि ३२०, उभयप्रक्षेपात् सप्तदशात्रापि विकल्पाः तावन्त एव ३२०, सर्वेऽप्येकत्र द्वादश शतान्यशीत्यधिकानि १२८०, एते सास्वादनस्य। मिथ्यादृष्टियन्त्रं १–१–५–२–३–४–५ त एव पूर्वोक्ताः पञ्चदश मिथ्या-

१–६–१–२–१–४–१

त्वयुक्ताः पोडश भवन्ति, सर्वाङ्कवधः पट्शतानि ६००, एते पोडश हेतवः, त एव पोडश भयप्रक्षेपात् सप्तदश भवन्ति, भेदास्तावन्त एव ६००, एवं जुगुप्साप्रक्षेपेऽपि ६००, त एव पोडशोभयप्रक्षेपादष्टादश भवन्ति, भेदास्तावन्त एव ६००, सर्वेऽप्येकत्र चतुर्विंशतिशतानि २४००, त्रिगुणाश्रिताः चत्वारिंशदधिकानि चतुष्पञ्चाशच्छतानि ५४४० एते संज्ञ्यपर्याप्तकस्य। असंज्ञ्यपर्याप्तकस्य यंत्रं १–५–२–३–४–२

६–१–२–१–४–१

अङ्कानां परस्परघाते शतद्वयं चत्वारिंशदधिकं २४०, एते पञ्चदश हेतवो भयप्रक्षेपात्पोडश भवन्ति भङ्गास्तावन्त एव २४०, त एव जुगुप्साप्रक्षेपाच्च पोडश भवन्ति भेदास्तावन्त एव २४०, उभयप्रक्षेपात्सप्तदश भवन्ति, भेदास्तावन्त एव २४०, एते सास्वादनगुण-भङ्गाः ९६०। मिथ्यादृष्टियन्त्रं १–१–५–२–३–४–३ मिथ्यात्वयोगादेते पोडश हेतवः, अङ्कानां परस्परघातात्पष्ट्यधिका त्रिशती

१–६–१–२–१–४–१

३६०, एते पोडश हेतवः भयप्रक्षेपात् सप्तदश भवन्ति, भङ्गास्तावन्त एव ३६०, जुगुप्साप्रक्षेपेऽपि सप्तदशहेतवः, भङ्गास्तावन्त एव ३६०, उभयप्रक्षेपेऽष्टादश हेतवः भङ्गास्तावन्त एव ३६०, एवं गुणद्वये सर्वसङ्ख्या चतुर्विंशतिशतानि २४००, एते एवापर्याप्तासंज्ञिनि।

गमपक्षे घटादीनामप्यनादिनिधनत्वं स्यात्, उभयाऽवृत्तित्वस्य निवेशे चाऽऽत्मत्वघटत्वादीनां तथात्वाभावादेकात्मव्यक्तिर्यदि कालत्रयेऽपि वर्त्तेत तदैवोक्तलक्षणं तत्र सङ्गच्छेत, नान्यथा, एकघटव्यक्तिस्तु न कालत्रये वर्त्तते इति नोक्तलक्षणस्य तत्रातिव्याप्तिरित्याशयेनोभयावृत्तित्वं धर्मस्य विशेषणमुपात्तम्। स च सन्तन्यमान इत्याद्युदयनाचार्येणैकपक्षावलम्बनेन यदुक्तं तदपाकरणे हेतुमाह—

क्षणाभेदेनैव क्षणिकतायाः सर्वत्र साधितत्वात् कालत्वव्यापकत्वतदभावयो रूपभेदेन सर्वत्र सम्भवादेव सर्वत्र स्याद्वादसाम्राज्यात्। कालत्वव्यापकतावच्छेदकतदनवच्छेदकधर्माभ्यामपि तदप्रतिहतमेव, नहि भावाभावयोः समावेशमेव सर्वत्र स्याद्वादोऽनुशास्ति, किन्तु व्यापकाव्यापकादिपदार्थतयोरपीति। हे भगवन्नयं तवापक्षपातःपक्षपातरहितः स्याद्वादः, तदुक्तं पारमर्षे—अणादिअं परिन्नाय इत्यादि।

क्षणाऽभेदेनैवेत्यादिना, क्षणवृत्तित्वेन क्षणिकत्वकल्पनापेक्षया लाघवेन क्षणरूपत्वेन तत्कल्पनायाः प्रमाणाऽर्हत्वेन यद्वाऽतिरिक्तान् क्षणान् अकल्प्य तत्रातिरिक्तक्षणत्वधर्मकल्पनापेक्षया धर्मीति न्यायात् क्लृप्तेषु पदार्थेष्वेव क्षणत्वकल्पनायाः प्रमाणार्हत्वेन वस्तुमात्रस्य क्षणिकत्वं, न च तन्मात्रमेव, किन्तु पूर्वापरकालानुगततयाप्यनुभूयमानत्वात् स्थिरत्वमपि, तथा चैकस्यात्मनः पूर्वापरपर्यायानुस्यूतेन तदात्मद्रव्यत्वेन तत्सन्तानत्वेन वा कालत्वव्यापकत्वस्य तत्तत्क्षणभाव्यात्मपर्यायत्वेन तदभावस्य च सद्भावेनोभयपक्षस्यैव प्रमाणार्हत्वेन तदात्मकस्याद्वादसाम्राज्यमेवेति भावः॥ ऊर्ध्वतासामान्यरूपं तदात्मत्वं यथा कालत्वव्यापकतावच्छेदकं तथा तत्तत्पर्यायविशिष्टतदात्मत्वं कालत्वव्यापकतानवच्छेदकमिति ताभ्यामपि स्याद्वादसाम्राज्यं निष्कलङ्कमेवेत्याह कालत्वव्यापकतावच्छेदकेति, ननु कालत्वव्यापकतावच्छेदकधर्मवत्त्वकालत्वव्यापकतानवच्छेदकधर्मवत्त्वादीनां भावाभावरूपत्वाभावान्नोक्तं

(मलय०)—सम्प्रत्येकेन्द्रियाणां योगसम्भवमाह—एवं च एवमेव यथाऽसंज्ञिविकलेन्द्रियाणां तथेत्यर्थः, बादरसूक्ष्माणामेकेन्द्रियाणामपर्याप्तानां द्वौ योगौ भवतः, तौ च कार्मणौदारिकमिश्ररूपौ वेदितव्यौ। पर्याप्तानां बादरसूक्ष्मैकेन्द्रियाणां पुनर्यथाक्रमं त्र्येककाययोगाः, औदारिकवैक्रियवैक्रियमिश्ररूपास्त्रयो योगाः पर्याप्तबादरैकेन्द्रियाणां, औदारिकरूप एकः काययोगः पर्याप्तसूक्ष्मैकेन्द्रियाणामिति भावः। ततो बन्धहेतुभङ्गचिन्तायां तत्तज्जीवस्थानापेक्षया तथा तथा योगस्थानेऽङ्कस्थापना कर्त्तव्या। तथा गुणस्थानकचिन्तायां संज्ञिन्यपर्याप्ते गुणा गुणस्थानकानि त्रीणि मिथ्यादृष्टिसासादनाविरतिसम्यग्दृष्टिलक्षणानि सम्भवन्ति। एवं चेत्यत्र चशब्दस्यानुक्तस्याप्यर्थस्य संसूचनाद् बादरैकेन्द्रियविकलेन्द्रियासंज्ञिपञ्चेन्द्रियेष्वपर्याप्तेषु द्वे द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके, सूक्ष्मैकेन्द्रियेषु पर्याप्तापर्याप्तेषु बादरैकेन्द्रियविकलेन्द्रियासंज्ञिपञ्चेन्द्रियेषु पर्याप्तेषु मिथ्यादृष्टिरूपमेकं गुणस्थानकमित्यवगन्तव्यम्। इह यदा सासादनगुणस्थानं तदा जघन्यतः पञ्चदशैव बन्धहेतवो, मिथ्यात्वाभावात्। योगचिन्तायां तु द्वावेव कार्मणौदारिकमिश्ररूपौ योगौ, यतः—सासादनभावः संज्ञिशेषाणां जीवानामपर्याप्तावस्थायामेव, न शेषकालं, अपर्याप्तावस्थायां चापर्याप्तसंज्ञिव्यतिरिक्तानां शेषाणां द्वावेव पूर्वोक्तौ योगौ, अपर्याप्ते तु संज्ञिनि कार्मणौदारिकमिश्रवैक्रियमिश्ररूपास्त्रयो योगाः प्रागेवोक्ताः। आह—ननु सासादनभावेऽपि शेषपर्याप्तिभिरपर्याप्तानां शरीरपर्याप्त्या पर्याप्तानामौदारिककाययोगो लभ्यते, इति बादरैकेन्द्रियविकलेन्द्रियासंज्ञिपञ्चेन्द्रियाणां सासादनगुणस्थानके त्रयो योगाः किं न प्रोच्यन्ते ? तदयुक्तं, शरीरपर्याप्तिसमाप्तिवेलायां सासादनत्वायोगात्, सासादनत्वं हि षडावलिकामात्रं, शरीरपर्याप्त्या तु पर्याप्ता भवन्त्यन्तर्मुहूर्त्तेन, ततः शरीरपर्याप्तेरर्वागपि सासादनभावोऽपगच्छतीति सासादनभावे द्वावेव यथोक्तौ योगौ, मिथ्यादृष्टिगुणस्थानके पुनर्यावन्नाद्यापि शरीरपर्याप्तिः समर्थिता भवति, तावद् द्वावेव कार्मणौदारिकमिश्ररूपौ योगौ, शरीरपर्याप्तेरूर्ध्वं त्वौदारिक-

कायव्यूहस्थलेऽगतेरिति, अथ तत्तद्विशेषणभेदेन तत्तद्विशिष्टभेदो वस्तुगत्या विशेषणस्यैव, अन्यथा शिखाविनाशे तद्विशिष्टपुरुषस्यापि विनाशप्रसङ्गः। तथाच नरशूकरादिशरीरभेदेन तद्विशिष्टतत्त्वज्ञानिनो भेदेऽपि वस्तुगत्यैकत्वमेवेति समानकालीनोभयव्यक्त्यवृत्तित्वमेव तदात्मत्वस्येति तदादाय नोक्ताव्याप्तिदोष इत्याशयेनाशङ्कते नैयायिकः—तत्र नरशूकरादिशरीरोपहितभेदेऽपीति, विशिष्टस्य विशेषणविशेष्याभ्यामतिरिक्तत्वमेव, विशेषणविशेष्ययोः पृथग्ज्ञानसत्त्वेऽपि विशिष्टानुव्यवसायानुदयात्, विशिष्टप्रतीतिविषयत्वस्य च विशेषणविशेष्योभयोः कल्पनापेक्षया विशिष्ट एव कल्पनाया लघुत्वात्, अन्यथा विशेषाभावकूटविषयत्वेन सामान्याभावप्रतीतेस्तत्तदवयवसमुदायविषयत्वेन चावयविप्रतीतेरपि चरितार्थत्वं स्यादिति सामान्याभावघटाद्यवयव्यादिरपि न सिद्ध्येत्, एतेन विशिष्टप्रतीतेः प्रत्येकविशेषणविशेष्यनिरूपिताधिकरणत्वद्वयावगाहितयैवोपपत्तेर्नातिरिक्तं विशिष्टमित्यपि निरस्तम्, धूमवानिति प्रतीतिरपि सिद्धतत्तद्धूमत्वावच्छिन्नाऽधिकरणत्वविषयिकैवेति कल्पनाया अवकाशेन धूमत्वावच्छिन्नसामान्याधिकरणत्वस्याप्यसिद्धिप्रसङ्गात्, तदेवं विशिष्टं सर्वथा नातिरिक्तं, दण्डिनमानयेति प्रतीतौ दण्डपुरुषसम्बन्धमृतेऽन्यस्याप्रतिभासमानत्वात्, दण्डिनमानयेत्युक्ते च दण्डपुरुषसम्बन्धानयनाभावप्रसङ्गाच्च, नापि सर्वथाऽनतिरिक्तं, प्रत्येकं दण्डिव्यवहारप्रसङ्गात्, समुदायिनः समुदायानतिरिक्तत्वात्, अतिरिक्तत्वे वा तद्विशिष्टस्याप्यतिरिक्तत्वं स्यादित्युभयपक्ष एव साम्राज्यस्थाननिवेशीत्यभ्युपगन्तव्यं, तथाच तत्त्वज्ञानिनो नरशूकरादिविशिष्टतदात्मत्वावच्छेदेन भेदः निर्विशेषिततदात्मव्यक्तित्वावच्छेदेन चाभेद इत्यायातस्याद्वाद इत्याशयेन समाधत्ते—

आयातं तर्हि भेदाभेदस्याद्वादेन, न च तदात्मत्वं शुद्धा तद्व्यक्तिस्तत्तोपहितमात्मत्वं वेत्यत्रापि विनिगमोऽस्ति, किञ्च स्वरूपतो भासमानायास्तस्या अपि जातित्वमेव युक्तम्, व्यक्तेरभेदो बाधक इति चेत्, अत्र

भयप्रक्षेपात्ससदश हेतवः१४४, जुगुप्साप्रक्षेपेणापि सप्तदश १४४, उभयप्रक्षेपादष्टादश हेतवः १४४, उभयगुणहेतवः सर्वेऽपि पष्ठय-
धिकानि नवशतानि ९६० एते द्वीन्द्रियापर्याप्तकस्य बन्धहेतवः। द्वीन्द्रियपर्याप्तकस्य यन्त्रं १-१-२-३-४-२-२ / १-६-२-१-४-२-१ परस्पराङ्कवधेन

पण्णवतिः ९६ एते षोडश हेतवः, भयप्रक्षेपात् सप्तदश हेतवः ९६, जुगुप्साप्रक्षेपाच्च ९६, उभयप्रक्षेपादष्टादश हेतवः ९६, सर्वेऽपि
चतुरशीत्यधिकं शतत्रयं ३८४, एते द्वीन्द्रियपर्याप्तकविकल्पाः। बादरापर्याप्तकयन्त्रं १-१-२-३-४-२ / ६-१-२-१-४-१ एतेऽङ्काः परस्परगुणाजाताः

अष्टचत्वारिंशत् ४८, एते पञ्चदश हेतवः, भयप्रक्षेपात्षोडश हेतवः ४८, जुगुप्साप्रक्षेपेऽपि ४८, उभयप्रक्षेपात्सप्तदश हेतवः ४८, एते
बादरापर्याप्तकसास्वादनस्य। मिथ्यादृष्टिबादरस्य यन्त्रं १-१-१-२-३-४-३ / १-६-१-२-१-४-१ एतेऽङ्काः परस्परगुणिताः द्वासप्ततिर्भवन्ति ७२, एते

षोडश हेतवः, भयप्रक्षेपात् सप्तदश हेतवः ७२, जुगुप्साप्रक्षेपाच्च ७२, उभयप्रक्षेपादष्टादश हेतवः ७२, उभयगुणहेतुसर्वसङ्ख्या
चत्वारिशतान्यशीत्यधिकानि ४८०, एते बादरापर्याप्तकहेतवः। बादरपर्याप्तकयन्त्रं १-१-१-२-३-४-३ / १-६-१-२-१-४-१ एतेऽङ्काः परस्परगुणिताः

द्वासप्ततिर्भवन्ति ७२, एते षोडश हेतवः, भयप्रक्षेपात् सप्तदश भवन्ति ७२, जुगुप्साप्रक्षेपेऽपि ७२, उभयप्रक्षेपादष्टादश हेतवः
७२ भवन्ति, सर्वेऽष्टाशीतं शतद्वयं २८८, एते पर्याप्तबादरहेतवः। सूक्ष्मापर्याप्तकस्य यन्त्रं १-१-१-२-३-४-३ / १-६-१-२-१-४-१ एतेषा-

पेक्षयाऽगृहीतभेदमालयविज्ञानमनादिनिधनत्वव्यवहारप्रयोजकम्, आश्रयस्याऽनिवेशेन लाघवात्, तथाचालयविज्ञानानां भेदे सत्यपि तदग्रहादनादिनिधनत्वोपपत्तावलमात्मनोऽतिरिक्तस्य कल्पनया इत्याह अपि च माभूत्तदात्मत्वमिति । शिष्याचार्यधियां कुतो नैकसन्तानत्वं सादृश्यादेर्नियामकस्य निराकृतत्वात्, वैजात्यादिति चेत्, न, सन्तानयोर्वैजात्ये मानाभावादिति यदुक्तं प्राक् तन्निरासायाह—

अस्तु वा क्रमिकाक्रमिकानन्तगुणपर्यायजनकतावच्छेदकतयाऽऽलयविज्ञानवृत्तिवैजात्यमेव तदात्मत्वम्, अनन्तालये वैजात्ययोः कल्पनागौरवस्य फलमुखत्वेनाऽदोषत्वात् । संस्कारस्य त्वाश्रयोपादेये स्मृतिनियामकत्वकल्पनस्यापि अनुभवस्य स्वजन्यसंस्काराश्रये तन्नियामकत्वपर्यालोचनया गौरवानावहत्वात्, तस्मात् द्रव्यपर्यायोभयात्मके वस्तुनि पर्यायनयव्युत्क्रान्तार्थानां शुद्धत्वसाधने द्रव्यार्थिकनययुक्तयः, द्रव्यार्थिकनयव्युत्क्रान्तानां चार्थानां शुद्धत्वसाधने पर्यायार्थिकनययुक्तयस्तुल्यवदेवोज्जृम्भन्त इति नैकत्र क्वचन पक्षपातो विधेयः, किन्तु स्याद्वादेनोभयोपग्रह इति तत्त्वम् ॥ ६२ ॥

अस्तु वेति,अनन्तालये वैजात्यकल्पनामपेक्ष्यैकालयकल्पनाया एव न्याय्यत्वादिति यस्तत्र हेतुरुक्तस्तन्निरासायाह अनन्तालय इति; संस्कारस्य स्वोपादाने स्मृतिजनकताया एव लाघवेन त्वकुमुचितत्वाच्चेति यदुक्तं तदपाकरणायाह संस्कारस्येति, तन्नियामकत्वेति स्मृतिनियामकत्वेत्यर्थः, उक्तपद्यरहस्यमुपसंहारव्याजेनोपदर्शयति तस्मादिति ॥६२॥ त्रिषष्ठितमश्लोकावतरणिकामाह—

निरस्तोऽनादिनिधनत्वैकान्तः । एतेन द्रव्यैकान्तोऽपि निरस्त इत्याह—

दश, ते सम्प्रति भाव्यन्ते, तत्र प्रथमतो जघन्यपदे चतुर्दशबन्धहेतवः सम्यग्दृष्टेः, ते चामी—षट्कायवधः, पञ्चानामिन्द्रियासंयमानामेकोऽन्यतम इन्द्रियासंयमः, द्वयोर्युगलयोरन्यतरद् युगलं, त्रयाणां वेदानामन्यतमो वेदः, अप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनसंज्ञानां क्रोधादीनां कषायाणामन्यतमत्क्रोधादित्रिकं, योगाश्चेह सम्भविनः पञ्च, "सविउव्वेणं सन्निस्स सम्ममिच्छस्स वा पंच" इति वचनात्, ततः पञ्चानां योगानामन्यतमो योगः। अङ्कस्थापनायां कायस्थान एकः, पर्याप्तसंज्ञिव्यतिरिक्तानां शेषाणां सदैव षट्कायवधरूपस्यैकस्य भङ्गस्य भावात्। वेदस्थाने त्रयः स्थाप्यन्ते, योगस्थाने पञ्च, इन्द्रियासंयमस्थाने पञ्च, युगलस्थाने द्वे, कषायस्थाने चत्वारः। स्थापना—४—२—५—५—३—१। अमीषां चांकानां गुणनमेवं—वेदत्रयेण योगा गुण्यन्ते, जाताः पञ्चदश, तेभ्यः "चत्तारि अविरए चयं" इत्यादिवचनप्रमाण्याच्चत्वारि रूपाण्यपनीयन्ते, जाता एकादश, तैरिन्द्रियासंयमपञ्चकं गुण्यते, जाता पञ्चपञ्चाशत् ५५, तया युगलद्विकं गुण्यते, जातं दशोत्तरं शतं ११०, तेन कषायचतुष्टयगुणनाज्जातानि चत्वारिंशदधिकानि चत्वारि शतानि ४४० एतावन्तः संज्ञिनोऽपर्याप्तस्य सम्यग्दृष्टेश्चतुर्दशबन्धहेतुभङ्गाः। त एवानन्तरोक्ताश्चतुर्दश भयप्रक्षेपात्पञ्चदश, तत्रापि त एव भङ्गाः ४४०, अथवा जुगुप्साप्रक्षेपात्पञ्चदश, तत्रापि त एव भङ्गाः ४४०, तथा त एवानन्तरोक्ताश्चतुर्दश भयजुगुप्साप्रक्षेपात् षोडश, तत्रापि त एव भङ्गाः ४४०, सर्वसंख्ययाऽविरतसम्यग्दृष्टेः संज्ञिनोऽपर्याप्तस्य बन्धहेतुभङ्गाः सप्तदशशतानि षष्ठ्यधिकानि १७६०। सासादनसम्यग्दृष्टेरपर्याप्तसंज्ञिनो योगाः कार्मणौदारिकमिश्रवैक्रियमिश्ररूपास्त्रयः, जघन्यपदे चास्य बन्धहेतवः पञ्चदशानन्तानुबन्धिप्रक्षेपात्, तत्र वेदत्रिकेण योगास्त्रयो गुण्यन्ते, जाता नव, ततः "सासायणंमि रूवं चय" इत्यादिवचनप्रामाण्यादेकं रूपं तेभ्योऽपनीयते, स्थिताः शेषा अष्टौ, तैरिन्द्रियासंयमपञ्चकं गुण्यते; जाता चत्वारिंशत्, तया युगलद्विकं गुण्यते, जाताऽशीतिः, तया कषायचतुष्टयगुणने जातानि त्रीणि शतानि विंशत्यधिकानि ३२०,

सम्बन्धानिरुक्तेरिति, सिद्धत्वधर्मस्योत्पादेऽपि नात्मधर्मिण उत्पाद इति चेत्, तर्ह्यात्मनस्सिद्धत्वमित्यपि नैव वक्तुं शक्यं स्यात्, यतः षष्ठीसम्बन्धार्थे, सम्बन्धश्च हिमवद्विन्ध्याचलयोरिव सिद्धत्वात्मनोर्धर्मधर्मिणोरेकान्तभेदे न भवत्येवेति तदन्यथानुपपत्त्या कथञ्चिद्भेदविशिष्टोऽभेदोऽभ्युपगन्तव्य इति सिद्धत्वधर्मोत्पादे कथञ्चित्तदभिन्नात्मनोऽप्युत्पादस्सिद्ध इति भावः। उक्तस्वरूपमुक्तेरनुपादेयतामाह—

अभावस्वरूपाया मुक्तेरकाम्यत्वादपुरुषार्थत्वात्, चिदानन्दमयानन्तगुणाविर्भूतिस्वरूपाया एव तस्यास्तत्र तत्र व्यवस्थापितत्वात्, "परिणामिन्यात्मनि सति तत्तद्ध्वनिवाच्यमेतदखिलं स्यात्" इत्यादिना हरिभद्राचार्यैरात्मनः परिणामिकारणतां विना कथमप्यनुपपत्तेः षोडशकादावुद्भावितत्वाच्च,

अभावस्वरूपाया इति, अशेषविशेषगुणोच्छेदरूपत्वेन ध्वंसरूपाया इत्यर्थः। स्यादित्यादिनेति आदिपदात् "अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तुसत्येव" इत्युत्तरार्द्धपरिग्रहः, अत्रत्यं तत्त्वं तट्टीकात एवावसेयम्, विस्तरभीत्या नेह वितन्यते, समवायिकारणत्वादात्मा द्रव्यमेवेति नैयायिकैर्यत्प्रागुक्तं तन्निरसनायाह—

किंच सर्वथा सत आकाशादेरिव सर्वथाऽसतश्च शशविषाणादेरिव कार्यत्वायोगादसत्कार्यवादे समवायिकारणत्वं द्रव्यलक्षणं न सम्भवति, किन्तु व्यक्ताव्यक्तात्मरूपं यत् पौर्वापर्यव्यवस्थितं तत्परिणामिकारणं द्रव्यमिति सदसत्कार्यवाद्युक्तलक्षणमेव ज्यायः, एवमतिरिक्तासमवायिकारणकल्पनप्रयुक्तगौरवाभावात्, एवं चात्मा न द्रव्यमेव, किन्तु पर्यायात्मापि, परिणामिलक्षणेनैवोभयरूपक्रोडीकरणात्।

धिकानि ३६०, त एवानन्तरोक्ताः षोडश भयप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः ३६०, एवं जुगुप्साप्रक्षेपेऽपि ३६०, उभयप्रक्षेपादष्टादश, तत्रापि भङ्गास्त एव ३६०, सर्वसंख्ययाऽसंज्ञिपञ्चेन्द्रियस्य मिथ्यादृष्टेर्बन्धहेतुभङ्गाश्चत्वारिंशदधिकानि चतुर्दशशतानि १४४०। गुणस्थानकद्वयेऽपि सर्वसंख्ययाऽपर्याप्तासंज्ञिपञ्चेन्द्रियस्य बन्धहेतुभङ्गाश्चतुर्विंशतिशतानि २४००। पर्याप्तस्यासंज्ञिपञ्चेन्द्रियस्य जघन्यपदे षोडश बन्धहेतवस्तद्यथा–मिथ्यात्वं, षट्कायवधः, पञ्चानामिन्द्रियासंयमानामन्यतम एकेन्द्रियासंयमः, द्वयोर्युगलयोरन्यतरद्युगलं, अनन्तानुबन्धिक्रोधादीनामन्यतमत्क्रोधादिचतुष्टयं, त्रयाणां वेदानामन्यतमो वेदः, द्वयोरौदारिकासत्यामृषाभाषारूपयोर्योगयोरन्यतरो योगः, अत्र प्राग्वदंकानां गुणने भङ्गाश्चत्वारिंशदधिकं शतद्वयं २४०, त एव षोडश भयप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः २४०, एवं जुगुप्साप्रक्षेपेऽपि २४०, त एव षोडशोभयप्रक्षेपादष्टादश, तत्रापि त एव भङ्गाः २४०, सर्वसंख्यया पर्याप्तासंज्ञिपञ्चेन्द्रियस्य बन्धहेतुभङ्गा नवशतानि षष्ठ्यधिकानि ९६०। तथा चतुरिन्द्रियस्यापर्याप्तस्य सासादनस्य जघन्यपदे पञ्चदश बन्धहेतवस्तद्यथा–षट्कायवधः, चतुर्णामिन्द्रियासंयमानामेकोऽन्यतमोऽसंयमः, द्वयोर्युगलयोरन्यतरद्युगलं, इह संज्ञिपञ्चेन्द्रियव्यतिरिक्ताः शेषाः सर्वेऽपि संसारिणो जीवाः परमार्थतो नपुंसकाः, केवलमसंज्ञिपञ्चेन्द्रियाः स्त्रीपुंलिंगाकारमात्रमधिकृत्य स्त्रीवेदे च प्राप्यन्ते, इति तत्र त्रयो वेदाः परिगृहीताः, चतुरिन्द्रियादीनां पुनर्बाह्यस्त्रीपुंलिङ्गाकारमात्रमपि न विद्यन्ते, तत इह नपुंसकवेद एव द्रष्टव्यः, अनन्तानुबन्धिक्रोधादीनामन्यतमत्क्रोधादिचतुष्टयं, कार्मणौदारिकमिश्रयोर्योगयोरन्यतरो योगः। अङ्कस्थापनायां कायस्थान एकः स्थाप्यते, षट्कायवधरूपस्यैकस्य भङ्गस्य सदैव भावात्। इन्द्रियासंयमस्थाने चत्वारः, युगलस्थाने द्विकः, वेदस्थाने एकः, कषायस्थाने चतुष्कम्, योगस्थाने द्वौ, स्थापना—२–४–१–२–४–१, अमीषां चांकानां गुणनमेवं–चत्वार इन्द्रियासंयमा एकैकस्मिन् युगले

त्म्यसम्बन्धेन द्रव्यं कारणं स्वीकरणीयम्, एवञ्च व्यापकधर्मावच्छिन्नकारणस्य द्रव्यस्य कपालनीलादिरूपेऽभावान्न तत्र नीलादिरूपोत्पत्तिरित्युक्तकारणतावच्छेदकतया द्रव्यत्वसिद्धिरित्याशङ्क्य निरस्यति न च नीलादाविति, निषेधे हेतुमाह—

इत एव कार्यकारणभावात् नाशजनकतावच्छेदकतया वा जन्यसत्त्वस्यापि जातित्वसिद्धौ तेन सह द्रव्यत्वस्य साङ्कर्यात्। न च कालिकविशेषणतासमवायोभयसम्बन्धस्य सत्त्वनिष्ठकार्यतावच्छेदकतावच्छेदकत्वात् न जन्यसत्त्वं जातिः, तदुभयसम्बन्धेन सत्तावत्त्वाभावादेव च न नित्येषु कार्यत्वव्यवहार इति न तदनुपपत्तिमूलस्य कार्याकार्यवृत्तेरित्यादेरादर इति वाच्यम्, तद्वदेव गुणकर्मान्यत्वसमवायोभयसम्बन्धस्य तन्निष्ठकारणतावच्छेदकतावच्छेदकत्वेनोपपत्तौ द्रव्यत्वजात्यसिद्धेः,

इत एवेति, उक्तकार्यकारणभावे सति कारणतावच्छेदकतया यथा द्रव्यत्वजातिसिद्धिस्तथा कार्यतावच्छेदकतया जन्यसत्त्वजातिरपि सिद्ध्येत्, एवं प्रतियोगितासम्बन्धेन नाशं प्रति तादात्म्यसम्बन्धेन जन्यसत्त्वेन कारणत्वस्य ध्वंसस्य ध्वंसापत्तिवारणाय स्वीकरणीतया तदवच्छेदकतयाऽपि जन्यसत्त्वजातिः सिद्ध्येत्, तथाच तया सह साङ्कर्यान्न द्रव्यत्वं जातिरिति भावः। ननु जन्यसत्त्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन न द्रव्यत्वेन कारणत्वं,किन्तु समवायकालिकोभयसम्बन्धेन सत्त्वावच्छिन्नं यत्समवायेन तत्प्रत्येव तादात्म्यसम्बन्धेन द्रव्यस्य कारणत्वम् ,एवं प्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नं प्रत्यपि समवायकालिकोभयसम्बन्धेन सत्त्वविशिष्टं यत्तत्तादात्म्यसम्बन्धेन कारणम्, उक्तोभयसम्बन्धेन सत्त्वं कार्यमात्रवृत्त्येवेति कार्याकार्यवृत्तेर्न कार्यतावच्छेदकत्वमित्यस्यापि नावकाशः,तथाच नोक्तकार्यतावच्छेदकतया कारणतावच्छेदकतया च जन्यसत्त्वसिद्धिः,यया साङ्कर्यं स्यादित्याशङ्कते-न च कालिकवि-

चत्वारिंशत् ४८, एते त्रीन्द्रियस्यापर्याप्तस्य सासादनस्य पञ्चदश बन्धहेतुभङ्गाः, त एव पञ्चदश भयप्रक्षेपात् षोडश, तत्रापि त एव भङ्गाः ४८, एवं जुगुप्साप्रक्षेपेऽपि ४८, भयजुगुप्साप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः ४८, सर्वेऽपि त्रीन्द्रियापर्याप्तसासादनस्य बन्धहेतुभङ्गा एकत्र मीलिता द्विनवत्यधिकं शतं १९२। मिथ्यादृष्टेरपर्याप्तत्रीन्द्रियस्य जघन्यपदे षोडश बन्धहेतवो मिथ्यात्वप्रक्षेपात्, योगाश्चात्र कार्मणौदारिकमिश्रौदारिकरूपास्त्रयः सम्भविनः, ततः प्राग्वदङ्कगुणने जाता द्विसप्ततिः ७२, एते मिथ्यादृष्टेस्त्रीन्द्रियापर्याप्तस्य षोडश बन्धहेतुभङ्गाः, त एव षोडश भयप्रक्षेपात्सप्तदश, अत्रापि त एव भङ्गाः ७२, अथवा जुगुप्साप्रक्षेपे सप्तदश, तत्रापि त एव भङ्गाः ७२, उभयप्रक्षेपादष्टादश, तत्रापि त एव भङ्गाः ७२, सर्वेऽप्येकत्र मीलिता द्वे शतेऽष्टाशीत्यधिके २८८। गुणस्थानकद्वयेऽप्यपर्याप्तत्रीन्द्रियस्य सर्वसंख्यया बन्धहेतुभङ्गाश्चत्वारिंशतान्यशीत्यधिकानि ४८०। पर्याप्तत्रीन्द्रियस्य जघन्यपदे षोडश बन्धहेतवः, ते च पर्याप्तचतुरिन्द्रियस्यैव वेदितव्याः, नवरं त्रयाणामिन्द्रियासंयमानामेकोऽन्यतम इन्द्रियासंयम इति वक्तव्यं शेषं तथैव; अत्र भङ्गा अष्टाचत्वारिंशत् ४८, त एव षोडश भयप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः ४८, एवं जुगुप्साप्रक्षेपेऽपि ४८, उभयप्रक्षेपादष्टादश, तत्रापि त एव भङ्गाः ४८, सर्वेऽपि पर्याप्तत्रीन्द्रियबन्धहेतुभङ्गा द्विनवत्यधिकं शतं १९२। सर्वसंख्यया त्रीन्द्रियाणां बन्धहेतुभङ्गाः षट्शतानि द्विसप्तत्यधिकानि ६७२। तथा द्वीन्द्रियस्यापर्याप्तस्य सासादनस्य जघन्यपदे बन्धहेतवः पञ्चदश, ते च प्राग्वत्, नवरमत्र द्वयोरिन्द्रियासंयमयोरेकोऽन्यतर इन्द्रियासंयम इति वक्तव्यं, ततः प्राग्वदङ्कानां गुणने जाता द्वात्रिंशत् ३२, एते द्वीन्द्रियस्यापर्याप्तस्य सासादनस्य पञ्चदश बन्धहेतुभङ्गाः, त एव पञ्चदश भयप्रक्षेपात्षोडश, तत्रापि त एव भङ्गाः ३२, अथवा जुगुप्साप्रक्षेपात् षोडश, तत्रापि भङ्गास्त एव ३२, उभयप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः ३२, सर्वसङ्कलनेन द्वीन्द्रियापर्याप्तसासादनस्य बन्धहेतुभङ्गा

नाशोद्भवस्थितिभिरेवेति मूलम् ,अदीदृश इति क्रियापदम् ; दृष्टवानसीत्यर्थः,भूतकालीनदर्शनक्रियानुकूलकृतिमानिति यावत्, तत्र दर्शने अयथार्थभावनिवृत्त्यर्थमाह सम्यगिति, दर्शनक्रियायाः कर्त्तारमाह त्वमिति, कर्म च द्रव्यत्वबुद्धिरितीति, कैर्द्रव्यत्वबुद्धिरित्याकाङ्क्षायामाह नाशोद्भवस्थितिभिरेव समाहृताभिरिति, तत्र समाहृताभिरित्यनेन नाशादीनि प्रत्येकं न द्रव्यत्वबुद्धिकारणं, किन्तु त्रीण्यपि समुदितान्येव, द्रव्यत्वबुद्धिकारणत्वं शक्तिलक्षणं त्रिषु समुदायत्वेन रूपेण पर्याप्तं,न तु तत्तद्धर्मरूपेण प्रत्येकपर्याप्तमिति सूचितम् , एवकारेण नैतद्भिन्नेन परकल्पितैकान्तभिन्नद्रव्यत्वजातिद्रव्येतरव्यावृत्त्यादिना द्रव्यत्वबुद्धिरिति सूचितम् ; नाशोद्भवस्थितिलक्षणप्रयोजनं किमित्याशङ्कायामुत्तरार्द्धमाह एकान्तेति, आत्मादिवस्तुनि तद्विधानं द्रव्यत्वव्यवहारनियमनं,विवेचकलक्षणार्थः-विवेचकस्येतरभेदानुमापकस्य लक्षणस्यार्थः प्रयोजनं,खलु निश्चयेन,द्वितीयश्च लक्षणस्य प्रयोजनमितरभेदानुमितिः,अत एव लक्षणस्य विवेचकेति स्वरूपोपरञ्जकं विशेषणं सार्थकम् ,तथा चात्र आत्मादिद्रव्यं द्रव्येतरभिन्नं तादृशलक्षणवत्त्वादित्यनुमानं पर्यवस्यति, तत्र पराभ्युपगमेनाश्रयासिद्धिदोषो माभूदित्यत आत्मादिवस्तुनीत्यस्य विशेषणमाह एकान्तबुद्ध्यधिगते इति; अस्य च स्वरूपोपरञ्जकविशेषणत्वान्नानुमाने उद्देश्यतावच्छेदककोटौ प्रवेश इति सङ्क्षेपार्थः ।

लक्षणवाक्यस्य हि द्वयं प्रयोजनं नियतव्यवहारसिद्धिरितरभेदज्ञापनं च, तदिह—सद् द्रव्यलक्षणम्, उत्पादव्ययध्रौव्ययुक्तं सदिति सूत्राभ्यामुत्पादव्ययध्रौव्यसमाहारस्य द्रव्यलक्षणत्वसिद्धौ बौद्धदृष्ट्या क्षणिकसन्तन्यमानज्ञानस्वरूपतया नैयायिकादिदृष्ट्या चानादिनिधनज्ञानाश्रयद्रव्यतया प्रसिद्धे आत्मनि तेन द्रव्यव्यवहारविषयत्वं नियम्यते, स्वरूपासिद्धेरनुभवसिद्धप्रकारभेदेन निरासात्,

एव भङ्गाः २४, यदि वा जुगुप्साप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः २४, उभयप्रक्षेपादष्टादश, तत्रापि त एव भङ्गाः २४, सर्वेऽपि समुदिताः षण्णवतिः ९६। गुणस्थानकद्वयेऽपि बादरैकेन्द्रियस्यापर्याप्तस्य सर्वसंख्यया बन्धहेतुभङ्गाः षष्ट्युत्तरं शतं १६०। पर्याप्तबादरैकेन्द्रियस्य जघन्यपदे षोडश बन्धहेतवः, ते चानन्तरोक्ता एव द्रष्टव्याः, नवरमिह योग औदारिकवैक्रियवैक्रियमिश्राणामन्यतम एको वक्तव्यः, ततः प्राग्वदङ्कताडने जाता चतुर्विंशतिः २४, एते पर्याप्तबादरैकेन्द्रियस्य षोडश बन्धहेतुभङ्गाः, त एव षोडश भयप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः २४, यदि वा जुगुप्साप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः २४, उभयप्रक्षेपादष्टादश, तत्रापि त एव भङ्गाः २४, सर्वे समुदिताः षण्णवतिः ९६। सर्वसंख्यया बादरैकेन्द्रियाणां बन्धहेतुभङ्गा द्वे शते षट्पञ्चाशदधिके २५६; तथा सूक्ष्मैकेन्द्रियस्यापर्याप्तस्य जघन्यपदे षोडशबन्धहेतवः, ते च बादरैकेन्द्रियस्येव वेदितव्याः, तत्र भङ्गाश्चतुर्विंशतिः २४, त एव षोडश भयप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः २४, एवं जुगुप्साप्रक्षेपेऽपि २४, उभयप्रक्षेपेणाष्टादश, तत्रापि त एव भङ्गाः २४, सर्वेऽप्येकत्र समुदिताः षण्णवतिः ९६। पर्याप्तसूक्ष्मैकेन्द्रियस्य जघन्यपदे षोडश बन्धहेतवः, ते चानन्तरोक्ता एव, केवलमत्र योग औदारिकरूप एव वक्तव्यः, अत्र भङ्गा अष्टौ ८, त एव षोडश, भयप्रक्षेपात्सप्तदश, तत्रापि त एवाष्टौ भङ्गाः ८, यदि वा जुगुप्साप्रक्षेपात्सप्तदश, तत्रापि त एव भङ्गाः ८, भयजुगुप्साप्रक्षेपादष्टादश, तत्रापि त एवाष्टौ भङ्गाः, सर्वेऽपि मिलिता द्वात्रिंशत् ३२। सर्वसंख्यया सूक्ष्मैकेन्द्रियाणां बन्धहेतुभङ्गा अष्टाविंशत्यधिकं शतं १२८ ॥१८॥

जीवगुणस्थानेषु विशेषहेतवोऽभिहिताः, अधुना कर्मणो विशेषहेतुप्रतिपादनायाह—

**सोलस मिच्छनिमित्ता वज्झहि पणतीस अविरईए य। सेसा उ कसाएहिं जोगेहि य सायवेयणीयं ॥१९॥**

रज्ञानासिद्धिर्न वा व्याप्त्यग्रह इति तत्त्वम् ॥ ६४ ॥ नन्वेवमुक्तसूत्रद्वयस्योत्पादव्ययध्रौव्ययुक्तं द्रव्यपदशक्तिग्राहकतापरत्वं पर्यवसितं, तथा च शक्यतावच्छेदकभेदात् नानार्थत्वं, पुष्पदन्तादिपदतुल्यत्वे च नित्यं बहुवचनान्तत्वं स्यादित्याशङ्कायामाह—

तथा चेति, उत्पादव्ययध्रौव्यसमाहारेणात्मादिवस्तु द्रव्यरूपतया व्यवहर्त्तव्यमित्येवं व्यवहारनियमन इत्यर्थः। ननु लक्षणस्य नियतव्यवहारसिद्धिप्रयोजनवदितरभेदानुमितिरपि प्रयोजनम्, प्रकृते उक्तलक्षणहेतुनाऽऽत्मादिद्रव्ये द्रव्यत्वावच्छेदेनैव द्रव्येतरभेदानुमितिः कर्त्तव्या, सा च कथं सङ्गता, द्रव्यत्वावच्छिन्ने आत्मादिद्रव्ये द्रव्येतरत्वावच्छिन्नपर्यायनिष्ठतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकभेदस्य बाधादित्यत आह द्रव्यत्वावच्छिन्नेति, स्वसमये जैनसिद्धान्ते, येन रूपेण पर्यायत्वेन रूपेण, तदितरत्वस्य द्रव्येतरत्वस्य, पर्याये इति दृश्यम्, सिद्धिरित्यनेनान्वयः, तदितरत्वव्यापकाभावप्रतियोगित्वस्य द्रव्येतरत्वव्यापकाभावप्रतियोगित्वस्य, चकाराद् येन रूपेणेत्यस्यात्रापि सम्बन्धः, तस्योत्पादव्ययध्रौव्यसमाहारत्वेन रूपेणेत्यर्थः, उत्पादव्ययध्रौव्यसमाहारहेताविति दृश्यम्, तद्रूपावच्छिन्नात् उत्पादव्ययध्रौव्यसमाहारत्वावच्छिन्नात्, तद्रूपावच्छिन्नेतरभेदाभिप्रायेणेति, द्रव्येतरस्य प्रतियोगिनः पर्यायत्वेन रूपेण प्रसिद्धिरिति तद्भेदरूपसाध्यः पर्यायत्वावच्छिन्नप्रतियोगिताकभेद एव पर्यवस्यतीति पर्यायत्वावच्छिन्नद्रव्येतरनिष्ठप्रतियोगितानिरूपकभेदसाध्याभिप्रायेणेत्यर्थः, अस्यैव पर्यवसितार्थमाह उत्पादेत्यादिना, अत्रोत्पादव्ययध्रौव्यसमाहारहेतोर्नासिद्धिर्न वा व्याप्त्यग्रह इत्याह हेतुमत्त्वेति ॥६४॥ पञ्चषष्ठितमश्लोकावतरणिकामाह नन्वेवमित्यादिना, उक्तसूत्रद्वयस्य यत्सत्तद्द्रव्यम्, उत्पादव्ययध्रौव्ययुक्तं सदिति सूत्रद्वयस्य। शक्यतावच्छेदकभेदादिति, तत्पदस्थले तत्पदस्य

तित्थयराहाराणं बंधे सम्मत्तसंजमा हेऊ। पयडीपएसबंधा जोगेहिं कसायओ इयरे ॥२०॥

(स्वो०)—'तीर्थकराहारकाणां बन्धे सम्यक्त्वसंयमौ हेतू प्रकृतिप्रदेशबन्धौ योगेभ्यः कषायत इतरौ'इति पदानि। पदार्थः—तीर्थकरनामगोत्रस्य त्रिविधमपि सम्यक्त्वं हेतुः, आह—यद्येवं क्षायिकौपशमिकेऽपि हेतू स्तः ततः सर्वसिद्धानां तीर्थकरत्वपूर्वकं सिद्धत्वं तद्बन्धश्च मुक्तानामपि प्रसज्यते, तयोरेकरूपत्वात् तथा च दोष इति, अत्रोच्यते—अध्रुवबन्धिनीनां प्रकृतीनां हेतौ सत्यपि बन्धो विकल्पेन प्रतिपादितः, अन्यच्च "सेसाउ कसाएहि वि" इति भणनात् तीर्थकराहारकप्रकृतयो न निषिद्धाः, सम्यक्त्वसंयमावपि तत्सापेक्षौ अतः कषाययोगयोर्वैचित्र्ये सम्यक्त्वभेदेऽपि न दोषः, क्षायोपशमिकहेतुतायां कृतायां त्वपूर्वकरणेऽस्याबन्धः प्राप्नोति, तच्चानिष्टमिति, एवमाहारकशरीराङ्गोपाङ्गयोः विशिष्टसंयमो हेतुः। प्रकृतिप्रदेशबन्धौ योगवैचित्र्याद्विचित्रौ भवतः, कषायेभ्य इतरौ स्थित्यनुभागबन्धौ कषायवैचित्र्याद्विचित्रौ भवतः। एवमनेकधा हेतुजालं स्वबुद्ध्या योजनीयम्। उदयो बन्धो वा यासां गुणस्थानहेतुको न भवति ता उपरि वक्ष्यामः ॥२०॥

(मलय०)—इह यद्यपि तीर्थकराहारकद्विकयोरपि "सेसा उ कसाएहिं" इति वचनतः सामान्येन कषाया बन्धहेतव उक्तास्तथापि तयोर्निमित्तान्तरमपि विशेषतोऽपेक्षणीयमस्ति, ततस्तत्प्रतिपादनार्थमाह—तीर्थकराहारकयोस्तीर्थकराहारकद्विकयोर्बन्धे बन्धविषये हेतू कारणे यथासङ्ख्यं सम्यक्त्वसंयमौ, तीर्थकरनामकर्मणो बन्धे हेतुः सम्यक्त्वं, आहारकद्विकस्य संयम इत्यर्थः। एवमुक्ते सति परोऽनुपपत्तिमुद्भावयती—ननु तीर्थकरनामकर्मणो बन्धहेतुर्यदि सम्यक्त्वमुच्यते, तर्हि तत्सम्यक्त्वमौपशमिकं यदि वा क्षायिकमथवा क्षायोपशमिकमिति? किञ्चातः सर्वत्रापि दोषः। तथाहि—यद्यौपशमिकं सम्यक्त्वं तीर्थकरनामकर्मणो बन्धहेतुत्वेनोपवर्ण्यते, तत उपशान्त-

नाशोद्भवस्थितिमति क्रमशो न शक्तो, द्रव्यध्वनिस्तदिह नो पृथगर्थताभृत्।
शब्दस्वभावनियमाद्वचने न भेदः, स्वव्याप्यधर्मिगबहुत्वनिराकृतेश्च ॥ ६५ ॥

यथा पुष्पदन्तादिपदजन्यतावच्छेदकं चन्द्रत्वादिप्रकारकत्वे सति सूर्यत्वादिप्रकारकशाब्दबोधत्वमेव, कारणं च तत्र पुष्पदन्तादिपदं चन्द्रे सूर्ये च शक्तमित्याकारकः शक्तिग्रह इत्येकोच्चारणान्तर्भावेन चन्द्रत्वसूर्यत्वादिविशिष्टशक्तत्वात् तस्य क्रमेण पृथगर्थबोधकहर्यादिपदवत् न नानार्थत्वं, तथा द्रव्यपदस्याप्युत्पादनाशस्थितिप्रकारकशाब्दबोधत्वमेव कार्यतावच्छेदकं, कारणं च तत्रोत्पादनाशस्थितिमत्येव द्रव्यपदं शक्तमित्याकारकः शक्तिग्रह इति, तद्वदेव नो द्रव्यध्वनिः पृथगर्थताभृत्,

नाशोद्भवस्थितिमतीतिमूलम्, क्रमशो नाशादिप्रत्येकधर्मेण, नाशोद्भवस्थितिमति द्रव्यध्वनिर्न शक्तः, तत् तस्मात्, इह जैनसिद्धान्ते, नो पृथगर्थताभृत् न नानार्थकः, उत्पादवति द्रव्यपदं शक्तं नाशवति द्रव्यपदं शक्तं ध्रौव्यवति द्रव्यपदं शक्तमित्येवं प्रत्येकधर्मावच्छिन्ने शक्तिग्रहस्य कारणत्वे नानार्थकत्वं स्यात्, न चैवम्, उत्पादव्ययध्रौव्यरूपसमुदितत्रितयधर्मावच्छिन्ने द्रव्यपदं शक्तमित्येवमेकस्यैव शक्तिग्रहस्य कारणत्वाभ्युपगमात्, अत एव तत्कार्यतावच्छेदकमप्युत्पादव्ययध्रौव्यरूपसमुदितत्रितयधर्मप्रकारकद्रव्यविशेष्यकशाब्दबोधत्वमेव, न तूत्पादादिप्रत्येकधर्मप्रकारकद्रव्यविशेष्यकशाब्दबोधत्वमिति भावः। ननु आपः शिकता इत्यादिशब्दवत् कथं न बहुवचनाऽऽपत्तिरित्याशङ्कायां निषेधे हेतुमाह शब्दस्वभावनियमाद्वचने न भेद इति–द्रव्यपदे यदेकवचनं दृश्यते तस्मिन् भेदो दृष्टवचनातिक्रमो न, बहुवचनान्ततापत्तिर्न, तत्र हेतुः शब्दस्वभावनियमा-

च चिन्तयित्वा स महात्मा सदैव परार्थव्यसनी करुणादिगुणोपेतः प्रतिक्षणं परार्थकरणप्रवर्द्धमानमहाशयो यथा यथा परेषामुपकारो भवति, तथा तथा चेष्टते। तत इत्थं सत्वानां तत्कल्याणसम्पादनेनोपकारं कुर्वंस्तीर्थकरनाम समुपार्ज्य परं सत्वार्थसाधनं तीर्थकरत्वमवाप्नोति। उक्तं च—"अनेन भवनैर्गुण्यं, सम्यग्वीक्ष्य महाशयः। तथाभव्यत्वयोगेन, विचित्रं चिंतयत्यसौ ॥१॥ मोहांधकारगहने, संसारे दुःखिता वत। सत्वाः परिभ्रमंत्युच्चैः, सत्यस्मिन् धर्मतेजसि ॥२॥ अहमेतानतः कृच्छात्, यथायोगं कथंचन। अनेनोत्तारयामीति, वरबोधिसमन्वितः ॥३॥ करुणादिगुणोपेतः, परार्थव्यसनी सदा। तथैव चेष्टते धीमान्, वर्द्धमानमहोदयः ॥४॥ तत्तत्कल्याणयोगेन, कुर्वन् सत्यार्थमेव सः। तीर्थकृत्त्वमवाप्नोति, परं सत्वार्थसाधनम् ॥५॥"। तत्र अनेनेति सम्यक्त्वेन। यस्तु सम्यक्त्वावाप्तौ स्वजनादिषु यथोक्तचिन्तां करोति, तथैव चानुतिष्ठति, स धीमान् गणधरलब्धिमासादयति। यः पुनः सम्यक्त्वावाप्तौ भवनैर्गुण्यदर्शनतस्तन्निर्वेदादात्मनिःसरणमेव केवलमभिवाञ्छति, तथैव चेष्टते, स मुण्डकेवली भवति। उक्तं च—"चिंतयत्येवमेवैतत्स्वजनादिगतं तु यः। तथाऽनुष्ठानतः सोऽपि, धीमान् गणधरो भवेत् ॥१॥ संविग्नो भवनिर्वेदादात्मनिःसरणं तु यः। आत्मार्थसंप्रवृत्तोऽसौ, सदा स्यान्मुंडकेवली ॥२॥" एतच्च प्रसङ्गादुक्तमिति कृतं प्रसङ्गेन। तथा सर्वासां कर्मप्रकृतीनां प्रकृतिबन्धः प्रदेशबन्धश्च योगेभ्यो भवति। तत्र प्रकृतिर्ज्ञानावरणीयत्वादिकः स्वभावविशेषः, प्रदेशाः कर्मपरमाणवः। तथेतरौ स्थितिबन्धानुभागबन्धौ कषायतः कषायेभ्यो भवतः। तत्र स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यादिकालप्रमाणमवस्थानं, अनुभागः प्राग्व्यावर्णितस्वरूप एकस्थानादिको रसः ॥२०॥

परीषहा अपि कर्मोदयहेतवोऽतस्तानाह—

**खुप्पिवासुण्हसीयाणि सेज्जा रोगो वहो मलो। तणफासो चरीया य दंसेक्कारस जोगिसु ॥२१॥**

अस्यैव भावार्थमुपदर्शयति—

अयं भावः—बहुवचनेन स्वप्रकृत्यर्थतावच्छेदकव्याप्यमेव बहुत्वं बोध्यत इति, अन्यथैकत्रापि घटे घटपटकटकटाहगतं बहुत्वमादाय घटा इति प्रयोगापत्तेः, न चैकत्र द्रव्ये उत्पादव्ययध्रौव्यव्याप्यं बहुत्वमस्तीति न द्रव्यपदस्य बहुवचनान्ततेति। पुष्पदन्तादिपदे तु चन्द्रत्वसूर्यत्वादिव्याप्यद्वित्वस्य नियमतः सत्त्वात् द्विवचनान्ततैव ॥ ६५ ॥

अयं भाव इत्यादिना, प्रयोगापत्तेरिति, नन्वेवं तर्हि घटपटकटाहगतं बहुत्वमादाय घटपटकटाहा इति प्रयोगोऽपि न स्यात् उक्तबहुत्वस्योद्देश्यतावच्छेदकस्य घटत्वस्याभाववति पटे कटाहे च पटत्वस्याभाववति घटे कटाहे च कटाहत्वस्याभाववति घटे पटे च सत्त्वेन तद्व्याप्यत्वाभावादित्युक्तदोषनिवृत्तये यत्रैकधर्मस्योद्देश्यतावच्छेदकत्वं तत्रैवोद्देश्यतावच्छेदकव्याप्यं बहुत्वं बहुवचनेन बोध्यते द्विवचनेन चोद्देश्यतावच्छेदकव्याप्यं द्वित्वं बोध्यते, यत्र च नानाधर्मस्योद्देश्यतावच्छेदकत्वं तत्र केवलमेव बहुत्वं बहुवचनेन द्वित्वं च द्विवचनेन बोध्यत इत्यभ्युपगन्तव्यम्, तथा च द्रव्यपदस्थले उत्पादव्ययध्रौव्याणामुद्देश्यतावच्छेदकत्वेनाभ्युपगतानां नानाधर्मत्वेन केवलस्यैव बहुत्वस्य भानं स्यादिति स्वव्याप्यधर्मिगबहुत्वनिराकृतेरिति हेतुग्रन्थोऽसङ्गत इति चेत्, मैवम्, समनियतनानाधर्मस्योद्देश्यतावच्छेदकत्वस्थलेप्युद्देश्यतावच्छेदकव्याप्यबहुत्वस्यापि बहुवचनेन भानाभ्युपगमात्, तथा चोत्पादादित्रयाणां समनियतनानाधर्मत्वेन नोक्तदोषः, यद्वोत्पादादित्रयाणामपि द्रव्यत्वत्वेन रूपेणैकत्वेन विवक्षणादत्राप्येकधर्मस्यैवोद्देश्यतावच्छेदकत्वमिति नोक्तदोष इति भावः। चन्द्रत्वसूर्यत्वादिव्याप्यद्वित्वस्येति, अत्र चन्द्रत्वसूर्यत्वे द्वे अपि पुष्प-

वचनानुसारेण तत्कृतबाधासहनमरागगमनं च शय्यापरीषहसहनम् । तथा रोगे सत्यल्पबहुत्वालोचनया प्रवचनोक्तविध्यनुसारतः प्रतिक्रियासमाचरणं रोगपरीषहविजयः। तथा निशितकृपाणमुद्गरादिप्रहरणताडनादिभिर्व्यापाद्यमानशरीरस्य व्यापादकेषु मनागपि मनोविकारमकुर्वतो मम पुराकृतकर्मणामेवं फलं तन्न मे किञ्चिदप्यमी वराकाः कुर्वन्ति, अपि च विशरारुस्वभावं शरीरमेतैर्बाध्यते, नान्तर्गतानि मम ज्ञानदर्शनचारित्राणीति चिन्तयतो वासीतक्षणचन्दनानुलेपनसमदर्शिनो यत्सम्यग्वधपीडासहनं वधपरीषहविजयः। तथाऽप्कायिकादिजन्तुपीडापरिहारायाऽऽमरणादस्नानव्रतधारिणः पटुरविकिरणप्रतापजनितप्रस्वेदवारिसम्पर्कलग्नपवनानीतपांशुनिचयस्य मलापनयनासङ्कलितमनसः सज्ज्ञानदर्शनचारित्रविमलसलिलप्रक्षालनेन कर्ममलनिराकरणाय नित्यमुद्यतमतेर्मलपीडासहनं मलपरीषहसहनम् । तथा गच्छवासिनां गच्छनिर्गतानां वाऽशुषिरस्य दर्भादेस्तृणस्य परिभोगः समनुज्ञातो भगवता, तत्र येषां दर्भादितृणानामुपरि शयनमनुज्ञातं स्वगुरुभिस्तेषामेव दर्भादितृणानामुपरि संस्तारकोत्तरपट्टौ निधाय शेरते, अथवा चौरापहृतोपकरणो यदि वाऽतिजीर्णतया व्यपगतसंस्तारकोत्तरपट्टो दर्भादितृणान्यास्तीर्य शेते, तत्र यत्तृणस्पर्शसम्यगधिसहनं स तृणस्पर्शपरीषहविजयः। तथाऽधिगतबन्धमोक्षतत्त्वस्य पवनवन्निःसङ्गतामादधानस्य देशकालप्रमाणोपेतं संयमविरोधिमार्गगमनं परिहरतः प्रतिमासकल्पमागमानुसारेण चर्यामाचरतः परुषशर्कराकण्टकादिव्यथाजातचरणखेदस्यापि सतो यत्पूर्वसेवितयानवाहनादिगमनास्मरणं स चर्यापरीषहविजयः। तथा 'दंशपरीषह' इत्यत्र दंशग्रहणमशेषशरीरोपघातकसत्त्वोपलक्षणं, यथा "काकेभ्यो रक्ष्यतां सर्पिः" इत्यत्र काकग्रहणमुपघातकोपलक्षणं, तेन दंशमशकमक्षिकामत्कुणकीटपिपीलिकावृश्चिकादिभिर्बाध्यमानस्यापि ततः स्थानादनपगच्छतः तेषां च दंशमशकादीनां त्रिविधं त्रिविधेन बाधामकुर्वतो व्यजनादि-

१ 'पुराकृतकर्मफलमेतत्' इत्यपि पाठः।

यितयाऽपि आश्रयेण सहान्वयादपि, तत्प्रसङ्गः, बहुवचनप्रसङ्गो न, निषेधे हेतुमाह तात्पर्यसंघटितसन्निहिताश्रयत्वादितीत्यन्वयः ।

तत्तद्धर्मप्रकारकबुद्धिविषयत्वरूपं द्वित्वबहुत्वादि तत्तद्धर्मावच्छेदेन पर्याप्तम्, तेनैको द्वौ एको बहव इत्यादेर्नापत्तिः, तच्च क्वचिदेकत्वावच्छिन्ने विधीयते—यथैको घटो नीलपीतत्वाभ्यां द्विरूपो नीलपीतश्वेतत्वैर्बहुरूप इति, क्वचित् तदवच्छिन्नमनूद्यैकत्वं विधीयते—यथा नीलपीतयोर्नीलपीतश्वेतानां वैक्यमित्यत्र, एवं च बौद्धस्य बहुत्वस्य विध्यनुवादभावेनैकत्वसाकाङ्क्षत्वात् न द्रव्यपदोत्तरैकवचनानुपपत्तिः ।

नापत्तिरिति, द्वित्वप्रतियोगिकपर्याप्तिसम्बन्धेनैकत्वाऽवच्छेदेन द्वित्वस्य बहुत्वप्रतियोगिकपर्याप्तिसम्बन्धेनैकत्वावच्छेदेन बहुत्वस्य च बाधादिति भावः। तच्चेति तत्तद्धर्मावच्छेदेन पर्याप्तं तत्तद्धर्मप्रकारकबुद्धिविषयत्वादिरूपं द्वित्वबहुत्वादि चेत्यर्थः, तदवच्छिन्नं—तत्तद्धर्मप्रकारकबुद्धिविषयत्वलक्षणद्वित्वबहुत्वाद्यवच्छिन्नम्, विध्यनुवादभावेन—उद्देश्यविधेयभावेन, एकत्वसाकाङ्क्षत्वादिति, यत्रैकत्वमेकवचनेन प्रतीयते तत्रैव विधेयतयोद्देश्यतया वा बहुत्वं प्रतीयते बहुत्वप्रतीत्यन्यथाऽनुपपत्त्या द्रव्यपदोत्तरमेकवचनमभ्युपगन्तव्यमेवेति भावः। ननूत्पादव्ययध्रौव्याश्रया इत्यत्रोत्पादव्ययध्रौव्याणां द्वन्द्वसमासे कृते "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमन्वेतीति" न्यायादुत्पादाद्याश्रयाणां त्रयाणां बोध इति तत्र यथा बहुवचनान्तत्वं तथा तत्समानशीलं द्रव्यपदमपीति तत्रापि बहुवचनान्तत्वमेव युक्तमिति चेत्, न, मीमांसकमते सर्वः खलु प्रधानान्वयमेवाकाङ्क्षति, वाक्ये च भावनालक्षणक्रियाया एव प्राधान्यात्तत्रैव सर्वेषां पदार्थानामन्वय इति स्थितौ नीलो घटोऽस्तीत्यादौ नीलोऽस्ति घटोऽस्तीति पृथगेवोक्तवाक्याद्-

ह्रीमात्रवेदनतः परमार्थतो वीतरागछद्मस्थकल्पत्वात्, न हि सूक्ष्मसम्पराये मोहनीयोदयप्रभवाः केऽप्यन्येऽपि परीषहाः सम्भवन्ति, मोहस्य समस्तस्यापि तस्य क्षीणत्वात्, ततस्तत्रापि चतुर्दशसङ्ख्याः परीषहा उच्यमाना न विरुध्यन्ते । उक्तं च—"चतुर्दशैते विज्ञेयाः, सम्भवेन परीषहाः । स सूक्ष्मसम्परायाणां, छद्मस्थानामरागिणाम् ॥१॥" ॥२२॥

निसेज्जा जायणाकोसो अरई इत्थिनग्गया । सक्कारो दंसणं मोहा बावीसा चेव रागिसु ॥२३॥

॥ पंचसंगहे चउत्थं दारं ॥

(स्वो०)—निषद्या याचनाऽऽक्रोशः अरतिः स्त्री नग्नता चकारोऽधिकार्थसूचकः, सत्कारपुरस्कारपरीषहः एते सप्त चारित्रमोहनीयोदयात् भवन्ति । दर्शनपरीषहो दर्शनमोहनीयोदयात् प्रादुर्भवति, एवकारोऽवधारणार्थः, एते द्वाविंशतिपरीषहाः सम्पूर्णाः सरागिष्वेव भवन्ति, समासं च हेतुद्वारमुद्देशतो, ग्रन्थतः शतपञ्चकेन । उक्तं चतुर्थं द्वारम् ॥२३॥

(मलय०)—अत्रापि सामर्थ्यलब्धः परीषहशब्दः प्रत्येकमभिसम्बध्यते । निषद्यापरीषहो याञ्चापरीषह इत्यादि । निषद्या चोपाश्रय उच्यते, निषीदन्त्यस्यामिति निषद्येति व्युत्पत्तिबलात् । तत्र श्मशानोद्यानसत्रागारगिरिगुहादिषु स्त्रीपशुपण्डकविवर्जितेष्वनभ्यस्तपूर्वेषु निवसतः सर्वत्र स्वेन्द्रियज्ञानप्रकाशपरीक्षिते प्रदेशे नियमानुष्ठानमधितिष्ठतः सिंहव्याघ्रादिविविधभीषणध्वनिश्रवणतोऽसञ्जातभयस्य यच्चतुर्विधोपसर्गसहनेन मोक्षमार्गादप्रच्यवनमेष निषद्यापरीषहविजयः । तथा बाह्याभ्यन्तरतपोनुष्ठानपरायणस्य दीनवचनमुखवैवर्ण्यपरिहारेणाहारवसतिवस्त्रपात्रभेषजानि सम्यक् प्रवचनोक्तेन विधिना याचमानस्य 'सर्वमपि साधोर्याचितं भवति, नायाचितं, इति चिन्तयतो यद्याञ्चाविधौ लाघवाभिमानसहनं तद्याञ्चापरीषहसहनम् । तथा मिथ्यादर्शनोद्दप्तोदीरितान्यमर्षावज्ञानिन्दावचनानि क्रोधहु-

मानय घटमानयेत्यन्वयबोधो, न तु नामार्थानां कारकाणां च परस्परमन्वयो, विशेषणान्वितविभक्त्यर्थानयनानुभवादिति न विशिष्टवैशिष्ट्येनान्वयो, न च नीलत्वेन घटत्वेन च घटद्वयबोधो, व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमेन नीलत्वेन घटत्वेन चैकस्यैव बोधनात्, अन्यथाऽऽरुण्याधिकरणविरोधादिति स्थितिः, तथा प्रकृतेऽप्युत्पादाद्याश्रयत्वत्रयेणैकस्यैव बोधोपपत्तिरिति ।

इदमुक्तम्भवतीत्यादिना, आरुण्याधिकरणेति, अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्यादौ सोमक्रयणे प्रत्येकमारुण्यकरणत्वादेरन्वयेप्यारुण्यादिविशिष्टा गोव्यक्तिरेकैवेत्यस्य व्यवस्थापकमधिकरणमारुण्याधिकरणं,तस्य विरोधात्—यतो, ऽरुणयाऽन्यया गवा तदन्यया पिङ्गाक्ष्या गवाऽन्यया चैकहायन्या गवा सोमक्रयणस्य तदधिकरणानभिप्रेतस्यापत्तेरित्यर्थः । प्रकृतेऽपि द्रव्यपदेऽपि । नीलं घटमानयतीत्यादौ नीलाभिन्नघटकर्मकानयनबोधो मीमांसकमते मानसबोधरूपः पार्ष्ठिकः,विशिष्टवैशिष्ट्यावगाहिबोधस्य प्रथमत एव सद्भावेन स चानुभवातीतत्वान्नाभ्युपगमार्हः, अन्यथा नीलादिविषयत्वानां घटादिविषयत्वानाञ्च साक्षात्परम्परया वा निरूप्यनिरूपकभावाऽऽनापन्नत्वाद्वाक्यभेदापत्तेरिति मनसि निधाय यथाश्रुतं मीमांसकमतं प्रतिक्षिपति—

वस्तुत उक्तमीमांसकमतमयुक्तम्, नीलं घटमानयेत्यादौ विशिष्टवैशिष्ट्यान्वयबोधस्यैव युक्तत्वात्, अन्यथा वाक्यभेदापत्तेः, नीलघटमानयति न वेति संशयापत्तेश्च ।

वस्तुत इत्यादिना, समानप्रकारकत्वेनैव संशयनिश्चययोः प्रतिबध्यप्रतिबन्धकभाव इति नीलं घटमानयतीति वाक्यजन्योक्तनिश्चयद्वयस्य भिन्नप्रकारकस्य सद्भावकालेऽपि नीलविशिष्टघटकर्मकानयनकर्तृत्वतदभावप्रकारकसंशयापत्तिस्स्यादित्याह नील-

चरितार्थक्रियाकारित्वायोगात्, न हि माणवको दहनोपचारादाधीयते पाक इति, यद्येवं तर्हि कल्पनीयमाहारमपि भुञ्जानस्य न सम्यक् क्षुत्परीषहसहनं भवेत्, भवदुक्तन्यायेन सर्वथाऽऽहारपरित्यागत एव तत्सहनोपपत्तेः, एवं च सति भगवानप्यर्हन् क्षुत्परीषहजेता न भवेत्, सोऽपि हि भगवान् छद्मस्थावस्थायां भवन्मतेनापि कल्पनीयमाहारमुपभुङ्क्ते, न च स तथा कल्पनीयमाहारमुपभुञ्जानोऽपि क्षुत्परीषहजेता नेष्टः, ततो यथाऽनेषणीयाकल्पनीयभोजनपरित्यागतः क्षुत्परीषहसहनमिष्टं, तथा महामूल्यानेषणीयाकल्पनीयवस्त्रपरित्यागत आचेलक्यपरीषहसहनमेष्टव्यम्। न च वाच्यमेवं तर्हि कमनीयकामिनीजनपरिभोगपरिहारतः काणकुण्टविरूपाङ्गवामनेत्रापरिभोगमपि कुर्वतः स्त्रीपरीषहसहनप्रसङ्ग इति, स्त्रीपरिभोगस्यान्यत्र सर्वात्मना सूत्रान्तरेण प्रतिषिद्धत्वात्। न चैवं परिजीर्णाल्पमूल्यवस्त्रपरिभोगः सूत्रान्तरेण प्रतिषिद्धः, ततो नातिप्रसङ्गावाप्तिः। आह च—"जइ चेलभोगमेत्ता, अजिओ अचेलयपरीसहो तेणं। अजियदिगिंछाइपरीसहो वि भत्ताइभोगाओ ॥१॥ एवं तुह न जियपरीसहा जिणिंदा वि सव्वहावन्नं। अहवा जो भत्ताइसु, स विहीचेले वि किन्निट्ठे ॥२॥ सिय पावई अणिट्ठं, एवं इत्थीपरीसहपसंगा। नो सुत्तंतरवाहानिवारणादइपसंगस्स ॥३॥ न वि किंचि पडिसिद्धं, अणुन्नायं वा वि जिणवरिंदेहिं। मोत्तुं मेहुणभावं, न विणा सो रागदोसेहिं ॥४॥ फासुयमपि असणाई न कयाइवि अन्नहेह भोत्तव्वं। पायव्वं च परीसहसहणं तह इच्छमाणेणं ॥५॥" इति कृतं प्रसङ्गेन, विस्तरेण तु धर्मसङ्ग्रहणीटीकायामपवादः प्रपञ्चित इति तत एवावधार्यः। तथा 'सक्कारे' त्ति—पदैकदेशे पदसमुदायोपचारात् सत्कारपुरस्कार इति द्रष्टव्यम्। तत्र सत्कारो वस्त्रपात्रभक्तपानप्रदानादिरूपः, पुरस्कारः सद्भूतगुणोत्कीर्त्तनं वन्दनाभ्युत्थानासनप्रदानादि वा, तत्र चिरोषितब्रह्मचर्यस्य महातपस्विनः स्वपरसमयतत्वज्ञस्य बहुकृत्वः परवादिविजयिनो यत्प्रणामभक्तिबहुमानसम्भ्रमासनप्रदानभक्तपानवस्त्रपात्राद्यतिसर्जनं न मे कश्चित्करोतीति दुष्प्रणिधानपरिहरणं तत्सत्कारपुरस्कारपरीषहसहनम्। तथा 'दंसणं ति'—दर्शनविषयपरीषहोऽपि दर्शनमित्युक्तं, तत्र सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोनुष्ठायी निःसङ्गश्चाहं,

कत्त्वोधवन्नानाप्रकारकैकविशेष्यकवोधो वा भिन्नावच्छेदकतानिरूपिता अभिन्नावच्छेदकतानिरूपिता वा या त्रितयनिष्ठप्रकारता तन्निरूपितैकविशेष्यताकत्त्वोधो वा द्रव्यपदाद्भवतीति नैकवचनानुपपत्तिर्द्रव्यपद इतिभावः ॥६६॥ सप्तषष्ठितमश्लोकावतरणिकामाह उक्तमेवार्थमित्यादिना,

यद्वन्महेश्वरपदन्न विभिन्नवाच्यं, सर्वज्ञतादिषडवच्छिदया परेषाम् ॥
द्रव्यध्वनिस्तव तथैव परं पदार्थ-वाक्यार्थभावभजना न परैः प्रदृष्टा ॥ ६७ ॥

यद्वत् यथा, परेषां नैयायिकानां, सर्वज्ञतादिषडवच्छिदया सर्वज्ञतादिभिः षड्भिः प्रवृत्तिनिमित्तैः समुच्चितैर्महेश्वरपदं न विभिन्नवाच्यं न भिन्नार्थं, तदुक्तं स्मृतौ 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ॥ अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य १ ॥" सर्वज्ञता सर्वविषयकं ज्ञानं, तृप्तिः स्वनिष्ठसुखकादाचित्कत्वाभावबोधः, अनादिबोधः प्रागभावाप्रतियोगिज्ञानं, स्वतन्त्रता कर्तृता, सा जगदपेक्षयेति जगत्कर्तृत्वं, नित्यमलुप्ता कालनिष्ठाभावाप्रतियोगिनी शक्तिर्गुणः कारणता वा, अनन्तशक्तिरनन्तकुलालत्वाद्यवच्छिन्नकारणता, एतानि षडङ्गानि प्रवृत्तिनिमित्तानि, विधिज्ञा वेदतदर्थविदो, महेश्वरस्य महेश्वरपदस्याहुरिति तदर्थ इति । तव द्रव्यध्वनिस्तथैवोत्पादादिप्रवृत्तिनिमित्तभेदेऽप्येकार्थ एव, परम्, "अनेकमेकात्मकमेव वाच्यं, वृक्षा इति प्रत्ययवत्प्रकृत्या ॥" इत्याद्यनुसारेण केवलं पदमगमकं वाक्यं तु गमकमिति न्यायेन च एकस्य सखण्डाखण्डार्थतया वाक्यस्यापि पदत्वं पदस्यापि वाक्यत्वं चेति भजना तु, परैर्न प्रदृष्टा, स्या-

॥ अर्हम् ॥

## ॥ अथ पंचमं द्वारम् ॥

अधुना पञ्चमद्वारमारभ्यते तस्य चेयं सम्बन्धप्रतिपादिका आदिगाथा—

**बद्धस्सुदओ उदए उदीरणा तदवसेसयं संतं। तम्हा बंधविहाणे भन्नंते इइ भणियव्वं ॥१॥**

(स्वो०)—बद्धस्य कर्मणः सतः उदयोऽनुभवनं भवति, अनुभूयमाने कर्मणि प्रक्षिप्यऽनुदयप्राप्तं प्रयोगेणानुभूयते यत्सा उदीरणा, ताभ्यां यत् नानुभूतं तत्सद् भवति, तस्माद् बन्धविधाने भण्यमाने इत्यनेन प्रकारेण भणितव्यमिति गाथार्थः ॥१॥

(मलय०)—तदेवमुक्तं बन्धहेतुवक्तव्यताभिधानं चतुर्थं द्वारम्। सम्प्रति बन्धविधिलक्षणपञ्चमद्वाराभिधानावसरः, तत्र च बन्धोदयोदीरणासत्ता अभिधेयाः। आह–ननु बन्धस्य विधिर्बन्धविधिरितिव्युत्पत्तेर्बन्धविधौ बन्धस्यैव प्रतिपादनं युक्तम्, नोदयोदीरणासत्तानाम्, तत्कथं बन्धोदयोदीरणासत्तास्तत्र वक्तव्याः? इत्यत आह–इह बद्धस्य सतः कर्मणोऽबाधाकालक्षयेणोदयो भवति, उदये च सति प्रायोऽवश्यमुदीरणा, उदयोदीरणाभ्यां च यन्नाद्याप्यनुभूय क्षयं नीतं तदवशेषं सत्, ततो बन्धविधौ भण्यमान इत्युदयादिकमवश्यं भणितव्यम् ॥१॥

भगवत्प्रवचन एव सङ्गच्छते, सतामेव हि भेदाभेदनित्यानित्यसामान्यविशेषादीनामनन्तानां सप्रतिपक्षाणामर्थानां शिरःपाणिचरणादीनामिव कस्यचिन्मुख्यत्वस्य कस्यचिद्गौणत्वस्य च विवक्षारूढत्वसम्भवात्, अन्यतरमिथ्यैकान्ते तु तुल्यन्यायेनावशिष्टलोपात् न वाचोऽवकाश इति।

एवं च द्रव्यपदस्येत्यादिना, एवं चेत्यादि मूलं ग्रन्थकारेण सुस्पष्टं विवृतमिति नास्य टीका प्रतन्यते। सुन्दोपसुन्दन्यायेन भेदाभेदयोर्नित्यानित्याद्योः परस्परप्रतिस्पर्द्धिनोरेकतरस्यैकनयाऽपेक्षयैकान्ततो मिथ्यात्वमित्यभ्युपगमे तदपरस्यापि तद्विरोध्यपरनयाऽपेक्षयैकान्ततो मिथ्यात्वमेव स्यादित्येवं भेदाभेदाद्युक्तसर्वधर्माणां लोपात् कस्य प्राधान्यं कस्य वा गौणत्वं विवक्ष्येतेति नैकान्तवादे प्रधानगुणभावकथाप्रसर इत्याशयेनाह—अन्यतरमिथ्यैकान्ते त्विति, परप्रश्नद्वारेण प्रकारविशेष्यभेदेन प्रकारतावच्छेदकविशेष्यतावच्छेदकादिभेदेन च द्रव्यपदाद्विचित्रबोधोपपत्त्यर्थमाह—

कीदृशो विचित्रबोधो द्रव्यपदादिति चेत्, उत्पादव्ययसापेक्षसत्ताग्राहकेण समुच्चितत्रयाश्रयत्वप्रकारकः, उत्पादव्ययगौणत्वेन सत्तामुख्यत्वग्राहकेण चोत्पत्तिनाशविशिष्टध्रौव्यप्रकारकः, भेदनयेन त्रयाश्रयत्वप्रकारकोऽभेदनयेन तत्तादात्म्यप्रकारकः, उत्पादव्ययोपलक्षणत्वग्राहकनयेन ध्रौव्यमात्रप्रकारकः, विशेषेषु सामान्यग्राहकनयेन द्रव्यत्वप्रकारकः, उत्पादस्थितिभङ्गा सत्तेति वचनात् समुदायग्राहकनयेनोत्पादस्थितिभङ्गमात्रविशेष्यकः,

कीदृश इति, द्रव्यपदादुत्पादव्ययध्रौव्यैतत्त्रितयनिष्ठनिरूपकतानिरूपिताधिकरणत्वनिष्ठप्रकारताकबोधाभिप्रायेणाह उत्पा-

(स्वो०)—यावत्सूक्ष्मसम्परायगुणस्थानं उदीर्णानि उदयं गतानि सन्ति विद्यन्ते तावत्सर्वाणि अशेषाणि कर्माणीति गम्यते, अधिकारादुपशान्तकषायस्य सप्तोदीर्णान्यष्टौ विद्यमानानि, क्षीणकषाये सप्त, शेषयोः सयोग्ययोगिनोश्चत्वारि उदयं गतानि विद्यमानानि च भवन्तीति गाथार्थः ॥३॥

(मलय०)—तदेवमुक्तो गुणस्थानकेषु मूलप्रकृतीरधिकृत्य बन्धविधिः। सम्प्रत्युदयसत्ताविधी प्ररूपयति–मिथ्यादृष्टिगुणस्थानकादारभ्य यावत्सूक्ष्मसम्परायगुणस्थानकं तावत्सर्वाण्यप्यष्टावपि कर्माण्युदीर्णान्युदयप्राप्तानि सन्ति च प्राप्यन्ते, सर्वत्रापि मोहनीयोदयसत्तयोः प्राप्यमाणत्वात्। तथोपशान्ते उपशान्तमोहे उदये सप्त प्राप्यन्ते, मोहनीयस्योपशान्तत्वेनोदयाभावात्, सत्तायामष्टावपि, मोहनीयस्य विद्यमानत्वात्। तथा क्षीणे क्षीणमोहे उदये सत्तायां च सप्त, मोहनीयस्य क्षीणत्वेनोदयाद्यभावात्। शेषयोस्तु सयोग्ययोगिकेवलिनोश्चत्वार्यघातिकर्माण्युदये सत्तायां च प्राप्यन्ते, न शेषाणि, तेषां क्षीणत्वात् ॥३॥

एतदेव जीवस्थानेष्वाह—

**बंधंति सत्तअट्ठ व उइन्नसत्तट्ठगा उ सव्वे वि। सत्तट्ठछेगबंधगभंगा पज्जत्तसन्निंमि ॥४॥**

(स्वो०)—बध्नन्ति सप्तायुर्वर्जानि सम्पूर्णान्यष्टौ वा, उदीर्णविद्यमानाष्टकास्तु सर्वेऽपि–सर्वजीवस्थानजीवाः। सप्ताष्टषडेकाऽबन्धकत्वविकल्पा अपि संज्ञिनि पर्याप्तके सम्भवन्ति, तुशब्दाधिक्यादष्टसप्तचतुर्विधोदयसत्कर्मविकल्पाश्च भवन्तीति गाथार्थः ॥४॥

(मलय०)—तदेवमुदयसत्ताविधी अपि गुणस्थानकेषूक्तौ, उदीरणाविधिरग्रे वक्ष्यते बहुवक्तव्यत्वात्। सम्प्रति जीवस्थानकेषु बन्धोदयसत्ताविधीनाह–पर्याप्तसंज्ञिवर्जाः शेषा अपर्याप्तसूक्ष्मैकेन्द्रियादयस्त्रयोदशभेदभिन्नाः सर्वेऽपि जीवाः सप्ताष्टौ वा बध्नन्ति, तत्रायुर्व-

किं बहुना शुद्धसङ्ग्रहनयेन निर्विकल्पकवृत्त्या सन्मात्रविषयकश्चिन्मात्रविषयको वा, शुद्धपर्यायनयेन चेतरबाधसहकृतेन शून्यविषयक इति। स्याद्वादेन तु समयाबाधेन सर्वत्र सप्तभङ्गप्रकारक इति।

एकत्ववतीति, एको घटो नीलपीतश्वेतत्वैर्बहुरूपः, एकोप्यात्मा नरदेवादिरूपैर्बहुरूप इत्यादावेकत्ववति बहुत्वस्यान्वयो दृश्यः, प्रभाकरमतमनुसृत्याह अभिव्यक्तेर्वेति, उत्पादव्ययविशिष्टं ध्रौव्यं ध्रौव्योत्पादविशिष्टो व्ययः ध्रौव्यव्ययविशिष्ट उत्पाद इत्यादिगौणप्रधानभावेन द्रव्यपदाद्बोध उन्नेय इत्याह एवं चावान्तरेति,एवं चेति एकस्मादपि द्रव्यपदान्नयभेदेन नानाबोधोपपत्तौ चेत्यर्थः। असद्गुरुचरणास्तु अवान्तरेति घटत्वमृत्पिण्डत्वमृत्त्वादिभिर्द्रव्यस्य यदुत्पादादि तत् उत्पादादिसामान्यव्याप्यत्वादन्तरसमुदायिस्वरूपं तद्विशिष्टसमुदायि उत्पादादिसामान्यं तदपि द्रव्यध्वनेरर्थ इत्यर्थः, तेनोत्पादादिसामान्यस्य विशेष्यत्वमुत्पादादिविशेषस्य प्रकारत्वमाश्रित्यापि द्रव्यध्वनेर्विलक्षणबोधः, विशेष्यस्य च सामान्यस्य विशेषान्तरमादाय तत्त्वमिति बोध्यमित्याहुः, अङ्गित्वेन प्रधानत्वेन विशेष्यत्वेनेति यावत्, अङ्गत्वेन गौणत्वेन प्रकारत्वेनेति यावत्, सामान्यतो विषयभेदनियन्त्रितनयभेदेन द्रव्यपदजन्यं विचित्रबोधमुपपाद्य विशेषतो विवक्षितनैगमादिविशेषभेदात्मकेन नयभेदेन तमुपपादयति नैगमेति, ऋजुसूत्रनयो हि क्षणिकवस्तुग्राहीति तन्मते ध्रौव्याभावादाह उत्पादव्ययावच्छिन्नविशेष्यताक इति, सर्वनयविषयत्वव्यापकविषयतानिरूपकप्रमाणेन द्रव्यपदजन्यपरस्परसाकाङ्क्षविषयताकाखण्डबोधमुपपादयति स्याद्वादेन त्विति, ननु शब्दस्य नियतविषयकबोधजनकत्वेन एकेनैव द्रव्यपदेन नयभेदाश्रयणेनोक्तबोधवैचित्र्यं कथं सङ्गच्छते इत्यत आह—

एतच्च सर्वमुत्पादव्ययध्रौव्यतादात्म्याश्रयेषु खण्डशः शक्त्या लक्षणया वा तत्तन्नयोपनीतबाधमहिम्ना

कर्मणामुदीरकः, केवलमायुष्यावलिकावशेषे सत्यायुष आवलिकाप्रविष्टत्वेनोदीरणाया अभावात्सप्तानामुदीरकः । सम्यग्मिथ्यादृष्टिगुणस्थानके तु वर्तमानः सर्वदैवाष्टानामुदीरकः, आयुष आवलिकावशेषे मिश्रगुणस्थानकस्यासम्भवात् । तथाहि—अन्तर्मुहूर्तविशेष एवायुषि मिश्रगुणस्थानकात्प्रतिपत्य सम्यक्त्वं मिथ्यात्वं वा जीवो गच्छतीति । तथाऽप्रमत्तगुणस्थानकादारभ्य यावत्सूक्ष्मः सूक्ष्मसम्परायगुणस्थानकं तावद्वेदनीयायुर्वर्जानां शेषाणां षण्णां कर्मणामुदीरकः, केवलं सूक्ष्मसम्परायगुणस्थानकस्य चरमावलिकायां मोहनीयमावलिकाप्रविष्टमिति कृत्वा तस्याप्युदीरणाया अभावात्पञ्चानामुदीरकः । तथा सूक्ष्मसम्परायगुणस्थानकचरमावलिकात आरभ्य यावत्क्षीणः क्षीणमोहगुणस्थानकं तावन्मोहेन मोहनीयेन च शब्दाद्वेदनीयायुभ्यां च वर्जितानां शेषाणां पञ्चानामुदीरकः । अत्रापि क्षीणमोहगुणस्थानस्य चरमावलिकायां ज्ञानावरणदर्शनावरणान्तरायाणामप्यावलिकाप्रविष्टत्वान्नोदीरणेति द्वयोरेव नामगोत्रयोरुदीरकः, तत्परतः क्षीणमोहगुणस्थानकात्परतस्तावन्नामगोत्रयोरुदीरको यावत्सयोगिकेवलिचरमसमयः, अयोगिकेवली तु भगवान् सकलसूक्ष्मबादरयोगरहितत्वान्न किञ्चिदपि कर्मोदीरयति, उदीरणाया योगसव्यपेक्षत्वात् । उक्तं च—"वट्टन्तो उ अजोगी, न किंचि कम्मं उदीरेइ" इति ॥५॥

उदये उदीरणा भवति, अतः सापवादं वक्तुकाम आह—

**जावुदओ ताव उदीरणा वि वेयणीयआउवज्जाणं। अद्धावलिया सेसे उदए उ उदीरणा नत्थि ॥६॥**

(स्वो)—यावन्मात्रं कालमुदयोऽस्ति तावन्मात्रमुदीरणापि भवति, किमष्टानामपि ? नेत्याह—वेदनीयायुष्कशेषाणां षण्णां, वेदनीयायुषोस्तु पुनः उदीरणाव्यपगमेऽपि किञ्चिन्न्यूनपूर्वकोटिकालं यावदुदयो भवति । अद्धा—कालोऽभिधीयते, आवलिका तद्विभागाभिधानं, क्रीडाविशेषस्यापीदमेवाभिधानं अतो विशेषणं क्रियते, अद्धावलिका कालावलिका तन्मात्रे उदये घातिकर्मणामुदीरणा नास्ति,

आत्माऽपि सप्तविध इत्यनुमानमुद्रा, त्वच्छासनेऽस्ति विशदव्यवहारहेतोः ॥ ६९ ॥

द्रव्याश्रया इत्यादिश्लोको ग्रन्थकृद्विवृतिसम्वलित एवेति न विवृत्यन्तराऽपेक्षी। घटपटोभयस्मिन् इमौ द्वौ इति प्रतीतिः, न तु घटादावेकैकस्मिन् अयं द्वौ इति प्रतीतिः, किन्तु तत्रायं न द्वौ इत्येवं प्रतीतिर्भवतीत्युभयपर्याप्तद्वित्वावच्छेदेन द्वित्वम् इदन्त्वावच्छेदेन तदभावो वर्त्तत इत्यभ्युपगमादाह—

यथा त्रिषु कात्स्न्येन त्रित्वम्, एकद्विव्यक्त्यवच्छेदेन च तदभावः, तथा सर्वत्र वस्तुन्येकग्रहणगृहीते कात्स्न्येनानवच्छेदात्मना जात्यन्तरत्वपरिचायकेनोत्पादव्ययध्रौव्यलक्षणद्रव्यत्वम्, एकैकोत्पादाद्यवच्छेदेन तद्द्वयावच्छेदेन च तदभाव इति भवति सर्वत्र द्रव्यत्वतदभावकल्पनया सप्तभङ्गी। यद्वा समुदायप्रवृत्तानां शब्दानामवयवोपचारं कृत्वा ध्रौव्यलक्षणं द्रव्यत्वम् उत्पादव्ययलक्षणं पर्यायत्वं चादाय सप्तभङ्गीप्रवृत्तिर्भावनीया। एवमात्मापि द्रव्याद्रव्यत्वादिना सप्तविधः, कस्मात्, विशदव्यवहारहेतोः, स्याच्छब्दलाञ्छितसप्तप्रकारकव्यवहारान्यथानुपपत्तेः, घटादिवदिति दृष्टान्तोऽभ्यूह्यः, इतीयं त्वच्छासने आगमोपजीव्यनुमानमुद्राऽस्ति,

यथा त्रिषु कात्स्न्येन त्रित्वमिति, कात्स्न्येन त्रितयपर्याप्तसमुदायत्वावच्छेदेन, तदभावः त्रित्वाभावः, एकग्रहणगृहीते अनुगतप्रतीतिविषये, कात्स्न्येनेति उत्पादादित्रयात्मकमेव वस्तु द्रव्यमिति प्रतीतिर्न तूत्पादाद्येकैकस्वरूपं वस्तु द्रव्यमिति प्रतीतिरिति वस्तुनि द्रव्यत्वमुक्तत्रितयपर्याप्तसमुदायत्वावच्छेदेन, सम्पूर्णवस्तुस्वरूपात्मनेति यावत्, अत एवाह अनवच्छेदात्मनेति. अखण्डवस्तुस्वरूपात्मनेत्यर्थः। एतस्य स्वरूपोपरञ्जकं विशेषणमाह जात्यन्तरत्वपरिचायकेनेति, जात्यन्तरत्वस्वरूपं

(स्वो०)—सातासातमनुष्यायुषां यावत्प्रमत्तस्तावदुदीरणा, न परतः, अयोगिनः शेपोदयः प्रकृतिदशकमित्यर्थः, यावत्सयोगिकेवली तावदुदीर्यते, शेषैकादशगुणप्रकृत्युदयाः, स्वस्थानं स्वोदयं यावदुदीर्यन्ते न परत इति समासार्थः। व्यासार्थस्तु मिथ्यात्वातपसूक्ष्मत्रिकाणां मिथ्यादृष्टावुदय उदीरणा च, अनन्तानुन्धिजातिचतुष्कस्थावराणां सास्वादनं यावदुदय उदीरणा च, सम्यग्मिथ्यात्वस्य सम्यग्मिथ्यादृष्टावुदयः उदीरणा च, वैक्रियषट्कदुर्भगानादेयायशस्तिर्यग्मनुष्यानुपूर्वीदेवनारकायुर्द्वितीयकषायाणामविरतं यावदुदयः उदीरणा च, नीचैर्गोत्रतृतीयकषायोद्योततिर्यग्गत्यायुषां यावद्देशविरतं तावदुदयः उदीरणा च, स्त्यानर्द्धित्रिकाहारकद्विकप्रकृतीनां प्रमत्तं यावदुदय उदीरणा च, सातासातमनुष्यायुषां उदयः परतोऽप्यस्ति नोदीरणा अयं विशेषः, सम्यक्त्वार्द्धनाराचकीलिकाच्छिन्नपृष्टसंहनननामप्रमत्तं यावदुदयः उदीरणा च, एवं हास्यादिपट्कस्यापूर्वकरणं यावत्, वेदत्रिकस्य संज्वलनत्रिकस्य च बादरकषायं यावत्, संज्वलनलोभस्य सूक्ष्मकषायं यावत्, द्वितीयतृतीयसंहननयोरुपशान्तकषायं यावत्, दर्शनपट्कज्ञानान्तरायाणां क्षीणकषायं यावदुदयः उदीरणा च, नामध्रुवोदयसंस्थानपट्कोपघातत्रिकौदारिकविहायोगतिद्विकप्रत्येकसुस्वरदुःस्वराद्यसंहननानां यावत्सयोगिकेवली तावदुदय उदीरणा च, त्रसादित्रयं सुभगादित्रयं मनुष्यगतिपञ्चेन्द्रियजातितीर्थकरोच्चैर्गोत्राणां तु सयोगिन्येवोदीरणा, न परतः, तदुदय एवायं विशेषः, अत एकादशसु गुणेषु यावदुदयस्तावदुदीरणापीति गाथार्थः ॥७॥

(मलय०)—तदेमुक्तो गुणस्थानकेषु मूलप्रकृतीरधिकृत्योदीरणाविधिः। सम्प्रत्युत्तरप्रकृतीरधिकृत्य वक्तव्यः, तत्र कासां प्रकृतीनां किं गुणस्थानकं यावदुदीरणा प्राप्यते? इति तन्निरूपाणार्थमाह—सातासातायुषां सातासातमनुष्यायुषां यावत् प्रमत्तः प्रमत्तसंयतगुणस्थानं तावदुदीरणा, न परतः। तथाऽयोगिन्ययोगिकेवलिनि यः शेषः सातासातमनुष्यायुर्व्यतिरिक्त उदय उदयोदयवतोरभेदोपचारादु-

इति, विशदं सकलदोषरहितमनुमानमेव, तदाहुः श्रीहेमसूरयः—"यत्रैव यो दृष्टगुणः स तत्र कुम्भादिवन्निष्प्रतिपक्षमेतत्॥ तथापि देहाद् बहिरात्मतत्त्वमतत्त्ववादोपहताः पठन्ति"। अत्र दृष्टत्वं गुणविशेषणं हेतोः प्रामाणिकत्वलाभाय, न तु हेतुप्रविष्टम्, एवकारश्च यत्रेत्यनन्तरमिव तत्रेत्यनन्तरमपि योज्य इति।

शक्त्येति मूलं ग्रन्थकारस्स्वयमेव विवेचयति—

स आत्मेत्यादिना, परेषां नैयायिकानाम्, तदवच्छेदकरूपवत्त्वं सकलमूर्त्तद्रव्यसंयोगितावच्छेदकरूपवत्त्वम्, न तु हेतुप्रविष्टमिति, तथाच व्यर्थविशेषणघटितत्वाभावेन न हेतोर्व्याप्यत्वासिद्धिरिति भावः। तत्रेत्यनन्तरमपि योज्य इतीति तत्रेत्यनन्तरमेवकारस्य योजने सति तद्देशान्यदेशाऽवृत्तित्वे सति तद्देशवृत्तित्वमित्यर्थो लभ्यते, स चात्मनो विभुत्वे न घटते इति न तत्पक्षे सिद्धसाधनमिति भावः।

आत्मा शरीरनियतवृत्तिताकः शरीरनियतवृत्तिताकगुणवत्त्वादिति लब्धम्, तत्र च साध्ये शरीरनियतपदोपादानमनर्थकं,सवृत्तिताकत्वमात्रसिद्धौवाविभुत्वसिद्धेः, विभोः परैरवृत्तित्वाभ्युपगमात्, हेतुश्च सकलविशेषणविशिष्टोऽप्रयोजकः, यदि च विभोरपि सार्वदिकत्वव्यवहारात् सर्वकालवृत्तित्ववत् सार्वत्रिकत्वव्यवहारात् सर्वदेशवृत्तित्वमपि प्रामाणिकमित्यभ्युपगच्छन्तं परं प्रति प्रयोगः, सर्ववृत्तेश्च शरीरवृत्तित्वमप्यवर्जनीयमिति साध्ये नियतपदं, तथा च हेतावपि शरीराकाशसंयोगमादाय व्यभिचारवारणाय तदित्युच्यते, तथाप्यात्मगुणानां शरीरावृत्तित्वादसिद्धिः।

उव्वयवोच्छेओ" इति । ततस्तन्मतेन निद्राप्रचलयोरपि क्षीणमोहगुणस्थानकद्विचरमसमयं यावदुदयो वेदितव्यः, स्वमतेनोपशान्तमोहगुणस्थानकं यावत् । तथौदारिकशरीरौदारिकाङ्गोपाङ्गतैजसकार्मणसंस्थानषट्कवज्रर्षभनाराचसंहननवर्णगन्धरसस्पर्शप्रशस्ताप्रशस्तविहायोगतिपराघातोपघातागुरुलघूच्छ्वासप्रत्येकस्थिरास्थिरशुभाशुभसुखरदुःस्वरनिर्माणरूपाणामेकोनत्रिंशत्प्रकृतीनां सयोगिकेवलिगुणस्थानकं यावदुदय उदीरणा च भवति । त्रसबादरपर्याप्तसुभगादेययशःकीर्तिमनुष्यगतिपञ्चेन्द्रियजातितीर्थकरोच्चैर्गोत्ररूपाणां तु दशप्रकृतीनामुदीरणा सयोगिकेवलिगुणस्थानकचरमसमयं यावत्, न परतः । उदयस्तु परतोऽपि, स च तावत्, यावदयोग्यवस्थाचरमसमयः ॥७॥

उदयेऽप्युदीरणा यासां भाज्या ता उपदर्शयन्नाह—

**निद्दाउदयवईणं समिच्छपुरिसाण एगचत्ताणं । एयाणं च्चिय भज्जा उदीरणा उदए नन्नासिं ॥८॥**

(स्वो०)—सामान्योपन्यासान्निद्रापञ्चकं गृह्यते, चतुस्त्रिंशतामुदयवतीनां–ज्ञानान्तरायायुर्दर्शनचतुष्कसातासातस्त्रीनपुंसकोच्चैर्गोत्रवेदकसम्यक्त्वसंज्वलनलोभत्रससुभगादित्रिकपञ्चेन्द्रियजातिमनुष्यगतितीर्थङ्कराणां समिथ्यात्वपुरुषवेदानामेकचत्वारिंशतां, एतासामेव भाज्या उदये उदीरणा, नान्यासामेकाशीतिप्रकृतीनां, यावदुदयस्तावदुदीरणापीत्यर्थः, एतदेव भावयति–निद्रा तृतीयपर्याप्तिं यावदुदीरणाव्यपगमेनानुभवत्यूर्ध्वमुदीरणा, आयुषां भवान्तावलिकाकालमुदयेनानुभवति, ज्ञानान्तरायदर्शनचतुष्काणां क्षीणकषायान्तावलिकाकालमुदयेनानुभवति, नामनवकोच्चैर्गोत्रसातासातानामयोगिकालमुदयेनानुभवति जीव इति गम्यते, लोभस्य सूक्ष्मकषायान्तावलिकाकालमुदयेनानुभवति, एवं सम्यक्त्वस्यापि क्षायिकसम्यक्त्वोत्पत्तौ, मिथ्यात्वस्य तु प्रथमस्थित्यावलिकाशेषायां उदीरणाव्यपगमेऽप्युदयो भवति, तदुदयसमाप्तावौपशमिकसम्यक्त्वप्राप्तिर्भवति, क्षपकश्रेणीं स्त्रीवेदोदयेनारूढः प्रथमं नपुंसकं विनाशयति, ततः स्त्रीवेदमप्युदीर-

न्नसंयोगवत्त्वेनेति।

एतेन शरीरातिरिक्तदेशानवच्छिन्नगुणवत्त्वेन शरीरातिरिक्तदेशावृत्तित्वं साध्यमित्यप्यपास्तम्। परमाण्वादिमानत्वसम्भवेनोद्देश्यासिद्ध्यापत्तेः, विभोरवृत्तित्वनये सिद्धसाधनाच्च। अपि च स्वशरीरमात्रवृत्तित्वमौदारिकाद्यपेक्षया समुद्घातादिदशायां बाधितम्, अन्तराले तदस्पर्शात्, मुक्तिदशायां च सर्वथा तथा, संसारी स्वशरीरमात्रवृत्तिरिति च संसारी नारकदुःखवानित्यनेन सदृशम्, उक्तदोषादेव कार्मणशरीरवृत्तित्वं चात्मनोऽप्रामाणिकं, तस्याहष्टानतिरिक्तत्वात्, न चाहष्टे आत्मा वर्त्तते, किन्त्वात्मन्येवाहष्टमिति। न च पौद्गलिकेऽप्यहष्टे आत्मनः सम्बन्धो वृत्तिनियामको नाम, किन्त्वात्मनि तस्य सम्बन्ध इत्यविगानेन सिद्धं जैने प्रवचने, प्रतिप्रदेशमनन्तानन्तकर्मवर्गणावस्थानस्यात्मनि तत्रोपदेशात्।

एतेनेत्यतिदिष्टं निषेधे हेतुमाह परमाण्वादिमानत्वसम्भवेनेति, आत्मा शरीरमानस्स्यात् तदाऽपि शरीरातिरिक्तदेशाऽवृत्तिस्स्यात् परमाण्वादिमानो निराधारविभुर्वा स्यात् तदापि तथा स्यादित्येवं त्रिधा कल्पनासम्भवेनोद्दिष्टस्य शरीरनियतमानत्वस्यैव सिद्धिर्न स्यात्, निराधारात्मविभुत्ववादिमते सिद्धसाधनं च स्यादित्यर्थः, शरीरातिरिक्तदेशावृत्तित्वसाध्यघटकशरीरपदमौदारिकशरीरपरं चेत्तर्हि मारणान्तिकसमुद्धातादिकाले आऽसङ्ख्येययोजनं लोकाकाशदेशव्यापकश्छद्मस्थात्मा केवलिसमुद्धातकाले च सम्पूर्णलोकव्यापकः केवल्यात्मा भवतीति स्वशरीरातिरिक्तदेशेप्यात्मा विपरिवर्त्तत इति बाध इत्याशयेनाह अपि चेति, ननु सामान्यत एव शरीरत्वावच्छिन्नमेव शरीरपदेन गृह्यते शरीरत्वञ्च कार्मणशरीरेऽपि वर्त्तते इत्यन्तराले तत्सम्बन्धान्नोक्तदोष इत्यत

'नन्नासिं' ति–अन्यासां त्वेकाशीतिसंख्यानां नोदये सत्युदीरणा भाज्या, किमुक्तं भवति ? शेषाणामेकाशीतिप्रकृतीनां यावदुदयस्तावदुदीरणापि पवर्त्तते, न पुनरुदीरणाविरहितः कदाचनापि केवल उदयो भवतीति ॥८॥

अधुना बन्धप्रकारमाह—

**होइ अणाइअणंतो अणाइसंतो य साइसंतो य । बंधो अभव्वभव्वोवसंतजीवेसु इइ तिविहो ॥९॥**

(स्वो०)—अनाद्यपर्यवसितोऽनादिध्रुव इत्यर्थः, अनादि सपर्यवसानोऽनाद्यध्रुवः, सादिसपर्यवसानः साद्यध्रुव इत्यर्थः, त्रिविधो बन्धो यथासङ्ख्येनाभव्यभव्योपशान्तजीवेषु तद्विषय इति नान्यथेति गाथार्थः ॥९॥

(मलय०)—तदेवमुक्ता सप्रपञ्चमुदीरणा । संप्रति बन्धं सप्रपञ्चं विवक्षुः प्रथमतो बन्धप्रकारानुपदर्शयति–बन्धः सांपरायिकः कर्मबन्धोऽभव्यजीवेष्वनाद्यनन्तः, तत्रानादित्वं प्राक् सर्वदैवभावात्, अनन्तत्वमुत्तरकालं कदाचिदपि व्यवच्छेदस्याभविष्यत्वात् । भव्यजीवेष्वनादिः सान्तः, तत्रानादित्वं प्राग्वत्, सांतत्वमुत्तरकालं कदाचिद्व्यवच्छेदस्य संभवात् । उपशान्तजीवेषु–उपशान्तमोहगुणस्थानकात्प्रतिपतितेषु जीवेषु सादिः सांतश्च । तत्र सादित्वमुपशान्तमोहगुणस्थानकेऽभावात्, ततः प्रतिपाते च भूयोऽपि भावात्, तथाहि–उपशान्तमोहगुणस्थानके साम्परायिको बन्धो न भवति, ततः प्रतिपाते च भूयोऽपि पवर्त्तते, ततः सादिः, सान्तत्वमुत्तरकालमवश्यं व्यवच्छेदसंभवात्, इत्येवमुक्तेन प्रकारेण बन्धस्त्रिविधिः–त्रिप्रकारो भवति ॥९॥

त्रिविधस्यापि बन्धस्योत्तरभेदान् दर्शयन्नाह–

साध्यघटकशरीरपदस्यौदारिकादिशरीरपरत्वपक्षेऽपि बाध एवेत्याशयेनाह—यदि चेति, "अण्णुण्णाणुगयाणं" इत्यादीति 'अन्नोन्नाणुगयाणं, इमं व तं वत्ति विभयणमजुत्तं। जह दुद्धपाणियाणं, जावंतविसेसपज्जाया" इति सम्पूर्णगाथा, एतदर्थोऽस्मत्कृतस्याद्वादबिन्दुतोऽवसेयः। क्षेत्रप्रत्यासत्त्या एकक्षेत्रावगाढत्वलक्षणप्रत्यासत्त्या, सर्वात्मसाधारण्येनोद्देश्यासिद्धेरिति मुक्तसंसार्यात्मोभयवृत्त्यात्मत्वावच्छेदेनोद्देश्यस्य शरीरमानत्वस्यासिद्ध्यापत्तेरित्यर्थः। साध्यसाधने परिस्कृत्य समाधत्ते अर्हन्मुखाम्भोजविनिर्गतस्याद्वादामृतरसाऽऽस्वादैकनिष्ठः—

अत्र ब्रूमः, आत्मा स्वकर्मकृतशरीरसमानावगाहनाकस्तदवच्छिन्नभोगवत्त्वादित्यत्र तात्पर्यं, स्वकर्मकृतत्वं च स्वकर्मनिरूपितप्रतियोग्यनुयोगिभावसम्बन्धाश्रयकृतत्वं, तेन स्वकर्मक्षयकृतत्रिभागहीनचरमशरीरावगाहनावस्थितक्षीणसकलक्लेशप्रदेशशालिनि सिद्धे नाव्याप्तिः। तत्समानावगाहनाकत्वं च तदवगाहकनभःप्रदेशसङ्ख्यासमव्याप्तसङ्ख्याकनभःप्रदेशावगाहनाकत्वम्, अवगाहनापदग्रहणात् न स्पर्शनान्यूनाधिक्यकृतो दोषः, "जत्तियाए जीवो ओगाढो तत्तिआए चेव फुसमाणो गच्छई" इत्यादौ च स्पर्शनापदस्यावगाहनावच्छिन्नस्पर्शनापरत्वात् नानुपपत्तिरित्यादि समर्थितं महता प्रबन्धेनास्पृशद्गतिवादेऽस्माभिरिति किमतिपल्लवितेन। आत्मा सर्वगतो न भवति सर्वत्र तद्गुणानुपलब्धेः, यो यः सर्वत्रानुपलभ्यमानगुणः स सर्वगतो न भवति, यथा घटः, तथा चायं, तस्मात् तथा, व्यतिरेके व्योमादि, न चायमसिद्धो हेतुः, कायव्यतिरिक्तदेशे तद्गुणानां बुद्ध्यादीनां वादिना प्रतिवादिना वाऽनभ्युपगमात्, तथा च भट्टश्रीधरः—सर्वगतत्वेऽप्यात्मनो देहदेशे

अन्येऽपि मूलोत्तरप्रकृत्याश्रिताः चत्वारो बन्धप्रकारा भवन्ति, तानाह—

**भूओगारप्पयरग अव्वत्त अवट्ठिओ य विन्नेया। मूलुत्तरपगइबंधणासिया ते इमे सुणसु ॥१२॥**

(स्वो०)—प्रभूताकारोऽल्पतरोऽव्यक्तोऽवस्थितश्चेति विज्ञेयाः, पूर्वबन्धात् संख्यां प्रति यदाधिको भवति, तदा प्रभूताकारः, यदा तु पूर्वबन्धादुत्तरबन्धो हीनस्तदाऽल्पतरो बन्धः, यदाऽबन्धकस्य बन्धो भवति तदा अव्यक्त इति संज्ञा ज्ञातव्याः, यदा भूयो भूयस्तत्सङ्ख्ययैव विदधाति, तदाऽवस्थितबन्धः, मूलोत्तरप्रकृतिगतास्ते त्वमी शृणुत इति गाथार्थः ॥१२॥

(मलय०)—इहान्येऽपि मूलोत्तरप्रकृतिगताश्चत्वारो बन्धभेदाः सन्ति, ततस्तानुपदर्शयति—मूलोत्तरप्रकृतिबन्धनाश्रिता मूलोत्तरप्रकृतिबन्धगताश्चेत्यर्थः, प्रत्येकं चत्वारो बन्धभेदा विज्ञेयाः, तद्यथा—भूयस्कारोऽल्पतरोऽवक्तव्योऽवस्थितश्च। तत्र यदा स्तोकाः प्रकृतीर्बध्ध्वा भूयसीः प्रकृतीर्बध्नाति, यथा सप्त बध्ध्वाऽष्टौ बध्नाति, तदा स बन्धो भूयस्कार इत्युच्यते। यदा तु भूयसीर्बध्ध्वा स्तोका बध्नाति, यथाष्टौ बद्ध्वा सप्त बध्नातीति, तदा स बन्धोऽल्पतर इति व्यपदिश्यते। यदा पुनः सर्वथैवाबन्धको भूत्वा भूयोऽपि बन्धमारभते, तदा स बन्धोऽवक्तव्य इति, भूयस्कारादिना शब्देन वक्तुमशक्यत्वात्। यदा तु यावतीः प्रकृतीः प्रथमसमये बद्धवान्, तावतीरेव द्वितीयादिष्वपि समयेषु बध्नाति, तदा स बन्धोऽवस्थित इति, तावत्प्रमाणतयाऽवस्थितत्वात्, तांश्चेमान् भूयस्कारादीन्वक्ष्यमाणान् शृणुत। तत्र मूलप्रकृतिषु प्रथमतो भाव्यन्ते, इह मूलप्रकृतीनां चत्वारि बन्धस्थानानि, तद्यथा—एका षट् सप्ताष्टौ च। तत्रैकां सातवेदनीयरूपां प्रकृतिं बध्नत एका, सा चोपशान्तमोहादेरवगन्तव्या। षट् प्रकृतीर्बध्नतः षट्, ताश्च सूक्ष्मसम्परायस्य। सप्त बध्नतां सप्त, ताश्च मिश्रापूर्वकरणानिवृत्तिबादराणां, शेषाणां त्वायुर्बन्धाभावे सप्त। अष्टौ बध्नतामष्टौ, ताश्च मिथ्यादृष्ट्यादीनां मिश्रवर्जितानां अप-

अत्रेति, स्वाहाभुज इति मूलम्, स्वाहाभुजोऽग्नेरूर्ध्वज्वलनमपि स्वभावादित्येको हेतुः, अथवा सम्बन्धभेदकलितात् सम्बन्धान्तरेण सम्बद्धाददृष्टादस्त्वित्यपरो हेतुः। दिग्देशवर्त्तिपरमाणुसमागमोऽपि नानादिग्देशवर्त्तिनां परमाणूनां समागमोऽपि संयोगोऽपि, तच्छक्तितः अदृष्टशक्तिमहिम्नोपपद्यत इत्यत्र न खलु बाधकं विघ्न इत्यन्वयः, आत्मा विभुः नित्यद्रव्यत्वे सत्यमूर्त्तत्वादित्यनुमाने विपक्षबाधकं पूर्वोपन्यस्तं प्रथमं तर्कं निराकरोति—

आत्मनो विभुत्वाभावे नानादिग्वर्त्तिदहनादिषु ज्वलनादिक्रियाणां युगपददृष्टवदात्मसंयोगाभावात् युगपदनुत्पत्तिप्रसङ्गः, आत्मगुणस्य साक्षात् क्रियाद्वारकस्वाश्रयसंयोगेनैव क्रियाजनकत्वस्य प्रयत्नस्थले दृष्टत्वादिति प्राचीननैयायिकैर्यद्बाधकमुक्तं तत्तु शिरोमणिनैव दूषितं—जनयतु प्रयत्नो यथा तथा, अदृष्टं तु यथा कथंचित् परम्परया स्वाश्रयसंयोगादेव जनयति, अतिप्रसङ्गस्तु वैभवेऽपि तुल्य इति ग्रन्थेन। यत्तु लाघवेन स्वाश्रयसंयोगेन तज्जनकताया एव कल्पनात् आत्मविभुत्वसिद्धिरिति तेनोक्तं, तत्तुच्छम्, अतिप्रसङ्गावारणे लाघवसहस्रस्याप्यकिञ्चित्करत्वात्।

आत्मनो विभुत्वाभाव इति, यद्बाधकमुक्तमिति, एकपञ्चितमश्लोकव्याख्यायामिति शेषः, एतत्सर्वं तत्रैव सविस्तरं विवृतमिति नेह विव्रियते, तेन शिरोमणिना, अतिप्रसङ्गावारण इति अदृष्टं स्वाश्रयसंयोगेन वह्निवदन्यत्रापि सत्तया ततोऽप्यूर्ध्वज्वलनं स्यादेवेत्यतिप्रसङ्गस्याऽवारण इत्यर्थः।

समवायेनोर्ध्वज्वलनत्वावच्छिन्ने तादात्म्येन वह्नित्वेन हेतुत्वं कल्पयित्वाऽतिप्रसङ्गवारणे तु वृथा विशि-

प्रकृतीनामबन्धको भूत्वा भूयोऽपि बन्धकः सम्भवति, सर्वमूलप्रकृत्यबन्धकत्वस्यायोग्यवस्थायां भावात्, ततोऽपि च प्रतिपाताभावात्, एतदेवाह–यस्मात्सर्वासां मूलप्रकृतीनामबन्धको भूत्वा भूयो बन्धको न भवति, अत इह मूलप्रकृतिष्ववक्तव्यो नास्ति ॥१३॥

अत्रैवातिदेशमाह—

भूओगारप्पयरगअव्वत्तअवट्ठिया जहा बंधे। उदओदीरणसंतेसु वावि जहसंभवं नेया ॥१४॥

(स्वो०)—भूताकाराऽल्पतरकाव्यक्तावस्थिता यथा बन्धे उदयोदीरणासत्स्वपि यथासम्भवं ज्ञेयाः, वाशब्दो यत्तदोर्नित्यसम्बन्धख्यापकः, यथा बन्धे तथा उदयादिष्वपि ज्ञेया इति। मूलप्रकृतीनां चत्वारि सप्ताष्टौ त्रीण्युदयस्थानान्येतानि सम्भवन्ति, एको भूताकारो, यतः सप्तवेदको भूत्वाऽष्टवेदको भवति, द्वावल्पतरावुदयौ, नास्त्यत्राव्यक्तः, त्रयोऽवस्थितोदया इति। उदीरणायाः पञ्च स्थानानि द्विपञ्चषट्सप्ताष्टाविति, मूलप्रकृतिषु त्रयो भूताकाराः, अत्र उपशान्तकषायः पञ्चोदीरको भूत्वा षट् सप्ताष्टोदीरको भवति, द्विकोदीरको न परावर्त्तते इति, चत्वार्य (रोऽ)ल्पतराः, अष्टोदीरको भूत्वा सप्तषट्पञ्चद्विकोदीरको भवति क्रमेणेति, नास्त्यत्राप्यव्यक्तः, पञ्चाप्यवस्थितोदीरणास्थानानि। चतुः सप्ताष्टौ त्रीणि सत्कर्मस्थानानि, भूताकाराव्यक्तौ न चात्र भवतः, द्वेऽल्पतरस्थाने सप्तकचतुष्के, अवस्थितस्य सत्कर्मणः त्रीणि स्थानानीति गाथार्थः ॥१४॥

(मलय०)—सम्प्रत्यतिदेशेनोदयोदीरणासत्तास्थानेष्वपि भूयस्कारादीनभिधित्सुराह–यथा बन्धे भूयस्काराल्पतरावक्तव्यावस्थिता मूलप्रकृतिषूक्तास्तथोदय उदीरणायां सत्तायां च यथासम्भवं ज्ञेयाः। इदमतिसंक्षिप्तमुक्तमतो विशेषतो विभाव्यते–मूलप्रकृतीनां त्रीण्यु-



१ 'उदए उदीरणाए संते जहसंभवं नेया' इत्यपि प्रत्यन्तरे

रेण न सम्भवतीति तत्र तदभ्युपगन्तव्यमित्याशङ्क्य प्रतिक्षिपति—

न च नोदनादीनां गुणानां गुणत्वव्याप्यैकजात्या क्रियात्वावच्छिन्ने हेतुत्वादूर्ध्वज्वलनमवश्यं वह्नेरदृष्टकारितम्, अत एव च तस्य गुणत्वसिद्धिरपीति वाच्यम्, गुणसाक्षात्कारजनकतावच्छेदिकया साङ्कर्येण तथाहेतुत्वासिद्धेः। यदि च तत्राऽदृष्टहेतुत्व एवाग्रहस्तदाऽस्तु कार्यसामान्यजनकतावच्छेदकसम्बन्धेन तत्, नहि सोऽपि स्वाश्रयसंयोग एव, आकाशगतशब्दाव्याप्तेः, अजसंयोगनिषेधेन परैरात्माकाशसंयोगस्यानभ्युपगमात्, कालाकाशदिशामिवादृष्टस्यापि कार्यसामान्यजनकतावच्छेदकसम्बन्धस्यातिरिक्तस्यैव सिद्धेः॥ तदिदमाह—सम्बन्धभेदकलितात्, सम्बन्धान्तरेण सम्बद्धादथवाऽदृष्टादस्तु स्वाहाभुज ऊर्ध्वज्वलनमिति,

न चेति, वाच्यमित्युत्तरेण सम्बन्धः। गुणसाक्षात्कारं प्रति अदृष्टभावनागुरुत्वस्थितिस्थापकसंस्कारात्मकायोग्यगुणभिन्नगुणानां विषयविधया कारणत्वेन तत्राप्युक्तनीत्या रूपत्वादिना प्रत्येकरूपेण कारणत्वे व्यतिरेकव्यभिचाराद् योग्यगुणगतेन गुणत्वव्याप्यैकवैजात्येन कारणत्वं वाच्यम्, तथाच तेन सह साङ्कर्यात् न क्रियाजनकगुणगतैकवैजात्यसिद्धिरित्येवं निषेधे हेतुमाह गुणसाक्षात्कारेति, अत्रेदमपि दृश्यं, यथा वह्नित्वावच्छिन्नं प्रति तृणत्वेनारणित्वादिना च कारणत्वे व्यतिरेकव्यभिचारात्तन्निवृत्तये वह्नौ कार्यतावच्छेदकवैजात्यमभ्युपगतं तथा क्रियायामपि वैजात्यमङ्गीकृत्य विजातीयक्रियां प्रत्यदृष्टत्वेनादृष्टस्य कारणत्वेऽपि न गुणत्वसिद्धिरिति, द्वितीयचरणं व्याख्यातुमाह यदि चेति, आकाशगतशब्दाव्याप्तेरिति, शब्दस्यापि कार्यसामान्यान्तर्गततया समवायेन स गगने वर्त्तते नच तत्रादृष्टं स्वाश्रयसंयोगसम्बन्धेन वर्त्तते विभुद्वयसंयोगानभ्युपगमादित्यदृष्टस्याकाशेऽभावेपि तत्र

एकं बन्धस्थानं समुदितानां, नव षट् चतसृणां प्रकृतीनां बन्धात्रिधैव दर्शनावरणस्य बन्धः, द्वाविंशत्येकविंशतिसप्तदशत्रयोदशनवपञ्चचतुस्त्रिद्व्येकप्रकृतिबन्धाद्दश मोहनीयबन्धस्थानानि, त्रयोविंशतिपञ्चविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदेकप्रकृतिबन्धादष्टौ नाम्नो बन्धस्थानानि, ज्ञानान्तराययोरेकं, पञ्चानामपि सहचरितत्वात्, गोत्रायुर्वेदनीयानां तु तदन्यतरस्याः प्रकृतेर्बन्धादेकैकं स्थानम्, अवस्थितिबन्धाः सर्वत्र मूलोत्तरप्रकृतिषु स्थानतुल्याः, यत्र यावन्ति स्थानानि, तत्र तावन्तोऽवस्थितबन्धा इति गाथार्थः ॥१५॥

(मलय०)—तदेवमुक्ता मूलप्रकृतीनां बन्धोदयोदीरणासत्तास्थानेषु भूयस्कारादयः, सम्प्रत्युत्तरप्रकृतीनां तानभिधित्सुः प्रथमतो बन्धस्थानान्याह-दर्शनावरणमोहनाम्नां-दर्शनावरणीयमोहनीयनामकर्मणां यथासंख्यं बन्धस्थानानि त्रीणि दशाष्टौ च भवन्ति। शेषाणां-ज्ञानावरणान्तरायवेदनीयगोत्रायुषामेकं-एकैकं बन्धस्थानं, अवस्थितबन्धः सर्वत्रापि स्थानसमो-बन्धस्थानसमो वेदितव्यः। इयमत्र भावना-दर्शनावरणीयस्य त्रीणि बन्धस्थानानि, तद्यथा-नव षट् चतस्रः। तत्र सर्वप्रकृतिसमुदायो नव, ता एव नव स्त्यानर्द्धित्रिकरहिताः षट्, ता एव षट् निद्राप्रचलाहीनाश्चतस्रः। अत्र द्वौ भूयस्कारौ, द्वौ चाल्पतरौ, त्रयोऽवस्थिताः, एते सर्वेऽपि सुगमाः। चतुःषट्करूपौ द्वाववक्तव्यबन्धौ, तौ चाग्रे वक्ष्येते। मोहनीयस्य दश बन्धस्थानानि, तद्यथा-द्वाविंशतिः, एकविंशतिः, सप्तदश, त्रयोदश, नव, पञ्च, चतस्रः, तिस्रः, द्वे, एका च। तत्र द्वाविंशतिकं बन्धस्थानं मिथ्यादृष्टौ, एकविंशतिकं सासादने, सप्तदशकं मिश्रेऽविरतसम्यग्दृष्टौ च, त्रयोदशकं देशविरते, नवकं प्रमत्ताप्रमत्तयोरपूर्वकरणे च, पञ्चादीनि त्वेकपर्यन्तान्यनिवृत्तिबादरे। अत्र भूयस्कारा नव, ते चोपशमश्रेणितः प्रतिपाते संज्वलनलोभरूपैकप्रकृतिबन्धादारभ्य क्रमेण वेदितव्याः, अष्टावल्पतराः, कथं? इति चेत्, उच्यते-इह द्वाविंशतिबन्धादेकविंशतिबन्धे गमनं न सम्भवति, नाप्येकविंशतिबन्धात्सप्तदशबन्धे, यतो द्वाविंशतिबन्धो मिथ्यादृष्टौ, एकविंशति-

उत्तरप्रकृतिषु बन्धे भूयस्कारादयः

द्वितीयं विपक्षबाधकतर्कमुपन्यस्य निराकरोति—

यदपि बाधकमुक्तं केनचित्, आत्मनो व्यापकत्वाभावे दिग्देशान्तरवर्त्तिपरमाणुभिर्युगपत्संयोगाभावादाद्यकर्माभावस्तदभावादन्त्यसंयोगस्य तन्निमित्तशरीरस्य तेन तत्सम्बन्धस्य चाभावादनुपायसिद्धः सर्वदा सर्वेषां मोक्षः स्यादिति, तदपि न युक्तम्, नहि यद्येन युक्तं तदेव तं प्रत्युपसर्पतीति नियमः सम्भवी, अयस्कान्तं प्रत्ययसस्तेनासंयुक्तस्याप्युपसर्पणोपलब्धेः। अथासंयुक्तस्याकर्षणे तच्छरीरारम्भं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्त्तिपरमाणूनामुपसर्पणप्रसङ्गात् न जाने तच्छरीरं कियत्प्रमाणं स्यादिति चेत्, संयुक्तस्याप्याकर्षणे कथं स एव दोषो न भवेत्, आत्मनो व्यापकत्वेन सकलपरमाणूनां तेन संयोगात्। अथ तद्भावाविशेषेऽप्यदृष्टवशाद्विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पन्ति, तदितरत्रापि तुल्यम्, तदाह–दिग्देशवर्त्तिनामर्थान्नानादिग्देशवर्त्तिनां परमाणूनां समागमोऽपि तच्छक्तितोऽदृष्टशक्तिमहिम्नोपपद्यत इत्यत्र न खलु बाधकं विद्म इति, तावत्परिमाणतच्छरीरव्यक्तौ तथाभव्यत्वस्य दृष्टकारणानां चादृष्टजन्यतावच्छेदकजातिव्याप्यजात्यवच्छिन्न एव हेतुत्वात् नातिप्रसङ्ग इति निष्कर्षः ॥ ७१ ॥ बाधकान्तरन्निराचिकीर्षयाह—

यदपीत्यादिना, उत्तरार्द्धमुक्तार्थपरतया व्याख्यानयति–तदाहेति, तथा भव्यत्वस्येति तथापरिणमनस्वभावत्वेन भवनस्य, तावत्परिमाणत्वेन रूपेण भवनस्य वेत्यर्थः ॥७१॥ द्वासप्ततितमश्लोकमवतारयति बाधकान्तरेत्यादिना,

देकत्रिंशद् बन्धस्य। अल्पतरा अप्येकत्रिंशद्बन्धादुभयत्रस्थबन्धेषु गमनात् सप्त भावनीयाः। शेषेषु भूताकाराऽल्पतरौ न भवतः, अवस्थितिबन्धो बन्धस्थानसमः प्रतिपादित एवेति गाथार्थः ॥१६॥

(मलय०)—सम्प्रति भूयस्काराल्पतरानेवोक्तसंख्याकान् दर्शयति—दर्शनावरणमोहनीयनाम्नां क्रमात् यथाक्रमं भूयस्कारा द्वौ नव षट् च। अल्पतरा द्वावष्टौ सप्त। किमुक्तं भवति ? द्वौ भूयस्कारौ द्वावल्पतरौ दर्शनावरणस्य, नव भूयस्कारा अष्टावल्पतरा मोहनीयस्य, षट् भूयस्काराः सप्ताल्पतरा नामकर्मणः। अथ कस्मान्मोहनीयस्य नवमोऽल्पतरो न भवति ? नाम्नो वा सप्तमोऽपि भूयस्कारः ? इत्यत आह—'मिच्छाओ'इत्यादि। यस्मान्न मिथ्यात्वात्सासादनत्वं याति, तस्मादेकविंशतिबन्धरूपोऽल्पतरो न प्राप्यते, ततो मोहनीयस्याष्टावेवाल्पतराः। तथैकत्रिंशद्बन्धादुत्तीर्य य एकप्रकृतिबन्धः क्रियते स एकत्रिंशदपेक्षया गुरुः—भूयस्कारो न भवति, ततः षडेव नाम्नो भूयस्काराः। अथ प्रतिपातकाले एकस्याः प्रकृतेर्बन्धमाधायैकत्रिंशत्प्रकृतिबन्धमपि गच्छति, एकप्रकृत्यपेक्षया चैकत्रिंशत्प्रकृतिबन्धो भूयस्कार इति सप्त भूयस्काराः प्राप्नुवन्ति, युक्तं चैतत्, सप्तानां भूयस्काराणां शास्त्रान्तरेऽप्यभिधानात्। तदुक्तं शतकचूर्णौ—"पक्काओ चि पक्कतीसं जाइ त्ति भूयोगारा सत्त"इति। तदयुक्तमेकत्रिंशद्बन्धरूपस्य भूयस्कारस्य प्रागेवाष्टाविंशत्याद्यपेक्षया गृहीतत्वात्, उभयथापि च तस्यैकरूपत्वात्, न चावधिभेदाद्भूयस्कारभेदो विवक्षणीयः, तथा सति भूयस्काराणामतिबाहुल्यप्रसक्तेः। तथाहि—कदाचिदष्टाविंशतेरेकत्रिंशद्बन्धं गच्छति, कदाचिदेकोनत्रिंशतः, कदाचित्त्रिंशतः, कदाचिदेकस्याः, तथा कदाचित्त्रयोविंशतेरप्यष्टाविंशतिबन्धं गच्छति, कदाचित्पञ्चविंशतेरपीत्यादि। तत एवं सप्तभ्योऽतिरिक्ता बहवो भूयस्काराः प्राप्नुवन्ति, न चेष्टं तस्मान्नावधिभेदाद्भूयस्कारभेद इति षडेव भूयस्काराः। अवस्थितबन्धो बन्धस्थानसमः प्रागेव प्रतिपादितः ॥१६॥

उत्तरप्रकृतिषु भूयस्कारादयः

क्षणस्य मूर्त्तत्वस्य चापादयितुमशक्यत्वात्, तादृशमूर्त्तत्वोपेतस्यापि जलादेर्वालुकादावनुप्रवेशो न निषिध्यते आत्मनस्तु तद्रहितस्यापि शरीरेऽसौ निषिद्ध्यते इति महत्साहसम्। सावयवत्वकार्यत्वे अप्यात्मनः कथंचिदिष्टे एव, असङ्ख्येयप्रदेशात्मकत्वेन सावयवत्वात्, प्रदेशेष्वप्यवयवव्यवहारात्, दशाद्यवच्छेदेन पटोत्पत्तिवारणायावच्छेदकतासम्बन्धेन द्रव्यत्वावच्छिन्नं प्रति तादात्म्येन देशत्वेन हेतुतया देशत्वस्य विलक्षणस्य सिद्धेः,

असर्वगतस्यापीति, यद्यात्माऽसर्वगतस्स्यात् तदा रूपादिमत्त्वलक्षणमूर्त्तत्ववान् स्याद् घटवदित्यापादनं त्वयुक्तमेव, मनसोऽणुत्वेन तत्रासर्वगतत्वस्याऽऽपादकस्य सत्त्वेप्युक्तमूर्त्तत्वस्यापाद्यस्याभावेन व्यभिचारात्तयोर्व्याप्यभावादित्याह तद्वदेवेति, तद्वत् मनोवत्, तादृशेति रूपादिमत्त्वलक्षणेत्यर्थः। तद्रहितस्यापि तादृशमूर्त्तत्वविकलस्यापि, आत्मनि सावयवत्वस्य कार्यत्वस्य चापादनं यत्पूर्वं कृतं तदिष्टापत्त्या परिहरति सावयवत्वकार्यत्वे इति।

इत एवात्मादीनां देशितया कार्यत्वसिद्धौ तद्व्यावृत्तकार्यत्वस्य देशकार्यतावच्छेदककोटौ प्रवेशेऽप्रामाणिकगौरवापत्तेः, नन्वात्मनः कार्यत्वे घटादिवत् प्राक्प्रसिद्धसमानजातीयावयवारभ्यत्वप्रसक्तिः, अवयवा ह्यवयविनमारभन्ते यथा तन्तवः पटमिति चेत्, न, न खलु घटादावपि कार्ये प्राक्प्रसिद्धसमानजातीयकपालसंयोगारभ्यत्वं दृष्टं, कुम्भकारादिव्यापारान्वितात् मृत्पिण्डात् प्रथममेव तदुत्पत्तिप्रतीतेः, द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वं, तच्च बहिरिवान्तरप्यनुभूयत एवेत्यतोऽपि स्यात् कार्य एव, न च पटादौ स्वावयवसंयोगपूर्वककार्यत्वोपलम्भात् सर्वत्र तथाभावो युक्तः, काष्ठे लोहलेख्यत्वोपलम्भाद्वज्रेऽपि तथाभावाऽऽ-

प्रथमसमय एव सञ्जाताविरतसम्यग्दृष्टेर्दर्शनावरणषट्कं बध्नतः षट्प्रकृत्यात्मकोऽवक्तव्यबन्धः। तथा नाम्नि–नामकर्मणि त्रयोऽवक्तव्या–अवक्तव्यबन्धास्तद्यथा–एका १ एकोनत्रिंशत् २९ त्रिंशत् ३०। तत्र यदोपशान्तमोहगुणस्थानकादद्धाक्षयेण प्रतिपातमारभते, तदा सूक्ष्मसम्पराये प्रविशतः प्रथमसमय एव यशःकीर्तिमेकां बध्नत एकप्रकृत्यात्मकोऽवक्तव्यबन्धः, यदा तु भवक्षयेण प्रतिपत्य देवत्वेनोत्पद्यते, तदा मनुष्यगतिप्रायोग्यमेकोनत्रिंशतं बध्नतः प्रथमसमय एकोनत्रिंशत्प्रकृत्यात्मकोऽवक्तव्यबन्धः, तामेवैकोनत्रिंशतं तीर्थकरनामसहितां बध्नतस्त्रिंशत्प्रकृत्यात्मकः। तथा मोहे मोहनीये द्वाववक्तव्यबन्धौ, तद्यथा–एका सप्तदश च, एकप्रकृत्यात्मकः सप्तदशप्रकृत्यात्मकश्चेत्यर्थः। तत्राद्धाक्षयेणोपशान्तमोहगुणस्थानकात्प्रतिपाते सूक्ष्मसम्परायं गुणस्थानकं प्रविशतः सञ्ज्वलनलोभं बध्नतः प्रथमसमये सञ्ज्वलनलोभरूपैकप्रकृत्यात्मकः, भवक्षयेण च प्रतिपत्य दिवं गतोऽविरतसम्यग्दृष्टिः प्रथमसमये एव जायते, ततोऽविरतसम्यग्दर्शनप्रत्ययाः सप्तदशप्रकृतीर्बध्नतस्तस्य प्रथमसमये सप्तदशप्रकृत्यात्मकोऽवक्तव्यबन्धः। तथा तृतीयवर्जानां वेदनीयवर्जानां शेषाणां ज्ञानावरणीयान्तरायायुर्गोत्ररूपाणां चतुर्णां कर्मणामेकैकोऽवक्तव्यबन्धः। तत्र ज्ञानावरणस्यान्तरायस्य चोपशान्तमोहगुणस्थानकादद्धाक्षयेण भवक्षयेण वा प्रतिपाते पञ्च पञ्च प्रकृत्यात्मकः प्रथमसमये एकैकोऽवक्तव्यबन्धः। उपशान्तमोहगुणस्थानकादेव द्विधापि प्रतिपतितस्योच्चैर्गोत्रं बध्नतः प्रथमसमय उच्चैर्गोत्रप्रकृत्यात्मक एको गोत्रस्याऽवक्तव्यबन्धः। आयुषो बन्धारम्भे तां तामायुःप्रकृतिं बध्नतः प्रथमसमये तत्तदेकप्रकृत्यात्मक एकोऽवक्तव्यबन्धः। वेदनीयस्य त्ववक्तव्यबन्धः सर्वथाऽनुपपन्नो, वेदनीयस्य बन्धव्यवच्छेदे भूयो बन्धासम्भवात्, तथाहि–वेदनीयस्य बन्धव्यवच्छेदोऽयोगित्वावस्थायां, न च ततः प्रतिपातो येन भूयोऽपि बन्धारम्भसम्भवः, ततः सर्वथा बन्धव्यवच्छेदे भूयो बन्धानारम्भादवक्तव्यबन्धो वेदनीयस्य न सम्भवतीति तद्वर्जनम्॥१७॥

अवक्तव्य बन्धः

तच्छरीरसन्तानोपहितेति, तद्द्रव्यत्वेन तदात्मद्रव्यत्वेन, तस्य तदात्मनः। तज्जातीयोत्पत्तिः छिन्नशरीरावयवसजातीयावयवोत्पत्तिः, छिन्नावयवकम्पोपलब्ध्यन्यथानुपपत्त्या कतिपयात्मप्रदेशानां छेदस्य छिन्नात्मप्रदेशानामेकान्तच्छिन्नत्वाभ्युपगमे देहसम्बद्धात्मप्रदेशेष्वनुप्रवेशो न स्यादिति तत्रात्मान्तरत्वप्रसक्तिस्स्यादिति हेतोः पद्मनालतन्तुवत् शरीरसम्बद्धात्मप्रदेशसम्बद्धत्वादच्छेदस्य चाभ्युपगमात्, अदृष्टनिमित्तकं सङ्घट्टनमप्यविरुद्धम्, उत्तरकालं छिन्नावयवकम्पानुपलब्धेः, न च ते तत्रैव नष्टा इति वाच्यम्, नित्यत्वात्तेषाम्, कथञ्चिदनित्यत्वञ्च सङ्कोचविकाशभावमात्रेण तथा तथा परिणमनापेक्षया, नतु न्यूनाधिकभावेनोत्पादविनाशापेक्षया, प्रदेशानां नियतसङ्ख्यत्वात्, न च ते सक्रियत्वेनान्यत्र गता इत्यपि वाच्यम्, अन्येषामपि तैस्सह गमनं स्यात् नित्यमविष्वग्भावेन संयोगाभ्युपगमादित्याशयेनाह पद्मनालतन्तुवदच्छेदस्यापीति। एतत्तत्त्वं सविस्तरमस्मत्कृतस्याद्वादबिन्दुतो विशेषार्थिनाऽवसेयम्,

अत एव न छिन्नावयवानामात्मप्रदेशानुप्रवेशेन पृथगात्मकताप्रसङ्गः, प्रविभक्तप्रदेशत्वस्यैव पृथक्त्वलक्षणत्वात्, न चात्रात्मप्रदेशाः प्रविभक्ताः, शृङ्खलावयवन्यायेन परस्पराजहद्वृत्तित्वात्, अवस्थाभेदेनावस्थावच्छेदस्तु नात्यन्तभेदनियतः, उत्फणविफणावस्थसर्पवदिति न किञ्चिदेतत् ॥७२॥ तस्मान्नोक्तदोषोपनिपातोऽव्यापकत्ववादे, प्रत्युत व्यापकत्ववाद एव तद्दुर्वारतेत्यभिप्रायवान् आह—

अत एव पद्मनालतन्तुवदऽच्छेदस्याभ्युपगमादेव ॥७२॥ त्रिसप्ततितममारभ्य षट्सप्ततितमपर्यन्तं पद्यचतुष्टयं युगपदवतारयति तस्मादित्यादिना,

७३–७४ । एतेषु च केचन भूयो भूयः सम्भवन्ति, तैर्नात्र प्रयोजनम्, तुशब्दात् यत्रोत्तरं नाभिहितं तत्रैकोत्तरा राशयो ग्राह्याः । तथाशब्द इति यथा बन्धे तथोदयेष्वपि स्वबुद्ध्या ज्ञेयम् । ज्ञानान्तरायायुर्वेदनीयगोत्राणामेकैकमुदयस्थानं । दर्शनावरणस्य द्वे–चतुः पञ्च वा, नव मोहनीयस्यैकद्विकचतुःपञ्चषट्सप्ताष्टनवदशेति । नाम्नो द्वादशोदयस्थानानि–अष्ट नव विंशतिरेकविंशतिः चतुर्विंशतिरतः एकवृद्ध्या यावदेकत्रिंशत्, तावन्नेतव्यानि, ८–९–२०–२१–२४–२५–२६–२७–२८–२९–३०–३१ । अवस्थितोदयाः सर्वत्र स्थानतुल्याः, अव्यक्तोदया मोहनीयस्यैव नान्येषां तेऽपि पञ्च भवन्ति, एकपद् सप्ताष्टौ नव इति । तत्रैकः लोभोदय उपशान्तात्पततः, शेपास्तस्यैवामरगतौ त्रिकषायपुंयुग्मभयजुगुप्सासम्यक्त्वोदयेष्विति । दर्शनावरणे भूताकारोऽल्पतरश्चैकः, तौ मोहनीयेऽष्टावष्टौ । नाम्नि अष्टौ भूताकारोदयाः, यतोऽष्टौ भूत्वा न नवोदयो न च तस्मादपि विंशत्यादिः, तस्मादपि नैकविंशतिः, तदादिका अष्टौ भवन्ति संसारिणां समुद्घाते (च । अल्पतरास्तु नव भवन्ति, नवोदयान्नाष्टकोदयः, नाप्येकविंशत्युदयाद्विंशत्युदयः,) पञ्चविंशतिचतुर्विंशत्युदयौ नापचये भवतः, ततस्तौ संसारिष्वपचये नैव भवतः, तीर्थङ्करायोगिप्रतिपत्तौ स्वरादुच्छ्वासात् पराघातविहायोगतिभ्यां प्रत्येकोपघातौदारिकद्विकसंस्थानसंहननेभ्यो ध्रुवोदयिभ्यो निरोधाद् भावयेदिति ।

(मलय०)—तदेवमुक्ताः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां बन्धस्थानेषु भूयस्कारादयः । सम्प्रति सामान्यतः सर्वोत्तरप्रकृतीनां बन्धस्थानेषु वक्तव्याः, तत्र प्रथमतः सामान्येन सर्वोत्तरप्रकृतीनां बन्धस्थानानि प्रतिपादयति—सामान्यतः सर्वोत्तरप्रकृतीनां बन्धस्थानान्येकोनत्रिंशत्, तद्यथा–एका, सप्तदश, तत ऊर्ध्वं 'इगुत्तर'त्ति–एकोत्तराणि बन्धस्थानानि तावद्वक्तव्यानि यावद् द्वाविंशतिः, तद्यथा–अष्टादश, एकोनविंशतिः, विंशतिः, एकविंशतिः, द्वाविंशतिः, तथा षड्विंशतिः, 'तह' त्ति–तथा तेनैव प्रकारेणैकोत्तरवृद्धिरू-

॥२०२॥

नाह पाटितानां शतधा च्छिन्नानामिति। तावदवच्छिन्नेति भोगायतनशतावच्छिन्नेत्यर्थः। इन्द्रियमनस्संयोगलाभाय विशेषणमाह स्मृत्यजनकेति, शास्त्रेति "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्"इत्यादिशास्त्रेत्यर्थः। द्रव्यान्तरत्वादिति तच्छरीरभिन्नत्वादित्यर्थः, तथाच छिन्नावयवेषु तादात्म्येन तच्छरीररूपकारणाऽभावेऽपि तत्रावच्छेदकतासम्बन्धेन भोगकार्योत्पत्तेर्व्यतिरेकव्यभिचारः। तच्छरीरप्राणमनोयोगत्वादिनाऽपीति अत्र हेतुता न व्यवस्थितेत्यस्यानुकर्षः, उभयत्र हेतुमाह उक्तस्थले व्यभिचारादिति छिन्नावयवस्थले व्यतिरेकव्यभिचारादित्यर्थः। न च कारणतायाः शरीरान्तरेष्वपि सत्त्वेन तत्र च तच्छरीरत्वस्याभावेन तस्य तस्या न्यूनदेशवृत्तित्वेनानवच्छेदकत्वान्मास्तु तद्रूपेण कारणत्वम्, तच्छरीरारम्भकपरमाण्वारब्धत्वादिना तु तत्स्यादेव, शरीरान्तराणामपि तच्छरीरारम्भकपरमाण्वारब्धत्वेन तस्य कारणताया अन्यूनानतिप्रसक्तत्वेनावच्छेदकत्वसंभवादुक्तदोषाऽभावादिति वाच्यम्, उक्तरूपेण कार्यकारणभावसम्भवेऽपि तज्जन्मोपभोग्यतदात्मवृत्तिभोगत्वावच्छिन्नं प्रति मनसो नित्याणुरूपत्वेनाभ्युपगमाद्रूपान्तरेण कारणत्वाभावात्तच्छरीरप्राणमनोयोगत्वेनैव कारणत्वं वाच्यम्, तथाच छिन्नावयवस्थले छिन्नावयवानां तच्छरीरभिन्नत्वात्तत्र तच्छरीरप्राणमनोयोगाऽभावेपि तज्जन्मोपभोग्यतदात्मवृत्तिभोगकार्योत्पत्तेर्व्यतिरेकव्यभिचारानुद्धारादित्याशङ्कोत्तराभ्यामाह—

न च तच्छरीरारम्भकपरमाण्वारब्धत्वादिना हेतुत्वात् न व्यभिचार इति वाच्यम्, मनसि तथा वक्तुमशक्यत्वात्, तस्य परैर्नित्याणुत्वाभ्युपगमात्। न च छिन्नाच्छिन्नावयवानुप्रविष्टेषु मनःस्वेकं वैजात्यमस्ति, छिन्नावयवविनिर्गतनानामनोयोगादच्छिन्नावयवे भूतावेशप्रसङ्गात्। न च भिन्नभिन्नभोगायतनावच्छेदेनैव विजातीयमनसां भोगविशेषहेतुत्वात् नानुपपत्तिरिति वाच्यम्, विशिष्य गुरुतरकार्यकारणभावकल्पनं विना

एकादशः, ततस्तस्मिन्नेवापूर्वकरणगुणस्थानकेऽधस्तादवतरतो नामत्रिंशता सह निद्राद्विकं बध्नतः सप्तपञ्चाशत्प्रकृत्यात्मको द्वादशो भूयस्कारः, एकत्रिंशता सह निद्राद्विकं बध्नतोऽष्टपञ्चाशत्प्रकृत्यात्मकस्त्रयोदशः, ततोऽप्रमत्तगुणस्थानके समागतस्य तामेवाष्टपञ्चाशतं देवायुषा सह बध्नत एकोनषष्ठिप्रकृत्यात्मकश्चतुर्दशः, ततो देशविरतिगुणस्थानकमागतस्य नाम्नोऽष्टाविंशतिबन्धकस्य प्रत्याख्यानावरणकषायचतुष्टयमधिकं बध्नतः षष्ठिप्रकृत्यात्मकः पञ्चदशो भूयस्कारः, तस्यैव नाम्नः एकोनत्रिंशतं बध्नत एकषष्ठिप्रकृत्यात्मकः षोडशः, ततोऽविरतसम्यग्दृष्टिगुणस्थानमागतस्य नाम्नोऽष्टाविंशतिबन्धकस्यायुरबन्धेऽप्रत्याख्यानकषायचतुष्टयस्याधिकस्य बन्धे त्रिषष्ठिप्रकृत्यात्मकः सप्तदशो भूयस्कारः, इह प्रकारान्तरासम्भवात् द्विषष्ठिप्रकृत्यात्मकबन्धस्थानं सर्वथा न सम्भवतीति तदात्मको भूयस्कारो न लभ्यते, ततस्तस्यैवाविरतसम्यग्दृष्टेर्नाम्न एकोनत्रिंशतं बध्नतश्चतुःषष्ठिप्रकृत्यात्मकोऽष्टादशो भूयस्कारः, तस्यैव मनुष्यगतिप्रायोग्यां त्रिंशतं बध्नतः पञ्चषष्ठिप्रकृत्यात्मक एकोनविंशतितमः, तस्यैवायुर्बन्धकस्य षट्षष्ठिप्रकृत्यात्मको विंशतितमः, ततो मिथ्यात्वं गतस्य नाम्नस्त्रयोविंशतिं बध्नत आयुर्बन्धकस्य मिथ्यात्वानन्तानुबन्धिचतुष्टयस्त्यानर्द्धित्रिकमुपचिन्वानस्य सप्तषष्ठिप्रकृत्यात्मक एकविंशतितमः, तस्यैव पञ्चविंशतिबन्धकस्यायुरबन्धेऽष्टषष्ठिप्रकृत्यात्मको द्वाविंशतितमः, तस्यैव पञ्चविंशतिबन्धकस्यायुषो बन्धे एकोनसप्ततिप्रकृत्यात्मकस्त्रयोविंशतितमः, तस्यैव मिथ्यादृष्टेः षड्विंशतिबन्धकस्यायुषो बन्धे सप्ततिप्रकृत्यात्मकश्चतुर्विंशतितमः, तस्यैव नाम्नोऽष्टाविंशतिबन्धकस्यायुरबध्नत एकसप्ततिप्रकृत्यात्मकः पञ्चविंशतितमः, तस्यैवायुर्बन्धकस्य द्वासप्ततिप्रकृत्यात्मकः षड्विंशतितमः, तस्यैव मिथ्यादृष्टेरेकोनत्रिंशतमायुश्च बध्नतस्त्रिसप्ततिप्रकृत्यात्मकः सप्तविंशतितमः, तस्यैव नाम्नस्त्रिंशतं बध्नत आयुर्बन्धकस्य चतुःसप्ततिप्रकृत्यात्मकोऽष्टाविंशतितमो भूयस्कारः । इह केचन भूयस्कारा अन्यतश्च बन्धस्थानाद्भूयो भूयः संभवन्ति ते नात्राधिक्रियन्ते, एकवारं गृहीतत्वात्, ततो-

प्रत्यंशमेव बहुभोगसमर्थने त्विति पद्यं विवृणोति—

अथ प्रत्यंशं प्रत्यवयवं छिन्नाच्छिन्ननानावयवस्थलेऽवच्छेदकान्तरसंवलितावच्छेदकसमाजमहिम्ना नानारूपवदवयवारब्धेऽवयविनि नानारूपवन्नानाभोगा आत्मनि समर्थ्यन्ते, अवच्छेदकभेदेन विरोधपरिहारादवच्छेदकान्तरसंवलनं च स्वविजातीयत्वे सति सम्बन्धविशेषेण स्वाश्रयाश्रितत्वप्रत्यासत्त्या सामानाधिकरण्यं तेन नैकावच्छेदेन नानाभोगाऽपत्तिरिति चेत्,

अथेत्यादिना, अवच्छेदकान्तरसंवलितावच्छेदकसमाजमहिम्नेति, अवच्छेदकान्तरं छिन्नावयवः, तत्संवलितो योऽवच्छेदकः सोऽच्छिन्नावयवः, एवमवच्छेदकान्तरमच्छिन्नावयवः, तत्संवलितोऽवच्छेदकश्छिन्नावयवः, तत्समाजमहिम्ना तदवच्छेदेनेत्यर्थः, अस्य नानाभोगा आत्मनि समर्थ्यन्ते इत्यनेनान्वयः, तथा च यथैकस्मिन्नवयविनि विजातीयनानारूपवदवयवावच्छेदेन नव्यमते नानारूपाणामुत्पत्तिः, तथैकस्मिन्नप्यात्मनि छिन्नाच्छिन्नावयवावच्छेदेन नानाभोगानां सम्भवः, अवच्छेदकान्तरसंवलितोक्त्या च न मैत्रशरीरावयवावच्छेदेन चैत्रस्योपभोगः, स्वविजातीयत्वे सति स्वसामानाधिकरण्यं हि संवलितत्वम्, तत्र सामानाधिकरण्यघटकं स्वनिष्ठनिरूपकत्वं स्वाधिकरणनिरूपितवृत्तित्वञ्चोभयं स्वाश्रयाश्रितत्वप्रत्यासत्त्या ग्राह्यम्, तत्रापि स्वाश्रयत्वं स्वसमवायित्वलक्षणसम्बन्धविशेषावच्छिन्नं स्वाश्रयाश्रितत्वञ्चावच्छेद्यतात्मकसम्बन्धविशेषाऽवच्छिन्नं ग्राह्यम्, न चैतत् चैत्रशरीरावयवसामानाधिकरण्यं मैत्रशरीरावयवे, चैत्रशरीरावयवस्य स्वाश्रयं चैत्रशरीरं, तदाश्रितत्वं सम्बन्धविशेषेण चैत्रात्मन्येवेति स्वाश्रयाश्रितत्वसम्बन्धेन चैत्रशरीरावयवाधिकरणं चैत्रात्मा तत्र स्वाश्रयाश्रितत्वसम्बन्धेन मैत्रशरीरावयवस्य मैत्रात्मन्येव सत्त्वेनाऽवृत्तित्वात्, स्वाश्रयाश्रित-

तिपतति, तदा स प्रथमसमय एवाविरतसम्यग्दृष्टिरुपजायते, स च यदि क्षायिकसम्यग्दृष्टिः न च भयजुगुप्सा च तस्योदयमायाति, तदा तस्याप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनलक्षणक्रोधादीनामन्यतमे त्रयः क्रोधादिकाः पुरुषवेदो हास्यरतियुगलमिति षट् प्रकृतय उदये प्राप्यन्ते, इति प्रथमसमये षट्प्रकृत्यात्मकोऽवक्तव्योदयः, यदि पुनः स क्षायिकसम्यग्दृष्टिर्न भवति, ततः प्रथमसमय एव क्षायोपशमिकं सम्यक्त्वं वेदयते, यदि वा क्षायिकसम्यग्दृष्टिरपि सन् भयं जुगुप्सां वाधिकामनुभवति, तदा सप्तप्रकृत्यात्मकोऽवक्तव्योदयः, यदा तु क्षायिकसम्यक्त्वाभावे क्षायोपशमिकसम्यक्त्वभययोः क्षायोपशमिकसम्यक्त्वजुगुप्सयोर्वा, अथवा क्षायिकसम्यग्दृष्टेरपि सतो भयजुगुप्सयोरुदयो भवति, तदाऽष्टप्रकृत्यात्मकोऽवक्तव्योदयः, यदि पुनः क्षायिकसम्यक्त्वाभावे क्षायोपशमिकसम्यक्त्वभयजुगुप्सानामुदयस्तर्हि नवप्रकृत्यात्मक इति । नाम्न उदयस्थानानि द्वादश, तद्यथा–विंशतिः, एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, नव, अष्टौ च । २०, २१, २४, २५, २६, २७, २८, २९, ३०, ३१, ९, ८ । एतान्यपि चाग्रे स्वयमेव वक्ष्यतीति नेह विव्रियन्ते, पुनरुक्त्यापत्तितो ग्रन्थगौरवदोषप्रसङ्गात् । अत्राष्टौ भूयस्कारोदयाः, यतो नाष्टोदयान्नवोदयमधिगच्छति, नापि नवोदयाद्विंशत्युदयं, न चापि विंशत्युदयादेकविंशतिं, किन्त्वेकविंशत्युदयस्थानादारभ्य यथायोगं संसारे समुद्घाते वा चतुर्विंशत्यादीन्युदयस्थानान्यधिरोहति, ततोऽष्टावेव भूयस्कारोदयाः । अल्पतरोदया नव, कथं? इति चेत्, उच्यते–इह न नवकोदयादष्टकोदयं याति, नाप्येकविंशत्युदयाद्विंशत्युदयं, न चापि पञ्चविंशत्युदयस्थानाच्चतुर्विंशत्युदयस्थानं, चतुर्विंशत्युदयाद्धि संसारी पञ्चविंशत्युदयमाविशति न तु जातुचिदपि पञ्चविंशत्युदयाच्चतुर्विंशत्युदयं, ततो नवसंख्या एवाल्पतरोदयाः, ते च तीर्थङ्करातीर्थङ्करयोः समुद्घातप्रतिपत्तिमयोगित्वप्रतिपत्तिं चाधिकृत्य प्राप्यन्ते । तत्र स्वभावस्थस्यातीर्थकृतो मनुष्यगतिः,

अवयववृत्तिजातिमात्रापेक्षया वैजात्यस्य ग्रहणे छिन्नाच्छिन्ननानाऽवयवस्थलेऽपि छिन्नाच्छिन्नावयवानां वैजात्यं न स्यादिति भावः। यथा समूहालम्बनप्रत्यक्षं प्रति कारणीभूतानां तत्तद्विषयाणां भिन्नत्वेऽपि तत्तद्विषयावच्छेदेन जायमानमेकमेव तत्, तथैकशरीरावयवानां करचरणादीनां मिथो भिन्नत्वेऽपि तत्तदवच्छेदेनोत्पद्यमानो भोग एक एव, तज्जनकस्यादृष्टस्यैकत्वादिति नासदादिशरीरे एकदा नानाभोगप्रसङ्गः, तत्त्वज्ञानिनस्तु तत्तच्छरीरसाध्यभोगजनकानामदृष्टानां भिन्नत्वादेककालावच्छेदेनापि भिन्नशरीरावच्छेदेन जायमानभोगानां नानात्वमेव, तेषां सर्वेषामेकात्मनि समावेशस्त्ववच्छेदकतासंबन्धेन यद्यत्स्वाधिकरणं भोगायतनं तत्तदवच्छेदेनेति नैकभोगायतनावच्छेदेन भोगस्यापरभोगायतनावच्छिन्नत्वप्रसङ्गः, यथाऽवयविन्यव्याप्यवृत्तिनानारूपवादिमते नानारूपाणां तत्तदवयवावच्छेदेन समागम इत्याशयेनाऽऽशङ्कते नैयायिकः—

अथ नानाविषयावच्छिन्नसमूहालम्बनज्ञानमिवैकत्र शरीरे नानावयवावच्छेदेनोत्पद्यमानोऽपि भोगोऽविरोधादेक एव, एकादृष्टजन्यत्वात्, पृथग्भोगायतनजन्याः पुनर्नैव भोगाः, एकत्र समावेशस्तेषामवच्छेदभेदाच्चित्रावयविनीव नीलादीनां, न च सव्यापारदानादिसत्त्वेऽपि मनुष्यशरीरसत्त्वे देवशरीरानुत्पादादेकभोगायतनस्य भोगायतनान्तरप्रतिबन्धकत्वात् नैवमिति वाच्यम्, तद्वृत्तिलाभकालापेक्षतददृष्टस्य देवादिशरीरहेतुत्वेनोक्तप्रतिबन्धकत्वकल्पने मानाभावादिति चेत्, न, तथापि विपक्षोदयप्रकृतीनां विरुद्धवृत्तिलाभकालत्वेन युगपन्नानाभोगायतनजन्यभोगासम्भवात्, अन्यथा मनुष्यशरीरसत्त्वे एव कुतो न देवशरीरजनकादृष्टवृत्तिलाभ इत्यस्य प्रष्टव्यत्वापत्तेः,

ऽयोगित्वावस्थाचरमसमये, न च ततः प्रतिपात इति कृत्वा ॥१८॥

सामान्योत्तरप्रकृतीनामुदयस्थानान्याह—

**एक्कार बार तिचउक्कवीसिगुणतीसओ य चउतीसा । चउआला गुणसट्ठी, उदयट्ठाणाइं छव्वीसं ॥१९॥**

(स्वो०)—एकादश द्वादश त्रयोविंशतिः चतुर्विंशतिः एकोनत्रिंशतो यावच्चतुस्त्रिंशत् चतुश्चत्वारिंशतो यावदेकोनषष्ठिरेवमुदयस्थानानि षड्विंशतिः, ११-१२-२३-२४-२९-३०-३१-३२-३३-३४-४४-४५-४६-४७-४८-४९-५०-५१-५२-५३-५४ ५५-५६-५७-५८-५९। अत्राप्यव्यक्तोदयो नास्ति, यतो (नो)ऽनुदयः, अवस्थितोदयाः षड्विंशतिः, अन्तरालगतौ समुद्घाते च समयद्वयोपलब्धेः, भूताकारा एकविंशतिरल्पतराश्चतुर्विंशतिः ॥१९॥

(मलय०)—तदेवमुक्ताः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनामुदयस्थानेषु भूयस्कारादयः। सम्प्रति सामान्यतः सर्वोत्तरप्रकृतीनामुदयस्थानेषु वक्तव्याः, तत्र प्रथमत उदयस्थानान्याह–सामान्यतः सर्वोत्तरप्रकृतीनामुदयस्थानानि षड्विंशतिः, तद्यथा–एकादश, द्वादश 'तिचउक्कवीस' त्ति–त्रयोविंशतिश्चतुर्विंशतिः, तथैकोनत्रिंशत आरभ्य तावदुदयस्थानानि क्रमेण वक्तव्यानि यावच्चतुस्त्रिंशत्, तद्यथा–एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, द्वात्रिंशत्, त्रयस्त्रिंशत्, चतुस्त्रिंशत्, तथा चतुश्चत्वारिंशत आरभ्य क्रमेणोदयस्थानानि तावद्वदेत् यावदेकोनषष्ठिः, तद्यथा–चतुश्चत्वारिंशत्, पञ्चचत्वारिंशत्, षट्चत्वारिंशत्, सप्तचत्वारिंशत्, अष्टचत्वारिंशत्, एकोनपञ्चाशत्, पञ्चाशत्, एकपञ्चाशत्, द्विपञ्चाशत्, त्रिपञ्चाशत्, चतुःपञ्चाशत्, पञ्चपञ्चाशत्, षट्पञ्चाशत्, सप्तपञ्चाशत्, अष्टपञ्चाशत्, एकोनषष्ठिः। ११, १२, २३, २४, २९, ३०, ३१, ३२, ३३, ३४, ४४, ४५, ४६, ४७, ४८, ४९, ५०, ५१, ५२, ५३, ५४,

सव्वोत्तर प्रकृतीनामुदयस्थानेषु भूयस्कारादयः

ऽनद्भूतिकत्व प्रमाणस्य मृग्यत्वात्।

मनुष्यस्यापीति, इष्टेन यागादिना, पूर्तेन तडागादिना। नानादानेति अङ्गक्रियातोऽङ्गापूर्वमुत्पद्यते अङ्गक्रियासहकृतया प्रधानक्रियया च प्रधानापूर्वमुत्पद्यते, ताभ्यामपूर्वाभ्यां च दक्षिणादानाद्युत्तरक्रियाजनिताऽपूर्वसहकृताभ्यां फलपर्यन्तस्थायिपरमापूर्वमुत्पद्यते, तेनैव परमापूर्वेण देवशरीरमुत्पाद्य तत्साध्यभोगो जन्यते, अतो न मनुष्यशरीरकाले देवशरीरसाध्यभोगसंभव इत्यर्थः, कलिकापूर्वेति इदं प्रधानापूर्वस्यैव नामान्तरं, नैयायिकश्शङ्कते अथेति, भवधारणीयैक्य इति आभवान्तं मनुष्योऽयं देवोऽयमित्यादिव्यवहारनिबंधनमाऽऽभवान्तसत्ताकं यच्छरीरं तद्भवधारणीयं तस्यैक्य इत्यर्थः। आन्तरालिकशरीरभेदो भवभेदप्रयोजक इति जैनैरपि नाभ्युपगतमित्यावेदयितुं तत्र दृष्टान्तमाह भवतामिति जैनानामित्यर्थः। समाधत्ते, न, विरुद्ध भोगजनकानामिति, भवधारणीयैक्यमपि भवन्मते न सम्भवतीत्याह—

भवधारणीयैक्ये भवैक्यं तदैक्ये च तदैक्यमित्यन्योन्याश्रयाच्च, अस्माकं तु गतिजात्यादिनिधत्तायुःकर्मविपाकोदयजनितमनुष्यादिपर्यायात्मकभवभेदस्य स्वाविष्वग्भूतभोगायतनतया भोगावच्छेदासाङ्कर्यस्य च नानुपपत्तिरात्मनोऽव्यापकत्ववादे, इयतैव तवागमिकैस्त्वत्सिद्धान्तवेदिभिः,परेषां नैयायिकानां, योगिषु कायव्यूहोऽपि कायव्यूहाभ्युपगमोऽपि निरस्तः। न हि परिच्छिन्नस्यात्मनो देहान्तरसञ्चारो जन्मपदार्थः परैरिष्यते किन्त्ववस्थितस्यैव देहान्तरसम्बन्धः, तथा च योगिनामेकदा नानाकर्मफलोपभोगाय तुरङ्गकुरङ्गविहङ्गमतङ्गजशम्बरशूकरयूककिरातशृगालविडालादिशरीरपरिग्रहाभ्युपगमे एकत्र भवे भवसहस्रसङ्करस्य दुर्वारत्वात्।

स्थिरास्थिरे, शुभाशुभे, तैजसकार्मणे, वर्णादिचतुष्टयमिति नाम्न एकविंशतिः, चतुर्णामायुषामन्यतममायुः, द्वयोर्वेदनीययोरन्यतरद् वेदनीयं, द्वयोर्गोत्रयोरेकतरं गोत्रमिति सर्वसंकलनेनाघातिप्रकृतयश्चतुर्विंशतिः, घात्यघातिप्रकृत्युदयसमुदाये सर्वसंख्यया चतुश्चत्वारिंदुदयः। स एव वेदकसम्यक्त्वभयजुगुप्सानामन्यतमप्रक्षेपे पञ्चचत्वारिंशत्, वेदकसम्यक्त्वभययोर्यदि वा वेदकसम्यक्त्वजुगुप्सयोरथवा भयजुगुप्सयोः प्रक्षिप्तयोः षट्चत्वारिंशत्, वेदकसम्यक्त्वभयजुगुप्सासु युगपत्प्रक्षिप्तासु सप्तचत्वारिंशत्, तथा भवस्थस्य क्षायिकसम्यग्दृष्टेर्देवस्य नारकस्य वा प्रागुक्ताश्चतुश्चत्वारिंशत् आनुपूर्वीरहिता शरीरस्थस्य वैक्रियवैक्रियांगोपाङ्गप्रत्येकोपघातसमचतुरस्रसंस्थानप्रक्षेपेऽष्टचत्वारिंशत्, ततो वेदकसम्यक्त्वभयजुगुप्सानामन्यतमैकप्रकृतिप्रक्षेप एकोनपञ्चाशत्, वेदकसम्यक्त्वभययोर्यदि वा वेदकसम्यक्त्वजुगुप्सयोरथवा भयजुगुप्सयोः प्रक्षिप्तयोः पञ्चाशत्, वेदसम्यक्त्वभयजुगुप्सासु युगपत्प्रक्षिप्तास्वेकपञ्चाशत्, यदि वा प्रागुक्तैव चतुश्चत्वारिंशदानुपूर्वीरहिता भवस्थस्य तिरश्चो मनुष्यस्य वा क्षायिकसम्यग्दृष्टेरौदारिकौदारिकाङ्गोपाङ्गसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननोपघातप्रत्येकलक्षणप्रकृतिषट्कप्रक्षेप एकोनपञ्चाशत्, सैव वेदकसम्यक्त्वभयजुगुप्सानामन्यतमैकप्रकृतिप्रक्षेपे पञ्चाशत्, अन्यतमप्रकृतिद्वयप्रक्षेप एकपञ्चाशत्, त्रयस्यापि प्रक्षेपे द्विपञ्चाशत्, निद्राप्रक्षेपे त्रिपञ्चाशत्, अथवा सैव देवनारकयोग्याऽष्टाचत्वारिंशत्, शरीरपर्याप्त्या पर्याप्तस्य देवस्य नारकस्य वा क्षायिकसम्यग्दृष्टेः पराघातान्यतरविहायोगतिप्रक्षेपे पञ्चाशत्, ततो वेदसम्यक्त्वभयजुगुप्सानामन्यतमैकप्रकृतिप्रक्षेप एकपञ्चाशत्, अन्यतमद्वयप्रक्षेपे द्विपञ्चाशत्, त्रयस्यापि प्रक्षेपे त्रिपञ्चाशत्, यदि वा तिरश्चो मनुष्यस्य वा शरीरस्थस्य क्षायिकसम्यग्दृष्टेः प्रागुक्तैकोनपञ्चाशत्, शरीरपर्याप्त्या पर्याप्तस्य पराघातप्रशस्तविहायोगतिप्रक्षेपादेकपञ्चाशत्, ततो वेदकसम्यक्त्वभयजुगुप्सानिद्राणामन्यतमैकप्रकृतिप्रक्षेपाद् द्विपञ्चाशत्, अन्यतमद्वयप्रक्षेपे त्रिपञ्चाशत्, अन्यतमत्रयप्रक्षेपे चतुःपञ्चाशत्,

सर्व्वोत्तरप्रकृतीनामुदयस्थानेषु भूयस्कारादयः

॥२०६॥

रणार्थं भगवतः केवलिसमुद्घातारम्भः, आयुस्तु कर्मत्रयादधिकस्थितिकं स्वभावादेव न भवति, केवलिसमुद्घात एव च परेषां कायव्यूहभ्रमस्तदालम्बनेनैव चेश्वरस्य सर्वावेशप्रतिपादिका श्रुतिरिति युक्तं पश्यामः ॥७४॥

तत्त्वज्ञानजन्येति, समाधत्ते ग्रन्थकारः तर्हीत्यादिना। नैयायिकः पुनरपि शङ्कते—शूकरादीति, शूकरादिशरीरोपभोग्यत्वेनाभ्युपगतस्याप्यदृष्टफलस्य योगिनां स्वायुर्नियतत्वकल्पनेन शूकरादिशरीरमन्तरेणैव तत्त्वज्ञानेन नाश इत्यभ्युपगम्यत इति चेत्, तर्हि लाघवात् तच्छरीराऽनुपभोग्यमेव तत् स्वीक्रियतामित्याशयेन समाधत्ते तर्हि लाघवादिति। अदृष्टचतुष्टयेति वेदनीयनामगोत्रायुःकर्मचतुष्टयेत्यर्थः। केवलिसमुद्घातारम्भ इति, एतत्तत्त्वं स्याद्वादविन्दौ विस्तरतो न्यायप्रभायां चोक्तं तत एवावसेयम्॥७४॥

नात्मा क्रियामुपगतो यदि काययोगः, प्रागेव को न खलु हेतुरदृष्टमेव ॥
आद्ये क्षणेऽभ्यवहृतिः किल कार्मणेन, मिश्रात् ततोऽनु तनुसर्गमिति त्वमोघम् ॥७५॥

नात्मा क्रियामुपगत इति पञ्चसप्ततितमं पद्यं विवृणोति—

तथात्मा यदि न क्रियामुपगतोऽक्रिय एवेत्यर्थः, तदा, प्रागेव शरीरोत्पत्तेरादावेव, काययोगः कायोत्पत्त्यनुकूलः प्रयत्नः को, न कश्चिदेव, तच्छरीरजन्यस्य तदात्मविशेषगुणस्य तदभावेऽभावात्, तथा चादृष्टाकृष्टानामपि परमाणूनामाहारतया ग्रहणस्य शरीरतया परिणमनस्य चाभावे आदित एव शरीरानुत्पत्तौ संसारोच्छेदः। न च शरीरोत्पत्तावदृष्टमेव हेतुर्न तु यत्न इति वाच्यम्, शरीरोत्पत्त्यनन्तरमप्याहारादिपरिणामस्य श्वासप्रश्वासादिसन्तानस्य च तत एवोत्पत्तौ जीवनयोनियत्नोच्छेदापत्तेः,

दिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलं, भयं,जुगुप्सा, मिथ्यात्वमिति मोहनीयदशकोदयः, तत्र वर्त्तमानस्य तिर्यग्गतिः पञ्चेन्द्रियजातिस्त्रसनाम, बादरनाम, पर्याप्तकनाम, सुभगदुर्भगयोरेकतरं, आदेयानादेययोरेकतरं, यशःकीर्त्ययशःकीर्त्योरेकतरा, वर्णादिचतुष्टयागुरुलघुस्थिरास्थिरशुभाशुभतैजकार्मणनिर्माणौदारिकद्विकान्यतमसंहननान्यतमसंस्थानप्रत्येकोपघातपराघातप्रशस्ताप्रशस्तान्यतरविहायोगतिसुखरदुःस्वरान्यततरोच्छ्वासोद्योतरूपनामसत्कैकत्रिंशत्प्रकृत्युदयसहितस्य ज्ञानावरपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयान्यतमनिद्रोदयोपेतस्यान्यतरवेदनीयान्यतमायुरन्यतरगोत्राण्यनुभवत एकोनषष्ठिप्रकृत्यात्मकमुदयस्थानं, अमीषां चोदयस्थानानां मध्ये कानिचिदुदयस्थानानि सासादनमिश्रदेशविरतादिगतान्यन्यथा प्राप्यन्ते, तानि वक्ष्यमाणं सप्ततिकासंग्रहं सम्यक् परिभाव्य स्वयमेव वक्तव्यानि, इह तूदयस्थानसम्भवमात्रप्रदर्शनेन प्रयोजनं, तच्च प्रकृतमित्यलं विस्तरेण । अत्रावक्तव्योदयो न घटते, सर्वप्रकृत्युदयव्यवच्छेदे भूय उदयासम्भवात् । अवस्थितोदयाः षड्विंशतिः, "सर्वत्रावस्थितोदयाः स्थानसमाः" इति वचनप्रामाण्यात् । अथापान्तरालगतौ समुद्घाते वा यान्युदयस्थानान्यधिरोहति, तेषु कथमवस्थितोदयसम्भवः ? नैषदोषः, तत्रापि समयद्वयत्रयावस्थानोपपत्तेः । भूयस्कारोदया एकविंशतिरल्पतरोदयाश्चतुर्विंशतिः ॥१९॥

सर्वोत्तर प्रकृतीनामुदयस्थानेषु भूयस्कारादयः

यत आह—

**भूयप्पयरा इगिचउवीसं जन्नेइ केवली छउमं। अजओ य केवलित्तं तित्थयरियरा व अन्नोन्नं ॥२०॥**

(स्वो०)—प्रभूताकारा एकविंशतिरल्पतराश्चतुर्विंशतिः, यतः केवली छद्मस्थोदयेषु न याति, न वाऽतीर्थकरस्तीर्थङ्करोदयेऽप्यतः पञ्च प्रभूततरा न भवन्ति । 'अयतः' अविरतो न च केवलित्वं याति, चतुश्चत्वारिंशदुदयात् केवल्युदयेष्विति भावः, तीर्थङ्करोदयोऽप्यतीर्थ-

स्यापि सविषयकत्वमस्त्विति भावः। नन्वात्मनि परिस्पन्दे किं प्रमाणमित्यत आह—

आकाशादिव्यावृत्तोऽन्योन्यानुप्रवेशरूपः शरीरसंयोग एव चात्मनि क्रियामनुमापयति, तस्योभयकर्मजत्वात्, विशिष्टत्वादेव च तस्यादृष्टाद्यप्रवेशेन क्रियाफलसामानाधिकरण्यनियामकत्वं, तेन तदनुरुद्धबहुतरकार्यकारणभावान्तरकल्पनागौरवं परिहृतं भवति, तस्मादाद्ये क्षणे कार्मणकाययोगाख्येनात्मपरिस्पन्देन, अभ्यवहृतिराहारग्रहणं, तच्छक्तेरेकक्षण एव निष्पन्नत्वेनाह्रियमाणस्याहृतत्वात्, ततोऽनु तनुसर्गं शरीरपर्याप्तिनिष्पत्तिं यावत्, मिश्रादौदारिकमिश्रात् काययोगादभ्यवहृतिः, ततश्च निष्पन्नायां शरीरपर्याप्तौ तेन तमालम्ब्यौदारिककाययोगेन लोमाहारकवलाहारान्यतरग्रहणमिति तु भवतो वचोऽमोघं, शरीरनिष्पत्तेः पूर्वं पश्चादपि चात्मनः सक्रियत्व एवाहारित्वोपपत्तेः, तदनुपपत्तौ च परेषां संसाराभाव इति। तदिदमुक्तं पारमर्षे 'जोएण कम्मएणं, आहारेई अणंतरं जीवो ॥ तेण परं मीसेणं, जाव सरीरस्स णिप्फत्तित्ति ॥१॥ निष्पन्ने च शरीरे औदारिकादिकाययोगेनाहारग्रहणं प्रतीतमेव ॥७५॥

आकाशादीति, क्षीरे नीरस्य नीरे च क्षीरस्य प्रतिप्रदेशं सम्मिश्रणेनान्योन्यानुस्यूतसंयोगस्तेन शरीरेण सहात्मनस्तथात्मकसंयोगस्योभयक्रियामन्तरेणानुपपत्तेस्तेन कार्यलिङ्गेन कारणीभूतायास्तस्या अनुमानादात्मनि क्रियावत्त्वं सिद्ध्यति,अनुमानञ्चात्र आत्मा सक्रियः अन्योन्यानुप्रवेशरूपशरीरसंयोगवत्त्वात् यन्नैवं तन्नैवं यथाऽऽकाशादीति पर्यवस्यति, शरीरमात्रे यदि क्रियाबलादेव तथा संयोगस्स्यात्तदाऽऽकाशेनापि सह सक्रियस्य शरीरस्य तथा संयोगस्स्यात् तथा चात्मीयं शरीरमिति वदाकाशीयं शरीरमित्यपि व्यवहार-

चतुष्काद् द्वितीयचतुष्कगमनेन चत्वारि, द्वितीयचतुष्कात्तु नवाष्टगमने द्वे, चतुर्थस्थानात् प्रथमाध्रुवगमनं तस्मादपि तृतीयगमनमिति द्वे, आहारकचतुष्कोद्वलनेन द्वे, एवं दश, षड्भूताकारा यतः चरमाध्रुवात् क्रमेण प्रथमचतुष्के गमनमष्टाशीत्यादिभ्यो एकोननवत्यां द्विनवतित्रिनवत्योश्च गमनं भवति ॥२०॥

(मलय०)—तथा चाह—भूयस्काराः—भूयस्कारोदया एकविंशतिरल्पतरोदयाश्चतुर्विंशतिः, नोक्तसंख्यातो द्वयानामेकेऽप्यधिकाः, कुतः? इत्याह—यद्यस्मात्कारणान्न केवली छद्म--छद्मोदयान् याति, नाप्ययतोऽविरतसम्यग्दृष्टिः केवलित्वं—केवलित्वनिबन्धनेषूदयस्थानेषु याति, नाप्यतीर्थकरतीर्थकरावन्योन्यमन्योन्यस्योदयेषु गच्छतः, तत उक्तसंख्याका एव भूयस्काराऽल्पतरोदयाः । इयमत्र भावना—न केवली छद्मस्थोदयेषु याति, न चाप्यतीर्थकरस्तीर्थकरोदयं, उपलक्षणमेतत् , तेन नाप्ययोगी सयोगिकेवल्युदयं, तत एकादशद्वादशत्रयोविंशतिचतुर्विंशतिचतुश्चत्वारिंशल्लक्षणानि पञ्चोदयस्थानानि भूयस्कारतया न प्राप्यन्ते, इत्येकविंशतिरेव भूयस्कारोदयाः । तथाऽविरतसम्यग्दृष्टिर्मिथ्यादृष्टिर्वा न केवल्युदयस्थानमधिरोहति, ततश्चतुस्त्रिंशल्लक्षणोऽल्पतरोदयो न लभ्यते, आह—चतुस्त्रिंशदुदयः स्वभावस्थस्य तीर्थकृतः केवलिनो भवति, ततो यदा तीर्थकरः केवलित्वमासादयति, तदा चतुश्चत्वारिंशदादीनामन्यतमस्मादुदयस्थानाच्चतुस्त्रिंशदुदयस्थाने संक्रामतीति भवति चतुस्त्रिंशदुदयोऽल्पतरः, तदेतदसमीचीनं, सर्वथा वस्तुतत्त्वापरिज्ञानात्। केवलित्वं हि नाम सर्वोऽपि समासादयति गुणस्थानकक्रमेण, नान्यथा, तत्र क्षीणमोहगुणस्थानके त्रयस्त्रिंशत्प्रकृत्यात्मकमेकमेवोदयस्थानं, न शेषं । त्रयस्त्रिंशत्प्रकृतयश्चेमाः—मनुष्यगतिः पञ्चेन्द्रियजातिस्त्रनाम बादरनाम पर्याप्तकनाम सुभगनामादेयं यशःकीर्त्तिस्तैजसकार्मणे स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयमगुरुलघु निर्माणमौदारिकद्विकं प्रत्येकनामोपघातनामान्यतरविहायोगतिः पराघातनाम सुस्वरदुःस्वरयोरन्यतरदुच्छ्वा-

रिकादिमिश्रेणाहारयति यावच्छरीरनिष्पत्ति एष सर्वोऽप्योज आहारः, ओजसा तैजसशरीरेणाहार ओज आहारः, सकारवर्णलोपादोजाहारो वा, यद्वा ओजः स्वजन्मस्थानोचितः शुक्रानुविद्धशोणितादिपुद्गलसङ्घातः, तस्याहार ओजाहारः, स चाऽपर्याप्तावस्थायामेव, अपर्याप्तत्वं च शरीरपर्याप्तिमपेक्ष्य, नेन्द्रियादिपर्याप्तिमपेक्ष्य,तदपर्याप्तानां लोमाहारकत्वात्, सर्वाभिः स्वयोग्यपर्याप्तिभिरपर्याप्तानामोज आहार इत्यन्ये, तदुक्तं "ओयाहारा जीवा सव्वे अपज्जत्तगा मुणेयव्वा" इति, तथा त्वगिन्द्रियेण यः स्पर्शस्तेन य आहारः शरीरोपष्टम्भकानां शिशिरप्रावृट्कालादिभाविनां शीतजलादिपुद्गलानां ग्रहणं स लोमरन्ध्रैराहारः प्रचुरतरमूत्राद्यभिव्यङ्ग्यो लोमाहारः, स च शरीरपर्याप्त्या पर्याप्तानां मतान्तरेण सर्वाभिः पर्याप्तिभिः पर्याप्तानां सर्वेषां जीवानां पवनादिस्पर्शनात् सदैव नियमतो भवति, अत एव घर्माद्यभितप्ताश्छायया शीतलानिलस्पर्शनेन वा प्रीयन्ते प्राणिनः, यः पुनराहारः कवलैर्निष्पन्नो भवति स प्रक्षेपाहारो ज्ञातव्यः, प्रक्षेपणं मुखे प्रवेशनं प्रक्षेपः, तेनौदनादेराहारः प्रक्षेपाहारः, अथवा प्रक्षिप्यते इति प्रक्षेपः, ओदनकवलादिः, तस्याहारः प्रक्षेपाहारः, "पक्खेवे हुंति भइयव्वेति" वचनात्, स च यदा कवलप्रक्षेपस्तदैव नान्यदेति नियतकालभावी, तदुक्तं प्रवचनसारोद्धारे "सरिरेणोयाहारो–तयाय फासेण रोम आहारो। पक्खेवाहारो पुण–कावलिओ होइ नायव्वो ।१। इति । ओजाहारास्सर्वेऽप्यपर्याप्ता जीवाः, एतत्प्रागुक्तं, शरीरपर्याप्त्या पर्याप्ता मतान्तरेण स्वस्वयोग्यपर्याप्तिपर्याप्ता एकेन्द्रिया नैरयिकाः सुरगणाश्च सर्वे लोमाहारा एव ज्ञातव्याः, न पुनः प्रक्षेपाहाराः, तत्रैकेन्द्रियाणां प्रक्षेपाहाराभावो मुखाभावात्, नैरयिकदेवानां तु वैक्रियशरीरतया तथा स्वभावात्, शेषाणां द्वित्रिचतुरिन्द्रियाणां तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां चाहारो लोमतः प्रक्षेपतश्च भवति, उभयरूपस्याप्याहारस्य तेषां सम्भवात्, तदुक्तं "रोमाहारा एगिंदिया य–नेरइयसुरगणा चेव । सेसाणं आहारो–रोमे पक्खेवओ चेव ॥ १ ॥" इति, निश्चयनयेन

गोत्रमेवबध्नाति तदा समवसेयम् । एकमेकप्रकृत्यात्मकमल्पतरं, तदपि चोच्चैर्गोत्र उद्वलिते नीचैर्गोत्रे वा क्षीणे द्रष्टव्यं, द्वे अवस्थितसत्कर्मणी द्वयोरपि,सत्तास्थानयोश्चिरकालमवस्थानसम्भवात् । नवरमेकप्रकृत्यात्मके सत्तास्थाने चिरकालमवस्थानमुद्वलितोच्चैर्गोत्रस्य नीचैर्गोत्ररूपे द्रष्टव्यम् । आयुषोऽप्येकं द्विप्रकृत्यात्मकं भूयस्कारसत्कर्म, तच्च परभवायुर्बन्धारम्भसमये, एकमेकप्रकृत्यात्मकमल्पतरसत्कर्म, तच्चानुभूयमानभवायुषः सत्ताऽव्यवच्छेदे परभवायुष उदयसमये, द्वे अवस्थितसत्कर्मणी, द्वयोरपि सत्तास्थानयोश्चिरकालमवस्थानात् । यत्त्ववक्तव्यं सत्कर्म, तदुभयत्रापि न विद्यते, उभयोरपि सर्वस्वस्वोत्तरप्रकृतिव्यवच्छेदे भूयः सत्ताया अयोगात् । दर्शनावरणीयस्य त्रीणि सत्कर्मस्थानानि, तद्यथा—नव षट् चतस्रः । तत्र क्षपकश्रेणिमधिकृत्यानिवृत्तिबादरसम्परायाद्धायाः संख्येयान् भागान् यावदुपशमश्रेणिमधिकृत्योपशान्तमोहगुणस्थानकं यावत् नव । क्षपकश्रेणावनिवृत्तिबादरसम्परायाद्धायाः संख्येयेभ्यो भागेभ्यः परत आरभ्य क्षीणमोहगुणस्थानकस्य द्विचरमसमयं यावत् षट्, चरमसमये चतस्रः । अत्र द्वे अल्पतरे, तद्यथा-षट् चतस्रः । द्वे अवस्थितसत्कर्मणी, तद्यथा-नव षट्, चतुष्प्रकृत्यात्मकं तृतीयं सत्तास्थानमेकसामयिकमिति न तस्यावस्थितत्वसम्भवः । भूयस्कारमवक्तव्यं चात्र न समस्ति, द्वित्रादिप्रकृतिसत्ताऽव्यवच्छेदे सर्वस्वस्वोत्तरप्रकृतिसत्ताऽव्यवच्छेदे वा भूयः सत्तासम्भवाभावात् । मोहनीयस्य पञ्चदश सत्तास्थानानि, तद्यथा—अष्टाविंशतिः सप्तविंशतिः षड्विंशतिः चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिस्त्रयोदश द्वादशैकादश पञ्च चतस्रस्तिस्रो द्वे एका च । तत्र सर्वप्रकृतिसमुदायोऽष्टाविंशतिः, ततः सम्यक्त्व उद्वलिते सप्तविंशतिः, सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशतिः, अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिः, अष्टाविंशतेरनन्तानुबन्धिचतुष्टये क्षीणे चतुर्विंशतिः, ततो मिथ्यात्वे क्षीणे त्रयोविंशतिः, ततः सम्यग्मिथ्यात्वे क्षीणे द्वाविंशतिः, सम्यक्त्वे क्षीण एकविंशतिः, ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश, ततो नपुंसकवेदे क्षीणे द्वादश,

उत्तर प्रकृतीनां सत्तास्थानेषु भूयस्काराद्यः

॥२०९॥

कादाचित्कत्वाच्च, निष्प्रतिपक्षविवक्षितार्थप्रतिपत्त्यर्थमौदारिकेण व्यपदिश्यते औदारिकमिश्रमिति, तेन योगेनाहारग्रहणं शरीरपर्याप्त्याऽपर्याप्तानामपर्याप्तानां चौदारिकशरीरिणां मनुष्यतिरश्चामेव, जन्मवैक्रियशरीरिणां तु देवनारकाणामपर्याप्तावस्थायां कार्मणेन सह वैक्रियमिश्रकाययोगात्, कृतोत्तरवैक्रियाणां नरतिरश्चां चौदारिकेण सह वैक्रियमिश्रकाययोगात्तज्ज्ञेयमिति भावः। औदारिकंकाययोगेनेति अनेन योगेन शरीरपर्याप्तिनिष्पत्त्यनन्तरं पक्षान्तरेण स्वयोग्यपर्याप्तिनिष्पत्त्यनन्तरं विवक्षितभवायुश्चरमसमयपर्यन्तमाहारग्रहणमौदारिकशरीरिणामेव, वैक्रियशरीरिणां तु पर्याप्तानां वैक्रियकाययोगेनेति बोध्यम्, लोमाहारेति एतत्स्वरूपं प्रागेवोक्तम्, उक्तार्थे प्राचां संवादमुपदर्शयति तदिदमुक्तमित्यादिना, पारमर्षे इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धाहारपरिज्ञानामधेयतृतीयाध्ययननिर्युक्तावित्यर्थः। जोएणेति अयं चैतदर्थः—ज्योतिस्तेजः तदेव तत्र वा भवं तैजसं, तेन कार्मणेन चाहारयति, तैजसकार्मणे हि शरीरे आसंसारभाविनी, ताभ्यामेव चोत्पत्तिदेशं गता जीवाः प्रथममाहारं कुर्वन्ति, ततः परमौदारिकमिश्रेण वैक्रियमिश्रेण वा यावच्छरीरं निष्पद्यते तावदाहारयन्ति, शरीरनिष्पत्तौ चौदारिकेण वैक्रियेण वाऽऽहारयन्तीति ॥७५॥ वीर्यान्तरायकर्मक्षयोपशमाद्यायत्तसकरणाऽकरणाभिसन्धिजानभिसन्धिजच्छाद्मस्थिककैवलिकसकषाय्यकषायिसलेश्यालेश्यत्वादिरूपवैलक्षण्यं वीर्यस्याऽजानतः शङ्कामवलम्ब्य षट्सप्ततितमं पद्यमवतारयति—

नन्वेकस्मादेव वीर्यात् कथं ग्रहणादिवैचित्र्यमत आह—

वीर्यं त्वया सकरणं गदितं किलात्म-न्यालम्बनग्रहणसत्परिणामशालि ॥

तेनास्य सक्रियतया निखिलोपपत्ति-स्त्वद्वेषिणामवितथौ न तु बन्धमोक्षौ ॥ ७६ ॥

त्कर्माणि, नवाष्टसत्तास्थानयोरेकसामयिकतयाऽवस्थितत्वासंभवात् । दशाल्पतरस्थानानि, तद्यथा–प्रथमसत्तास्थानचतुष्टयाद् द्वितीयसत्तास्थानचतुष्टयगमनेन चत्वारि, द्वितीयसत्तास्थानचतुष्टयान्नवाष्टगमनेन द्वे, प्रथमसत्तास्थानचतुष्टयसत्कचतुर्थस्थानात्प्रथमाऽध्रुवसंज्ञसत्तास्थानगमने ततोऽपि तृतीयाऽध्रुवसत्तास्थानगमने द्वे, त्रिनवतिद्विनवतिभ्यामाहारकचतुष्टयोद्वलनत एकोननवत्यष्टाशीतिसंक्रान्तौ द्वे एवं सर्वसंख्यया दशाल्पतरसत्तास्थानानि भवन्ति । भूयस्कारसत्तास्थानानि षट्, तद्यथा–भूयो मनुष्यद्विकबन्धनेनाष्टासप्ततेरशीतौ गमनं; ततोऽपि नरकद्विके देवद्विके वा वैक्रियचतुष्टयसहिते भूयोऽपि बध्यमाने षडशीतौ, ततोऽपि देवद्विके नरकद्विके वा पुनरपि बध्यमानेऽष्टाशीतौ, ततोऽपि तीर्थकरनामबन्ध एकोननवत्यां गमनमिति चत्वारि । अष्टाशीतेरेवाहारकचतुष्टयबन्धनेन द्विनवतौ गमनं, ततोऽपि तीर्थकरनामबन्धे त्रिनवतौ, एवं सर्वसङ्ख्यया षट् । न च शेषात्सत्तास्थानादन्यस्मिन् प्रभूते सत्तास्थाने गमनसम्भवः, तेन षडेव भूयस्कारसत्कर्माणि । यत्त्ववक्तव्यं सत्तास्थानं तदिह न भवति, नाम्नः सर्वोत्तरप्रकृतिसत्ताव्यवच्छेदे भूयः सत्तोपादानासम्भवात् ॥२०॥

सर्वोत्तरप्रकृतीनां सत्तास्थानेषु भूयस्कारादयः

एक्कारबारसासी इगि चउ पंचाहिया य चउणउई । एत्तो चोद्दसहियसयं पणवीसाओ य छायालं ॥२१॥

बत्तीसं नत्थिसयं एवं अडयाल संत ठाणाणि । जोगिअघाइचउक्के भण खिविउं घाइसंताणि ॥२२॥

(स्वो०)—एकादश द्वादशायोगिस्थानेऽशीत्येकाशीतिचतुःपञ्चाशीतिरेतानि चत्वारि सयोगिनि, अघातिचतुष्कस्य षट् सत्स्थानानि, अतश्चतुर्नवतिस्तस्याः रूपवृध्या यावच्चतुर्दशोत्तरं शतं पञ्चविंशत्यधिकशताद्यावत्षट्चत्वारिंशदधिकं शतं, किन्तु द्वात्रिंशदधिकं शतं नास्ति, एवमष्टचत्वारिंशत् सत्स्थानानि 'भण' कथय सत्कर्मण इति, ११, १२, ८०, ८१, ८४, ८५, ९४, ९५, ९६, ९७, ९८, ९९,

दारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति, तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति, परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तानेव पुद्गलानवलम्बते, यथा मन्दशक्तिः कश्चिन्नगरे परिभ्रमणाय यष्टिमवलम्बते, ततस्तदवलम्बनतो जातसामर्थ्यविशेषस्सन् तान् प्राणापानादिपुद्गलान् विसृजतीति परिणामालम्बनग्रहणसाधनं वीर्यं सिद्धम्, तेन च वीर्येण योगसंज्ञकेन मनोवाक्कायावष्टम्भतो जायमानेन लब्धं नामत्रिकं, तद्यथा मनोयोगो वाग्योगः काययोग इति, तत्र मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः,कायेन योगो काययोग इति। स्यादेतत् ,सर्वेषु जीवप्रदेशेषु तुल्यक्षायोपशमिक्यादिलब्धिभावेपि किमिति क्वचित्प्रभूतं क्वचित् स्तोकं क्वचित् स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यते इति चेत्, उच्यते, पद्मनालतन्तुवदात्मप्रदेशानां मिथो विलक्षणसम्बन्धबलादेव यदर्थं चेष्टते तत्कार्यनिकटीभवनेन तत्समीपवर्त्यात्मप्रदेशेषु प्रभूतं वीर्यं दूरदूरतरदूरतमवर्त्यात्मप्रदेशेषु च स्तोकस्तोकतरस्तोकतमवीर्यं भवति, उक्तसम्बन्धानभ्युपगमे तु विवक्षितात्मप्रदेशेष्वेव परिस्पन्दात्मकं वीर्यं स्यात्, न तदन्येषु, तस्मात्कार्यद्रव्याभ्यासवशतो जीवप्रदेशानां परस्परं सम्बन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित् प्रभूतमन्येषु स्तोकमपरेषु तु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यत इत्याशयेनाह कार्याभ्यासादिवशेनेति, उक्तमर्थं प्राचां वचनेन प्रमाणयति तदुक्तमिति कर्मप्रकृताविति शेषः। परिणामालम्बणेत्यादिगाथा उक्तार्था,

एतेनात्मा निष्क्रियो नित्यत्वे सत्यस्मदादिप्रत्यक्षत्वादित्यादिकमपास्तम्, अप्रयोजकत्वात्, अन्यथा ततो व्याप्यत्वस्यापि सिद्ध्यापत्तेः, आभोगवीर्यात्मकक्रियावत्त्वस्य प्रत्यक्षसिद्धत्वेन कालात्ययापदिष्टत्वात्, आत्मा

तानभिधित्सुः प्रथमतः सत्तास्थानान्याह–सामान्यतः सर्वोत्तरप्रकृतीनां सत्तास्थानान्यष्टचत्वारिंशत्, तद्यथा–एकादश, द्वादश, अशीतिः, 'इगिचउ पञ्चाहिया य' त्ति अत्राशीतिः सम्बध्यते। ततोऽयमर्थः–अशीतेरनन्तरमेकचतुःपञ्चाधिकाऽशीतिर्वक्तव्या, तद्यथा–एकाशीतिश्चतुरशीतिः, पञ्चाशीतिः, ततश्चतुर्नवतिः, 'एत्तो' इत्यादि। अतश्चतुर्नवतेरूर्ध्वमेकोत्तरया वृद्ध्या निरन्तरं तावत्सत्तास्थानानि वाच्यानि यावच्चतुर्दशाधिकं शतं, तद्यथा–पञ्चनवतिः, षण्णवतिः, सप्तनवतिः, अष्टानवतिः, नवनवतिः, शतं, एकोत्तरं शतं, द्व्युत्तरं शतं, त्र्युत्तरं शतं, चतुरुत्तरं शतं, पञ्चोत्तरं शतं, षडुत्तरं शतं, सप्तोत्तरं शतं, अष्टोत्तरं शतं, नवोत्तरं शतं, दशोत्तरं शतं, एकादशोत्तरं शतं, द्वादशोत्तरं शतं, त्रयोदशोत्तरं शतं, चतुर्दशोत्तरं शतं, अत ऊर्ध्वं पञ्चविंशाच्छतादारभ्य क्रमेणैकोत्तरया वृद्ध्या तावदभिधातव्यानि सत्तास्थानानि यावत् षट्चत्वारिंशं शतं, नवरं द्वात्रिंशं शतं नास्ति. द्वात्रिंशशतात्मकसत्तास्थानवर्जितान्यभिधातव्यानीत्यर्थः। तद्यथा–पञ्चविंशं शतं, षड्विंशं शतं, सप्तविंशं शतं, अष्टाविंशं शतं, एकोनत्रिंशं शतं, त्रिंशं शतं, एकत्रिंशं शतं, त्रयस्त्रिंशं शतं, चतुस्त्रिंशं शतं, पञ्चत्रिंशं शतं, षट्त्रिंशं शतं, सप्तत्रिंशं शतं, अष्टात्रिंशं शतं, एकोनचत्वारिंशं शतं, चत्वारिंशं शतं, एकचत्वारिंशं शतं, द्विचत्वारिंशं शतं, त्रिचत्वारिंशं शतं, चतुश्चत्वारिंशं शतं, पञ्चचत्वारिंशं शतं, षट्चत्वारिंशं शतम्। एवं सर्वसङ्ख्यया अष्टाचत्वारिंशत्सत्तास्थानानि भवन्ति। तद्यथा—११, १२, ८० ८१, ८४, ८५, ९४, ९५, ९६, ९७, ९८, ९९, १००, १०१, १०२, १०३, १०४, १०५, १०६, १०७, १०८, १०९, ११०, १११, ११२, ११३, ११४, १२५, १२६, १२७, १२८, १२९, १३०, १३१, १३३, १३४, १३५, १३६, १३७, १३८, १३९, १४०, १४१, १४२, १४३, १४४, १४५, १४६। अमीषां च सत्तास्थानानां यथा परिज्ञानमुपसम्पद्यते तथोपदेशमाह–योगिनां सयोगिकेवलिनां यद्घातिप्रकृतिसत्कं सत्तास्थानचतुष्टयमशीत्यादिलक्षणं,

उत्तर प्रकृतीनां सत्तास्थानेषु भूयस्कारादयः

॥२११॥

शेन बहवो दोषा निपतन्ति, दोषाणामिच्छाऽभावेऽपि लुप्तेवकारस्य गम्यमानत्वात् स्वेच्छावशेनैवेति हेतूत्प्रेक्षेयम्। तथा हि–यद्यात्मा एकान्तनित्यस्तदा तस्य छेदभेदक्लेदाद्यभावाद्धिंसादेरभावस्तदभावाच्चाहिंसादेरपि तदभावात् पुण्यपापयोस्तदभावाद्बन्धमोक्षयोर्लोकद्वयस्यापि चाभाव इति बद्धमूलो नास्तिक्यतरुः स्यात्, न च मनःसंयोगविशेषध्वंसो हिंसा, वायुसंयोगविशेषध्वंसवत्तस्यानुद्देश्यत्वात्,

अथेति, एकान्तनित्येतिमूलस्य एकान्तनित्यसमये तथेतरत्र च स्वेच्छावशेन बहवो दोषा निपतन्ति,तस्माद् हे ईश त्वमितिशेषः, यथा भजनोर्जितचित्पवित्रमात्मानमात्थ तथा न वितथावकाश इत्यन्वयः,हेतूत्प्रेक्षेयमिति अहेतोर्हेतुत्वसम्भावनं हेतूत्प्रेक्षा, इवपदस्याप्युत्प्रेक्षाव्यञ्जकत्वं सहृदयानामभिमतम्,तदुक्तं“मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः” ॥१॥ इति, तस्य मनस्संयोगविशेषध्वंसस्य, अनुद्देश्यत्वात् हिंसकीयेच्छाऽविषयत्वात्, मनस्संयोगविशेषध्वंसस्यैव हिंसात्वाभ्युपगमे कायध्वंसस्य हिंसारूपत्वाऽभावेनैनं पुरुषं मारयामीतीच्छाया अस्य पुरुषस्य कायं व्यापादयामीत्यर्थकत्वेन तदिच्छाजन्यप्रवृत्तिकारिणोऽहिंसकत्वं स्यादित्याह—

कायध्वंसोद्देशेन प्रवृत्तौ हिंसाऽभावप्रसङ्गात्, न च मरणोद्देश्यकमरणानुकूलव्यापारस्य हिंसात्वोक्तावपि निस्तारः, खड्गाऽभिघातादेरुक्तमनःसंयोगध्वंसजनकत्वे मानाभावात्, अन्यादृशस्य चानुकूलत्वस्यातिप्रसञ्जकत्वात्, प्रमादकृतहिंसायामव्याप्तेः, जीवमात्रनिष्ठहिंसादयाव्यवहारस्य तत्पर्यायध्वंसानुकूलप्रतिकूलप्रमादाप्रमादयोगवत्त्वं विना कथमप्युपपादयितुमशक्यत्वाच्च ।

अष्टानवतिः, एकोत्तरं शतं, द्व्युत्तरं शतं, ९७, ९८, १०१, १०२, एतानि सूक्ष्मसम्पराये लभ्यन्ते। एतेष्वेव संज्वलनमायाप्रक्षेपादमूनि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा–अष्टानवतिः, नवनवतिः, द्व्युत्तरं शतं, त्र्युत्तरं शतं, ९८, ९९, १०२, १०३, एतान्यनिवृत्तिबादरसम्परायगुणस्थानकपर्यवसाने लभ्यन्ते। ततस्तस्मिन्नेव गुणस्थानके तेष्वेव चतुर्षु सत्तास्थानेषु संज्वलनमानप्रक्षेपादेतानि चत्वारि सत्तास्थानानि भवन्ति। तद्यथा–नवनवतिः, शतं, त्र्युत्तरं शतं, चतुरुत्तरं शतं, ९९, १००, १०३, १०४। तत एतेष्वेव चतुर्षु सत्तास्थानेषु तस्मिन्नेव गुणस्थानके संज्वलनक्रोधप्रक्षेपादमूनि चत्वारि सत्तास्थानानि भवन्ति। तद्यथा–शतं, एकोत्तरं शतं, चतुरुत्तरं शतं, पञ्चोत्तरं शतं, १००, १०१, १०४, १०५। ततस्तस्मिन्नेव गुणस्थानके पुरुषवेदप्रक्षेपादमूनि चत्वारि सत्तास्थानानि। तद्यथा–एकोत्तरं शतं, द्व्युत्तरं शतं, पञ्चोत्तरं शतं, षडुत्तरं शतं, १०१, १०२, १०५, १०६। ततो हास्यादिषट्कप्रक्षेपे तस्मिन्नेव गुणस्थानकेऽमूनि चत्वारि सत्तास्थानानि भवन्ति। तद्यथा–सप्तोत्तरं शतं, अष्टोत्तरं शतं, एकादशोत्तरं शतं, द्वादशोत्तरं शतं, १०७, १०८, १११, ११२। ततस्तस्मिन्नेव गुणस्थानके स्त्रीवेदप्रक्षेपादमूनि चत्वारि सत्तास्थानानि। तद्यथा–अष्टोत्तरं शतं, नवोत्तरं शतं, द्वादशोत्तरं शतं, त्रयोदशोत्तरं शतं, १०८, १०९, ११२, ११३। ततो नपुंसकवेदे तस्मिन्नेव गुणस्थानके प्रक्षिप्तेऽमूनि चत्वारि सत्तास्थानानि। तद्यथा–नवोत्तरं शतं, दशोत्तरं शतं, त्रयोदशोत्तरं शतं, चतुर्दशोत्तरं शतं, १०९, ११०, ११३, ११४। तत एतेष्वेव चतुर्षु सत्तास्थानेषु तस्मिन्नेव गुणस्थानके नामत्रयोदशकस्त्यानर्द्धित्रिकरूपप्रकृतिषोडशकप्रक्षेपादिमानि चत्वारि सत्तास्थानानि भवन्ति। तद्यथा–पञ्चविंशत्युत्तरं शतं, षड्विंशत्युत्तरं शतं, एकोनत्रिंशं शतं, त्रिंशं शतं, १२५, १२६, १२९, १३०। ततोऽपि तस्मिन्नेव गुणस्थानके अप्रत्याख्यानप्रत्याख्यानावरणरूपकषायाष्टकप्रक्षेपेऽमूनि चत्वारि सत्तास्थानानि। तद्यथा–त्रयस्त्रिंशं शतं, चतुस्त्रिंशं शतं, सप्त-

उत्तरप्रकृतीनां सत्तास्थानेषु भूयस्कारादयः

॥२१२॥

तीच्छायामपि विसभागक्षणोत्पत्तिविषयताशालित्वमेवेति वाच्यम्, रूपपरावर्त्तादिक्रियाध्यवसायेऽतिव्याप्तेः।

एकान्तानित्यवादेपीति, अविशेषादिति सुगतस्याऽविच्छिन्नाऽक्लिष्टज्ञानसन्तानक्षणरूपत्वेन सन्तन्यमानज्ञानक्षणस्याप्यव्यवहितपूर्ववृत्तित्वेन विसभागक्षणोत्पत्तिनिमित्तत्वस्याऽविशेषादित्यर्थः। बुद्धस्य विसभागक्षणजननानुकूलाऽध्यवसायाऽभावेनातिव्याप्तिर्मा भवतु तथाप्यव्याप्तिरेवेत्याह यो नर इति, पूर्वापरनरभवक्षणस्य नरत्वेन सौसादृश्यादिति भावः। उक्तहिंसालक्षणस्य रूपपरावृत्तिर्भवत्वितीच्छायामतिव्याप्तिरित्याह रूपेति,

न च तत्सन्तानत्वावच्छिन्नप्रतियोगिताकविसभागताशालिसन्तानान्तःपातिक्षणजननत्वावच्छिन्नविषयताशाल्यध्यवसायवत्त्वं सा, इतो नरत्वं विहाय देवो भूयासमित्याद्याकारे दानदयाद्यध्यवसायेऽतिप्रसङ्गात्। न चाध्यवसाये क्लिष्टत्वविशेषणान्नानुपपत्तिरिति वाच्यम्, हिंसाविषयत्वातिरिक्तस्य क्लिष्टत्वस्य दुर्वचत्वेनात्माश्रयात्, सन्तानादेः सांवृतत्वेन पारमार्थिकस्याध्यवसायस्यैव चासिद्धेः, आहार्यस्य च हिंसाहिंसाद्यध्यवसायस्य व्यवहारनिमित्तत्वेन कल्पितस्य सर्वलोकविगर्हितत्वेनोपहासपात्रतायाः पारमर्षे विस्तरेण प्रतिपादितत्वात्, प्रमादकृतहिंसाद्यव्याप्तेश्च न किञ्चिदेतदिति दिग्। एवं व्यापकत्वाव्यापकत्वमूर्त्तत्वामूर्त्तत्वाद्येकान्तवाददोषा अपि दर्शनभेदेन निरूपणीयाः। हे ईश तस्मादेकान्तवादे सर्वतोऽपि दूषणव्याप्तेः भजनया स्याद्वादेनोर्जितं चित्स्वरूपं यस्य एतादृशमात्मानं यथा त्वमात्थ न तथा वितथस्यानृतलेशस्याप्यवकाशः ॥७७॥

न च तत्संतानेति, तथा च रूपपरावृत्तिर्भवत्वितीच्छायां रूपान्तरोत्पत्त्या पूर्वसन्तानव्यक्तेरुत्तरसन्तानव्यक्तेर्भेदेऽपि तदु-

गोत्रलक्षणं गोत्रं सत्, तदा तस्य ज्ञानावरणपञ्चकं दर्शनावरणनवकं वेदनीयद्विकं मोहनीयषड्विंशतिरन्तरायपञ्चकं तिर्यगायुर्नाम्नोऽष्टसप्ततिर्नीचैर्गोत्रमिति सप्तविंशं शतं सत्तास्थानं, तदेव परभवतिर्यगायुर्बन्धेऽष्टाविंशत्यधिकं शतम्। तथा वनस्पतिकायिकेषु यदा स्थितिक्षयाद्देवद्विकनरकद्विकवैक्रियचतुष्टयरूपास्वष्टासु प्रकृतिषु क्षीणासु नाम्नोऽशीतिप्रकृतयः सत्तायां लभ्यन्ते, तदा नाम्नोऽशीतिर्द्वे वेदनीये द्वे गोत्रे अनुभूयमानं तिर्यगायुर्ज्ञानावरणपञ्चकं दर्शनावरणनवकं मोहनीयषड्विंशतिरन्तरायपञ्चकमिति त्रिंशदुत्तरशतात्मकं सत्तास्थानं, तदेव परभवायुर्बन्ध एकत्रिंशशतात्मकं सत्तास्थानम्। तदेवं सत्तास्थानेषु परिभाव्यमानेषु द्वात्रिंशदुत्तरशतात्मकं सत्तास्थानं नावाप्यते, इति सूत्रकृता तद्वर्जनमकारि। इह यद्यपि सप्तनवत्यादीनि सत्तास्थानान्युक्तप्रकारेण तत्तत्प्रकृतिप्रक्षेपादन्यथान्यथाऽनेकधा प्राप्यन्ते, तथापि संख्यातस्तानि तुल्यानीत्येकान्येव विवक्ष्यन्ते, ततोऽष्टचत्वारिंशदेव सत्तास्थानानि, नोनाधिकानि। अत्राऽवक्तव्यसत्कर्म न विद्यते, सर्वप्रकृतिसत्ताव्यवच्छेदे भूयः सत्तासम्भवाभावात्। अवस्थितानि चतुश्चत्वारिंशत्, एकादशद्वादशचतुर्नवतिपञ्चनवतिरूपाणां चतुर्णां सत्तास्थानानामेकसामयिकतयाऽवस्थितत्वायोगात्। सप्तचत्वारिंशदल्पतराणि। सप्तदश भूयस्काराणि, यतस्तानि सप्तत्रिंशतिशतादारभ्य परत एव प्राप्यन्ते नार्वाक्, परतोऽपि यत् त्रयस्त्रिंशत् शतात्मकं सत्तास्थानं तदपि भूयस्कारतया न लभ्यते, कस्मात्? इति चेत्, उच्यते—इह सप्तविंशतिशतादर्वाक् यानि स्थानानि, यच्च त्रयस्त्रिंशदुत्तरशतात्मकं तानि क्षपकश्रेणावेव प्राप्यन्ते, न च क्षपकश्रेणेः प्रतिपातः, ततस्तेषां स्थानानां भूयस्कारत्वेनासम्प्राप्तेः सप्तदशैव भूयस्काराणि॥२१–२२॥

साधनादिबन्धानां सहचरितत्वमाह—

**साई अधुवो नियमा जीवविसेसे अणाइ अधुव धुवो। नियमा धुवो अणाई अधुवो अधुवोव साई वा॥२३॥**

त्रमपि परिशीलनीयम्, अत एव त्वं कर्मान्तरक्षयकरं मिथ्यादर्शनजनितानां ज्ञानदर्शनानाशितानां कर्मणां क्षयहेतुं, तु परं केवलं चरित्रमात्थ, हे जिन निर्बन्धं तु निरुद्धयोगमात्थ, ततो नाणेण जाणई भावं इत्याद्यागमप्रामाण्यात् ज्ञानदर्शनचरित्रतपांसि सङ्ग्रहतस्तु ज्ञानक्रिये मोक्षमार्ग इति स्थितम् न तु केवलं ज्ञानमेव, अज्ञानदशायामयोधिकलुषकृतकर्मणां ज्ञानोत्पत्तावप्युत्कृष्टसम्वरद्वारनिष्पत्तावेव क्षयस्य सिद्धान्तसिद्धत्वात्।

एतादृगात्ममननमित्यादिश्लोकः, अत्र विनिहन्तीति क्रियापदं, तस्य कर्तृपदसापेक्षत्वात्तदाह एतादृगात्ममननमिति, कर्माकाङ्क्षायामाह सवासनं मिथ्याज्ञानमिति, वासनासहितं मिथ्याज्ञानमित्यर्थः, भ्रान्तज्ञानजन्यवासनामिति भावः, स्याद्वादविचारजन्यात्ममननप्रयोज्यसभ्रान्तज्ञानवासनामात्रोच्छेदरूपक्रियाफलमाह अतो न तदुत्थबन्ध इति, मिथ्याज्ञानजन्यवासनारूपकारणाऽभावे न तज्जन्यकर्मबन्ध इत्यर्थः, न च स्याद्वादभावनासहकृतात्ममननरूपज्ञानमेव मोक्षकारणं, किन्तु चारित्रमपि, अत एव त्वं कर्मान्तरक्षयकरं मिथ्यादर्शनजनितानां ज्ञानदर्शनानाशितानां कर्मणां क्षयहेतु तु परं केवलं चरित्रमात्थ चारित्रं कथितवान्, चारित्रमपि योगलेश्यासहकृतं सबन्धं तदसहकृतं निर्बन्धमिति द्विविधं, तत्राद्यं नाऽव्यवधानेन मोक्षकारणं किन्तु द्वितीयमेव, अत एवाह हे जिन निर्बन्धं तु निरुद्धयोगमात्थेति, निरुद्धयोगं निरुद्धः प्रतिरुद्धो योगो मनोवचःकाययोगो यस्मिन् तन्निरुद्धयोगम्, अत एव निर्बन्धं, निर्गतो बन्धो यस्मिन् तन्निर्बन्धम्, अवशिष्टयोगरूपकारणोच्छेदे योगजन्यकर्मबन्धस्याप्युच्छेद इति सर्वथा बन्धोच्छेदमत एव सर्वसंवररूपं सर्वोत्कृष्टं चारित्रं साधु सम्यग्रीत्या त्वं कथितवानिति सङ्क्षेपार्थः।
एतादृगात्मेति मूलं विवृणोति ग्रन्थकारः—एतादृश इति,सविपरीतज्ञानवासनामात्रस्य,विपरीतज्ञानस्य मिथ्याज्ञानस्य तज्जन्य-

तेणाई ओहेणं उक्कोसजहन्नगो पुणो साई। अधुवाण साइ सव्वे धुवाणणाई वि संभविणो ॥२५॥

(स्वो०)—'उत्कृष्टात्प्रतिपतिते साद्यनुत्कृष्टः जघन्यादबन्धाद्वा इतरोऽजघन्य इति, तदभावे द्वावप्यविशेषौ इति पदानि। तावनादी ओघेन उत्कृष्टजघन्यकौ तु पुनः सादी, अध्रुवानां सादिः सर्वे ध्रुवानां अनादिरपि सम्भविनाविति पदानि। पदार्थः—उत्कृष्टबन्धं यदा जीवः कृत्वा प्रतिपततिं तस्मिन्नेव काले सादित्वेन सहानुत्कृष्टबन्धः स्पष्टतां याति, जघन्यबन्धं कृत्वा उपशमगुणादबन्धं वा, तदा तस्मात्प्रतिपतति तदा सादित्वेन सहेतरोऽजघन्यः स्पष्टतां याति, तेषां कारणानामभावेऽथवा सादित्वयोरभावे द्वावप्यविशिष्टौ भवतः सत्तायां व्यवस्थितावप्यव्यक्तौ तावेवं व्यवस्थितौ अनादी भवतः, उत्कृष्टजघन्यौ तु सादी भवतः, ओघेन—सामान्येन, प्रकृतिस्थित्यादिबन्धविशेषमनपेक्ष्य स्वभावत इति। अध्रुवबन्धिनीनां सर्वासां प्रकृतीनां सर्वे जघन्याजघन्योत्कृष्टानुत्कृष्टाः साद्यध्रुवा भवन्ति, ध्रुवबन्धिनीनां तु साद्यध्रुवावनादिध्रुवावपि सम्भविनावजघन्यानुत्कृष्टौ भवतः, जघन्योत्कृष्टौ पुनः साद्यध्रुवावेति गाथाद्वयार्थः ॥२४-२५॥

(मलय०)—तदेवं साद्यादिषु बन्धभेदेषु यो येनाव्यभिचारी व्यभिचारी वा स तथा प्रतिपादितः, ते च साद्यादयो जघन्यादिविषयाः, जघन्यादिषु च मध्येऽजघन्यानुत्कृष्टौ केषाञ्चिदेकत्वेन प्रतिभातः, ततस्तद्गतसादित्वविशेषोपदर्शनतस्तयोर्विशेषमाह—इह जघन्यादारभ्य यावदुत्कृष्टो बन्ध उदयादिर्वा, तावत्सर्वोऽप्यजघन्य इत्युच्यते। उत्कृष्टादारभ्य यावज्जघन्यस्तावत्सर्वोऽप्यनुत्कृष्टः। न चैवमनयोरविशेषः,तद्गतसादित्वविशेषस्य भेदात्। तथा चाह—उत्कृष्टात्परिपतिते सादिरनुत्कृष्टः। किमुक्तं भवति ? यदा परिणामविशेषत उत्कृष्टं बन्धमाधाय परिणामह्रासत उत्कृष्टाद्बन्धात्प्रतिपतति तदानुत्कृष्टो बन्धः सादितां भजते नान्यथा, तथा जघन्याद्बन्धाद्वा प्रतिपतितेऽजघन्यः सादिः, इयमत्र भावना—यदा तथाविधपरिणामविशेषतो जघन्यं बन्धमाधाय, यदि नोपशान्तमोहगुणस्थानकमारुह्याव-

इत्याद्यागमप्रामाण्यादिति, अत्रादिपदेन "सम्मत्तेण य सद्दहे। चरित्तेण (निगिण्हाइ) न गिण्हइ, तवेण परिसुज्झइ" इति चरणत्रयं ग्राह्यम्। निगिण्हाइत्ति निराश्रवो भवतीत्यर्थः, न गिण्हइत्ति न गृह्णाति नादत्ते, कर्मेति गम्यते, तवेण परिसुज्झइत्ति तपसा परिशुद्ध्यति, पुरोपचितकर्मक्षपणतः शुद्धो भवतीत्यर्थः। सङ्ग्रहतस्तु ज्ञानक्रिये मोक्षमार्ग इति–मतिज्ञानस्यैव रुचिरूपो योऽपायांशस्तद्रूपत्वेन सम्यग्दर्शनस्य ज्ञानात्मकतया चारित्रतपसोश्च क्रियारूपतया क्रियात्वेन रूपेणैकत्वात् सङ्ग्रहनयेन ज्ञानक्रिये एव मोक्षमार्ग इति भावः ॥७८॥ ननु केवलज्ञानं न साक्षाद्मोक्षाङ्गं, किन्तु भोगद्वारैवेति न्यायमतप्रतिक्षेपकमेकोनाशीतितमं पद्यमवतारयति—

अथ क्षायोपशमिके ज्ञाने यथा तथाऽस्तु,केवलज्ञानं तु क्लृप्तकारणभोगद्वारैव कर्मक्षयजनकं स्यात्, तत्राह–

ज्ञानं न केवलमशेषमुदीर्य भोगं, कर्मक्षयक्षममबोद्धृदशाप्रसङ्गात् ॥
वैजात्यमेव किल नाशकनाश्यतादौ, तन्त्रं नयान्तरवशादनुपक्षयश्च ॥ ७९ ॥

अथेति, ज्ञानं नेति श्लोकः, अस्य च केवलं ज्ञानम्,अशेषं भोगमुदीर्य अशेषभोगद्वारा, न कर्मक्षयक्षमं न कर्मक्षयाऽसाधारणकारणम्, तत्र हेतुमाह अबोद्धृदशाप्रसङ्गादिति, अदृष्टनाशं प्रति ज्ञानत्वेन क्रियात्वेन वा कारणत्वे वैकल्पिककारणत्वं स्यात्, तथा चैककारणाभावेऽप्यन्यसात्कार्योत्पत्तेर्व्यतिरेकव्यभिचारस्स्यात्, वैजात्यमदृष्टे स्वीकृत्योक्तदोषोद्धारेऽपि ज्ञानत्वरूपकारणतावच्छेदकाक्रान्ताद् ज्ञानान्तरादपि विजातीयादृष्टनाशस्स्यात्, एवं क्रियात्वरूपकारणतावच्छेदकाक्रान्तात् क्रियान्तरादपि विजातीयादृष्टनाशस्स्यादित्युक्तदोषनिवृत्त्यर्थमाह वैजात्यमेव किल नाशकनाश्यतादौ तन्त्रमिति नाशकनाश्यभावादौ

जघन्योत्कृष्टौ हि कदाचनभावतः सादी, तथा च प्रागभिहितं, "जहन्न उक्कोसया पुणो साई" इति, सादित्वं चाध्रुवत्वाव्यभिचारि, एतदपि प्रागेवोक्तं, ततोऽनुक्तावपि ध्रुवबन्धिनीनां जघन्योत्कृष्टौ साद्यध्रुवावसीयेते ॥२४-२५॥

मूलोत्तरप्रकृतीनां जघन्यादीनाह—

**मूलुत्तरपगईणं जहण्णओ पगइबंध उवसंते। तब्भट्ठा अजहन्नो उक्कोसो सन्निमिच्छंमि ॥२६॥**

(स्वो०)—मूलप्रकृतीनां उत्तरप्रकृतीनां च जघन्यः प्रकृतिबन्धो भवत्युपशान्ते, तस्माद् भ्रष्टात्–तस्मात् परिच्युतादजघन्यो भवति, उत्कृष्टस्तु संज्ञिनि मिथ्यादृष्टौ, तस्मिन्नेवोत्कृष्टस्याबन्धेऽनुत्कृष्टो भवति, यत उपशान्ते मूलप्रकृतेरुत्तरप्रकृतेश्चैकस्याः बन्धः, संज्ञिनि मिथ्यादृष्टौ मूलप्रकृतीनामष्टानामुत्तरप्रकृतीनां चतुःसप्ततेः, ताभ्यां भ्रष्टयोरजघन्यानुत्कृष्टौ भवत इति गाथार्थः ॥२६॥

(मलय०)—तदेवं प्रकृतिबन्धमधिकृत्य जघन्यादयः सामान्येन सादित्वादिरूपतया प्ररूपिताः। साम्प्रतं मूलप्रकृतीनामुत्तरप्रकृतीनां वा यत्र यो जघन्यादिर्बन्धः सम्भवन्ति, तत्र तं प्ररूपयति--मूलप्रकृतीनामुत्तरप्रकृतीनां च जघन्यः प्रकृतिबन्धो भवत्युपशान्ते–उपशान्तमोहगुणस्थानके, तथाहि–उपशान्तमोहगुणस्थानके मूलप्रकृतीरुत्तरप्रकृतीर्वाधिकृत्यैकस्या एव प्रकृतेर्बन्धः, एकप्रकृतिबन्धश्च प्रकृतिबन्धमाश्रित्य जघन्यो बन्ध उच्यते। न खल्वत्र स्थित्यादिबन्धमधिकृत्य अजघन्यादिविचारयितुमभिप्रेतं, येन स्तोकस्थित्यादिबन्धो जघन्यादिबन्ध उच्यते, किन्तु प्रकृतिबन्धमात्रं, ततो यः सर्वस्तोकप्रकृतिबन्धः स जघन्यो बन्धः, इत्येकप्रकृतिबन्धो जघन्यबन्धः। उपशान्तग्रहणं चोपलक्षणं, तेन क्षीणमोहे सयोगिकेवलिनि च द्रष्टव्यः, परमुपशान्तमोहगुणस्थानकात्प्रतिपातो भवति, न क्षीणमोहादिकात्, प्रतिपाते चाजघन्यबन्धसम्भव इति मुख्यवृत्त्योपशान्तग्रहणम्। 'तब्भट्ठाअजहन्नो' इति, तस्मादुपशान्तमोहगुण-

भावाभैकेन्द्रियादिशरीरपरिग्रहापत्त्याऽत्रोद्धृत्वप्रसङ्ग इत्याशङ्कते तत्त्वज्ञानेति, स एव तत्त्वज्ञानप्रतिबन्धककर्मनाश एव। पूर्वं—केवलज्ञानोत्पत्तेः पूर्वं, ततः विविदिषाशमेत्यादिहेतोः, तत एव तत्त्वज्ञानादेव, अत्रैवकारेण तत्त्वज्ञानस्य भोगं द्वारीकृत्य कारणत्वं प्रतिक्षिप्तम्, स अदृष्टविशेषनाशः, नन्वदृष्टनाशत्वावच्छिन्नं प्रति ज्ञानत्वेन यदि कारणत्वं तदा क्रियाजन्येऽदृष्टनाशे व्यतिरेकव्यभिचारः, यदि च क्रियात्वेन, तदा ज्ञानजन्ये तस्मिन् व्यभिचारः, विजातीयादृष्टनाशत्वावच्छिन्नं प्रति ज्ञानत्वावच्छिन्नस्य विजातीयादृष्टनाशत्वावच्छिन्नं प्रति क्रियात्वावच्छिन्नस्य च कारणत्वमित्यभ्युपगमेऽपि यददृष्टनाशकं तत्त्वज्ञानं तस्यैव नाशकं ज्ञानान्तरमपि स्यात्, एवं क्रियान्तरनाश्यस्यादृष्टस्य नाशकं क्रियान्तरं स्यात्, कारणतावच्छेदकस्य ज्ञानत्वस्य ज्ञानान्तरे क्रियान्तरे च क्रियात्वस्य सत्त्वादिति चेत्, न, विजातीयादृष्टनाशत्वावच्छिन्नं प्रति विजातीयज्ञानत्वेन विजातीयक्रियात्वेन च कारणत्वाभ्युपगमेनोक्तदोषाभावादित्याह—

नाश्यनाशकतावच्छेदकवैजात्यकल्पनं त्वदृष्टे ज्ञानक्रियादौ चावश्यकमेवेति न व्यभिचारादिदोषः। यथा च विविदिषादिनाऽदृष्टविशेषक्षयो न भोगद्वारा, तथा तत्त्वज्ञानेनापि। भोगेन त्वितरे क्षपयित्वेति वाक्यशेषे च तृतीया न भोगस्य कारणत्वं व्यवस्थापयति, किन्तु निर्जरानान्तरीयकप्रदेशानुभवस्य नियतपूर्वसत्त्वमात्रमिति स्पष्टीभविष्यत्यनुपदमेव। न च तत्त्वज्ञानादनन्तरमेव भवोपग्राहिकर्मक्षयः, चिरोपदेशश्रुतिविरोधात्, किन्तु समाधिविशेषाख्यचारित्रपरिपाकात्, तथापि तत्त्वज्ञानद्वारत्वाच्चारित्रमुपक्षीणमिति चेत्, न, व्यापारताग्राहकनयान्तरवशादेव तस्यानुपक्षयात्, तेण दासेण मे इत्यादिनयात् तदुपक्षयेऽपि न क्षतिः, एवं हि व्यवहितं न कारणमिति शुद्धर्जुसूत्रनये ज्ञानस्यापि चारित्रेणोपक्षयस्य सुवचत्वात्। उभयानुग्रहस्तु नैगमयुक्तिप-

बन्धः साद्यवशेषः—सादिव्यतिरिक्तस्त्रिविधोऽपि, तद्यथा—अनादिरध्रुवो ध्रुवश्च। तत्रानादित्वं सर्वदैव भावात्, ध्रुवोऽभव्यानां, कालान्तरे व्यवच्छेदासम्भवात्, अध्रुवो भव्यानामयोगिगुणस्थानके व्यवच्छेदभावात्। तथा शेषाणां ज्ञानावरणदर्शनावरणमोहनीयनामगोत्रान्तरायाणां साद्यादिः, सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्रोपशान्तमोहगुणस्थानकात्प्रच्यवमानस्य सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया, तथा चाह—'भव्वाभव्वेसु अधुवधुवो' भव्येष्वध्रुवोऽभव्येषु ध्रुवः ॥२७॥

उत्तरप्रकृतीनां साद्यादिबन्धसम्भवमाह—

**साई अधुवो सव्वाण होइ धुवबंधियाण णाइधुवो। नियय अबंधचुयाणं साइ अणाई अपत्ताणं ॥२८॥**

(स्वो०)—सादिरध्रुवश्च सर्वासां प्रकृतीनां बन्धो भवति, स्वकीयबन्धोपरमे सर्वासामध्रुवो भवति, भूयोऽपि बन्धं कुर्वतः सादिरिति, ध्रुवबन्धिनीनां सप्तचत्वारिंशत्प्रकृतीनां अनादिर्ध्रुवश्च भवतीत्येतद् भावयति, निजात्—आत्मीयादबन्धाच्च्युतानां सादिर्भवति। यस्याः प्रकृतेर्यत्राबन्धस्तद्दर्शयति—मिथ्यात्वस्त्यानर्द्धित्रिकानन्तानुबन्धिनां सम्यग्मिथ्यादृष्ट्यादिषु, द्वितीयतृतीयकषायाणां देशविरतप्रमत्तयोः, निद्राप्रचलयोर्नामध्रुवाणां भयजुगुप्सयोश्च बादरादिषु, सञ्ज्वलनानां सूक्ष्मादिषु, ज्ञानान्तरायदर्शनचतुष्काणामुपशान्ते बन्धाभावो ध्रुव इत्यर्थः, इत्येतेभ्यः स्थानेभ्यश्च्युतानां तासां सादिर्भवति, तत्स्थानाप्राप्तानामनादिर्बन्धो, यश्चानादिः सोऽभव्येषु ध्रुव इति, भव्याभव्यान् सर्वत्राधिकृत्य भावनीयमिति गाथार्थः ॥२८॥

(मलय०)—सांप्रतमुत्तरप्रकृतीरधिकृत्यैकैकप्रकृतिबन्धे सादित्वादि प्ररूपयति—सर्वासामपि ध्रुवबन्धिनीनां—ज्ञानावरणपञ्चकदर्शनावरणनवकान्तरायपञ्चकषोडशकषायमिथ्यात्वभयजुगुप्सागुरुलघुनिर्माणतैजसकार्मणोपघातवर्णादिचतुष्टयरूपाणां सप्तचत्वारिंशत्संख्या-

जघन्या जघन्यादि-भङ्गप्ररूपणा

॥२१६॥

क्रिया विरतिसंवरान्तर्गतत्वेनेव ज्ञानं सम्यक्त्वसंवरान्तर्गतत्वेनागच्छत्कर्म प्रतिरुणद्धि, तपोंशेन च तद्व- व सञ्चितं कर्म क्षिणोति, तत उभाभ्यामनागतबन्धाभावात् प्राक्तनस्य च निःशेषस्य परिक्षयाद्भवति योगिनो ोक्षप्राप्तिः। भोगस्तु प्रदेशविषयो नियतो, विपाके विपाकानुभवे तु, भाज्यत्वं विकल्पः। हे अनघ इत्येत- ाच वचनं प्रमाणं युक्तियुक्तत्वात्,

एवमिति, ज्ञानं क्रियेवेत्यादिश्लोकस्तु ग्रन्थकृट्टीकाऽलङ्कृत इति न टीकान्तरसापेक्षी, ग्रन्थकृन्मूलश्लोकं विवृणोति क्रिये- ादिना, तद्वदेव क्रियावदेव, भोगस्तु प्रदेशविपयो नियत इति, व्याप्यसामग्री व्यापकसामग्रीनियतेति यत्र विपाका- ुभवसामग्री तत्र प्रदेशानुभवसामग्र्या अवश्यम्भावेन यत्र विपाकानुभवसामग्र्याः कर्मक्षयस्तत्रापि प्रदेशानुभवस्यावश्यम्भाव इति नियत इत्यर्थः। विपाकानुभवस्तु न नियतः, केवलप्रदेशानुभवस्थले तदभावादिति कदाचिद्भवति कदाचिन्नेत्याह विपाक इति—

तथा च नाभुक्तमित्यादौ भोगपदं प्रदेशानुभवपरं चेत् नियमो युज्यते न विपाकानुभवपरत्व इति द्रष्ट- यम्, तथा च पारमर्षं 'तत्थ णं जं तं पएसकम्मं तं णियमा वेएइ, तत्थ णं जं अणुभागकम्मं तं सिय वेएइ ेय णो वेएइत्ति' प्रदेशतः पर्यायतश्च सांशपुद्गलविशेषरूपत्व एव चादृष्टस्य सहस्रसमूहालम्बनस्मरणादि- ानितस्य तस्यांशिककीर्त्तनप्रायश्चित्तादिनांऽशतो नाशो लोके लोकोत्तरे च स्थितिघातरसघाततद्वृद्ध्यादिकमु- ुपपद्यते, कर्मक्षयेऽवर्जनीयसन्निधिकत्वाच्च प्रदेशभोगस्य न तदनुद्देश्यकप्रायश्चित्तविध्यादिव्याघातः,

बन्धं प्रति योग्यायोग्याः प्रकृतयः

(मलय०)—तदेवं कृता साद्यादिप्ररूपणा। सम्प्रति स्वामित्वं वक्तव्यं, तत्र याः प्रकृतयो येषां बन्धमधिकृत्यायोग्या न ते तासां बन्धं प्रति स्वामिनः, इत्युक्तावर्थादितरासां स्वामिन इत्यवगम्यते। बन्धमधिकृत्यायोग्याश्च प्रकृतयश्चतसृष्वपि गतिषु प्रत्येकं स्तोकाः प्राप्यन्ते, ततो लाघवाय या येषामयोग्यास्तास्तेषां प्रतिपिपादयिषुः प्रथमतस्तिरश्चामयोग्याः प्रतिपादयति—नरकत्रिकं—नरकगतिनरकानुपूर्वीनरकायुर्लक्षणं, देवत्रिकं—देवगतिदेवानुपूर्वीदेवायूरूपं, वैक्रियं—वैक्रियद्विकं, सर्वसंख्ययाऽष्टौ प्रकृतय एकेन्द्रियविकलेन्द्रियाणां बन्धे न भवन्ति, बन्धयोग्या न भवन्तीत्यर्थः। तथा मनुष्यत्रिकं—मनुष्यगतिमनुष्यानुपूर्वीमनुष्यायुर्लक्षणं, उच्चैर्गोत्रं, चशब्दात्प्रागुक्ताश्चाष्टौ प्रकृतयः, सर्वसंख्यया द्वादश गतित्रसे—तैजस्कायिके वायुकायिके वा बन्धमधिकृत्यायोग्याः। तथा तिरश्चां सर्वेषामपि तीर्थकरनामाहारकं—आहारकशरीरमाहारकांगोपाङ्गं च बन्धं प्रत्ययोग्यं, तथास्वाभाव्यात्। अयं चात्र तात्पर्यार्थः—तीर्थकराहारकद्विकरहितानां शेषाणां सप्तदशोत्तरशतसंख्यानां प्रकृतीनां सामान्यतः पञ्चेन्द्रियतिरश्चो बन्धं प्रति स्वामिनः, एकेन्द्रियविकलेन्द्रिया आहारकद्विकतीर्थकरवैक्रियद्विकनरकत्रिकदेवत्रिकव्यतिरिक्तानां शेषाणां नवोत्तरशतसंख्यानां, तैजस्कायिकवायुकायिकास्तीर्थकराहारकद्विकवैक्रियद्विकनरकत्रिकदेवत्रिकमनुष्यत्रिकोच्चैर्गोत्रव्यतिरिक्तानां शेषाणां पञ्चोत्तरशतसंख्यानामिति ॥२९॥

सर्वदेवानामबन्धयोग्या आह—

**वेउव्वाहारदुगं नारयसुरसुहुमविगलजाइतिगं। बंधहि न सुरा सायवथावरएगिंदि नेरइया ॥३०॥**

(स्वो०)—वैक्रियाहारकद्विकं—वैक्रियाहारकशरीरे तदङ्गोपाङ्गे च, नारकसुरसूक्ष्मविकलजातित्रिकं, नारकसुरयोः(त्रिकं) प्राग्वत्, सूक्ष्मत्रिकं—सूक्ष्मसाधारणापर्याप्तप्रकृतयः, विकलत्रिकं—द्वित्रिचतुरिन्द्रियजातयः एताः षोडश प्रकृतयोऽशेषसुरा न बध्नन्ति, आतपस्था-

तिशयमात्रप्रभवत्वात् न ज्ञानातिशयव्यापकं, विपरीतज्ञानवासनायास्तु नादृष्टहेतुत्वं, वैपरीत्यस्य तत्तत्पदार्थघटितत्वेन विशिष्यानन्तकार्यकारणभावकल्पने गौरवात्, विनश्यदवस्थतत्सहकृततत्त्वज्ञानजन्यादृष्टस्यानन्तत्वापत्तेश्च, किन्तु वैजात्येन ज्ञानस्य चारित्रस्य वा साम्परायिककर्मबन्धप्रतिबन्धकत्वमित्येव युक्तमित्यादि भावनीयं लोकलोकोत्तरमार्गाविरोधिनीभिर्युक्तिभिरिति किमतिप्रपञ्चेन ॥ ८० ॥

तथा चेति, प्रदेशभोगो हि विपाकभोगव्यापक इति तस्य विपाकभोगस्थलेऽप्यवश्यम्भावित्वे चेत्यर्थः। तदानन्तर्यमात्रे, प्रदेशभोगानन्तर्यमात्रे। शरीरभिन्नात्मसाक्षात्कारविशेषविरहमपेक्ष्य लाघवेन शरीराहंत्वासनाया विपरीताहंत्वासनाया एव वा कारणत्वादिति यदुक्तमेकषष्ठितमश्लोकटीकायां तन्निरसनायाह विपरीतज्ञानवासनायास्त्विति,तत्सहकृतेति विपरीतज्ञानवासनासहकृतेत्यर्थः, साम्परायिकेति आदशमगुणस्थानभाविकषायनिमित्तककर्मबन्धप्रतिबन्धकत्वमित्यर्थः,यथाख्यातचारित्रप्राप्त्यनन्तरं साम्परायिककर्मबन्धाऽभावात् ईर्यापथिकनिमित्तककर्मबन्धस्यैव तदा भावादिति भावः॥८०॥ एकाशीतितमादिश्लोकावतरणिकामाह–

अथात्रैव नयवादप्रदर्शनपूर्वं तत्परिशोधनेन तद्दिगुपदर्शकभगवद्वचनगुणस्तवं यावत्परिसमाप्ति मनसि कृत्वाह

अथेति, अत्रैव–ज्ञानक्रिययोः मुक्तिजनकत्व एव, तत्परिशोधनेन नयपरिशोधनेन, तद्दिगुपदर्शकेति नयशुद्धिप्रकारोपदर्शकेत्यर्थः।

ज्ञानं प्रधानमिह न क्रियया फलाप्तिः, शुक्तावुदीक्ष्यत इयं रजतभ्रमाद्यत् ॥
आकर्षणादि कुरुते किल मन्त्रबोधो, क्रीणेव दर्शयति तत्र न च क्रियास्यम् ॥ ८१ ॥

शुभाशुभत्वप्ररुपणा ११, च । तत्र स्थितिप्रमाणप्ररूपणा द्विविधा, तद्यथा, उत्कृष्टस्थितिप्ररुपणा जघन्यस्थितिप्ररुपणा च। एकैकापि द्विविधा, तद्यथा-मूलप्रकृतिविषयोत्तरप्रकृतिविषया च । तत्र प्रथमतो मूलप्रकृतिविषयामुत्कृष्टां स्थितिमाह-मोहे-मोहनीये षष्ठीसप्तम्योरर्थं प्रत्यभेदान्मोहनीयस्य कर्मण उत्कृष्टा स्थितिः सप्ततिसागरोपमकोटीकोट्यः । इह द्विधा स्थितिस्तद्यथा-कर्मरूपतावस्थानलक्षणाऽनुभवयोग्या च। तत्र कर्मरूपतावस्थानलक्षणामेव स्थितिमधिकृत्योत्कृष्टं जघन्यं वा प्रमाणमभिधातुमिष्टमवगन्तव्यम् । अनुभवयोग्या पुनरबाधाकालहीना। येषां च कर्मणां यावत्यः सागरोपमकोटीकोट्यस्तेषां तावन्ति वर्षशतान्यबाधाकालः, तथा च वक्ष्यति-'एवइयाबाहवाससया' तेन मोहनीयस्योत्कृष्टा स्थितिः सप्ततिसागरोपमकोटीकोट्यः, इति तस्य सप्ततिर्वर्षशतान्यबाधाकालः । तथाहि-तन्मोहनीयमुत्कृष्टस्थितिकं बद्धं सत् सप्ततिवर्षशतानि यावन्न काञ्चिदपि स्वोदयतो जीवस्य बाधामुत्पादयति, अबाधाकालहीनश्च कर्मदलिकनिषेकः; किमुक्तं भवति ? सप्ततिवर्षशतप्रमाणेषु समयेषु मध्ये न वेद्यदलिकनिक्षेपं करोति, किन्तु तत ऊर्ध्वमिति । तथा नामगोत्रयोरुत्कृष्टा स्थितिर्विंशतिः सागरोपमकोटीकोट्यः, द्वे वर्षसहस्रे अबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः । तथेतरेषां चतुर्णां ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां त्रिंशत्सागरोपमकोटीकोटय उत्कृष्टा स्थितिः, त्रीणि वर्षसहस्राण्यबाधा. अबाधाकालहीनश्च कर्मदलिकनिषेकः । आयुष उत्कृष्टा स्थितिस्त्रयस्त्रिंशदतराणि-सागरोपमाणि पूर्वकोटित्रिभागाभ्यधिकानि, पूर्वकोटित्रिभागोऽबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥३१॥

जघन्यस्थितिमानमाह-

**मोत्तुमकसाइ तणुया ठिइ वेयणियस्स बारसमुहुत्ता । अट्ठट्ठ नामगोयाण सेसयाणं मुहुत्तंतो ॥३२॥**

पश्यन्ति किं न कृतिनो भरत प्रसन्न–चन्द्रादिषूभयविधं व्यभिचारदोषम् ॥
द्वारीभवन्त्यपि च सा न कथञ्चिदुच्चै–र्ज्ञानं प्रधानमिति सङ्गरभङ्गहेतुः ॥ ८२ ॥

उभयविधं व्यतिरेकान्वयव्यभिचारभेदभिन्नं, कथञ्चिद्भोगसम्पादककार्यत्वेन, अन्यथा तीर्थकराणामपि केषाञ्चिदल्पक्रियया केषाञ्चिच्च बहुक्रियया मुक्तिप्राप्तिरिति विशेषानुपपत्तेरिति भावः। संगरः प्रतिज्ञा ॥८२॥

पश्यन्तीत्यादिमूलश्लोकः, भरतप्रसन्नचन्द्रादिषूभयविधं व्यभिचारदोषं भरतचक्रवर्तिनि मरुदेवादौ च क्रियाया अभावेऽपि सम्यग्ज्ञानात् मोक्षफलावाप्तिरिति व्यतिरेकव्यभिचारं प्रसन्नचन्द्रादौ पूर्वं क्रियायास्सद्भावेऽपि न मोक्षफलसम्पत्तिरित्यन्वयव्यभिचारम्, कृतिनः प्राज्ञाः, किन्न पश्यन्ति, अपि तु पश्यन्त्येवेत्यर्थः। च पुनः, नन्वेवं तर्हि किं क्रिया नैव कारणमित्यत आह द्वारीभवन्त्यपीत्यादि, सा क्रिया मुख्यकारणतां बिभ्रतो ज्ञानस्य कथञ्चिद् द्वारीभवन्त्यपि, उच्चैर्ज्ञानं प्रधानमिति सङ्गरस्य प्रतिज्ञाया यो भङ्गस्तस्य हेतुर्न, ज्ञानेन मोक्षफलोत्पादने क्रिया द्वारीभवतु नच तत्र काऽपि क्षतिः, क्रिया द्वारीभूतैव मुख्यं तु कारणं ज्ञानमेवेति भावः। टीकायां कथञ्चिदित्यस्य विवरणं भोगसम्पादककार्यत्वेनेति, अन्यथा तद्वैपरीत्येन क्रियाया मुक्तिहेतुत्वे ॥८२॥ न केवलं क्रियातः प्रधानं ज्ञानं दर्शनादपि प्रधानं तदित्याह—

सम्यक्त्वमप्यनवगाढमृते किलैत–दभ्यासतस्तु समयस्य सुधावगाढम् ॥
ज्ञानं हि शोधकममुष्य यथाञ्जनं स्या–दक्ष्णो यथा च पयसः कतकस्य चूर्णम् ॥ ८३ ॥

अवगाढसम्यक्त्वहेतुत्वेन सम्यक्त्वदोषापनोदकत्वेन च सम्यक्त्वादप्यभ्यर्हितं ज्ञानमिति भावः ॥ ८३ ॥

उत्तरप्रकृतीनामुत्कृष्टस्थिति प्रमाणं

धुराणां—शुक्लवर्णसुरभिगन्धमधुररसानां, तथा शुभानां चतुर्णां स्पर्शानां मृदुस्निग्धलघूष्णरूपाणामुत्कृष्टा स्थितिर्दशसागरोपमकोटीकोटयः, दशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। तथाऽम्लहारिद्रपूर्वाणां—अम्लरसहारिद्रवर्णप्रभृतीनां रसवर्णानामेकैकप्रकृतिवृद्धावर्द्धतृतीयप्रवृद्धा—अर्द्धतृतीयसागरोपमकोटीकोटीवृद्धिसहिता वेदितव्या। तद्यथा—अम्लरसहारिद्रवर्णयोरुत्कृष्टा स्थितिः सार्द्धद्वादशसागरोपमकोटीकोटीप्रमाणा, सार्द्धद्वादशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। कषायरसरक्तवर्णयोः पञ्चदशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः, पञ्चदशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। कटुरसनीलवर्णयोरुत्कृष्टा स्थितिः सार्द्धाः सप्तदशसागरोपमकोटीकोटयः, सार्द्धसप्तदशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। तिक्तरसकृष्णवर्णयोः तु शब्दस्याधिकार्थसंसूचनाद् दुरभिगन्धगुरुकर्कशरूक्षशीतानां चोत्कृष्टा स्थितिर्विंशतिः सागरोपमकोटीकोटयः, द्वे वर्षसहस्रे अबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥३३॥

**तीसं कोडाकोडी असायआवरणअंतरायाणं। मिच्छे सयरी इत्थीमणुदुगसायाण पन्नरस ॥३४॥**

(स्वो०)—त्रिंशत्कोटाकोट्यः असातस्य 'आवरण'इति–ज्ञानदर्शनावरणोत्तरप्रकृतीनां अन्तरायप्रकृतीनां च, सप्ततिर्मिथ्यात्वस्य, स्त्रीवेदमनुष्यद्विकसातानां पञ्चदश कोटाकोट्यः उत्कृष्टा स्थितिरिति गाथार्थः ॥३४॥

(मलय०)—असातवेदनीयस्य, पञ्चानां ज्ञानावरणप्रकृतीनां—मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यवज्ञानावरणकेवलज्ञानावरणरूपाणां, नवानां दर्शनावरणप्रकृतीनां—निद्रापञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणानां, पञ्चानामन्तरायप्रकृतीनां—दानान्तरायलाभान्तरायभोगान्तरायोपभोगान्तरायवीर्यान्तरायरूपाणां, सर्वसङ्ख्यया विंशतिप्रकृतीनामुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीको-

क्रियाध्याहारः, स तत्सारशून्यहृदयः तयोश्चरणकरणयोः सारं फलं ज्ञानदर्शनोपयोगात्मकं निष्कलङ्कं तेन शून्यहृदयः तद्रहितान्तःकरणो बुधैरभाणि प्राज्ञैरगादि, तत् तस्माद्धेतोः एकज्ञानमभिवन्द्यं स्तुत्यम्, अतः इतरन्यवच्छेदेन स्याद्वादतत्त्वज्ञानात्,अन्यैः किं, न किमपि प्रयोजनमित्यर्थः। अथवा तयोश्चरणकरणयोस्सारं निश्चयेन शुद्धं सम्यग्दर्शनं तद्व्यतिरेकेण तयोर्मोक्षफलानुत्पादकत्वात् तद्रहितान्तःकरणोऽभाणि, न हि यथावस्थितवस्तुतत्त्वावबोधमन्तरेण तद्रुचिलक्षणसम्यग्दर्शनं, न च स्वसमयपरसमयतात्पर्यार्थाऽनवगमे तदवबोधः बोटिकादेरिव सम्भवी, अथ यथावस्थितजीवादिद्रव्यार्थपर्यायार्थानवबोधेऽपि "मण्णइ तमेव सच्चं निस्संकं जं जिणेहिं पन्नत्तं" इत्याद्यागमप्रामाण्यात् यदर्हद्भिः प्ररूपितं तदेव सत्यं नान्यदित्येवं सामान्यतोऽवबोधबलेन सम्यग्दर्शनसद्भावान्न तत्सारशून्यहृदय इति चेत्, मैवम्, स्वसमयपरसमयपरमार्थानभिज्ञैर्निरावरणज्ञानदर्शनात्मकजिनस्वरूपाज्ञानवद्भिस्तदभिहितभावानां सामान्यरूपतयाप्यन्यव्यवच्छेदेन सत्यस्वरूपतया ज्ञातुमशक्यत्वात्, नन्वेवमागमविरोधः, सामायिकमात्रपदविदो माष–तुषादेर्यथोक्तचारित्रिणस्तत्र मुक्तिप्रतिपादनात्, सकलशास्त्रार्थज्ञताविकलव्रतस्य व्रताद्याचरणैरर्थक्यापत्तिश्च, तत्साध्यफलानवाप्तेरिति चेत्, मैवम्, यथोदितचरणकरणप्ररूपणासेवनद्वारेण सर्वगुणमूलभूतगीतार्थाचार्यनिश्रयाचरणकरणप्रवृत्तेस्तत्सारं लभत एव, तथा च माषतुषादीनां स्वयं विशेषतो ज्ञानविरहेऽपि या केवलज्ञानोत्पत्तिस्ततो मुक्तिश्च शास्त्रे श्रूयते सा गुरुपरतन्त्रत्वादेव, उक्तञ्चैकादशे पञ्चाशके "गुरुपारतंतनाणं सद्दहणं एयसङ्गयं चेव। एत्तो उ चरित्तीणं मासतुसादीण मुदिट्ठम्"॥१॥ इति, सकलशास्त्रार्थज्ञताविकलव्रतस्यापि गुर्वाज्ञावशवर्त्तिनो व्रताद्यनुष्ठानस्य न वैफल्यं, तत्साध्यफलावाप्तेः, गुर्वाज्ञया प्रवृत्तेः, चरणगुणस्थितत्वेन तस्य साधोस्सर्वनयविशुद्धतया अभ्युपगमात्, "तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू" इत्याद्या-

उत्तरप्रकृतीनामुत्कृष्टस्थितिप्रमाणं

टीकोटयः, षोडशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। पञ्चमयोः संस्थानसंहननयोर्वामनकीलिकाख्ययोरष्टादशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः, अष्टादशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। षष्ठयोः संस्थानसंहननयोः हुण्डसेवार्त्तनामकयोर्विंशतिः सागरोपमकोटीकोटय उत्कृष्टा स्थितिः, द्वे वर्षसहस्रे अबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। तथा 'सुहुमति' त्ति–सूक्ष्मत्रिकस्य सूक्ष्मापर्याप्तसाधारणरूपस्य, वामनस्य वामनाख्यसंस्थानस्य 'विगले' इति विकलेन्द्रियस्य द्वित्रिचतुरिन्द्रियजातिरूपस्य सर्वसङ्ख्यया सप्तानां प्रकृतीनामष्टादशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः, अष्टादशवर्षशतान्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। इह वामनं केचिच्चतुर्थं संस्थानं प्रतिपन्नाः, ततस्तन्मतेन तस्योत्कृष्टा स्थितिः षोडशसागरोपमकोटीकोटयः प्राप्नोति, न च सेष्यते, तस्मात्पञ्चममेवेदं संस्थानमिति प्रतिपत्त्यर्थं भूयोऽपि तस्योपादानमिति। तथा कषायाणामनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनरूपाणां षोडशानामपि प्रत्येकमुत्कृष्टा स्थितिश्चत्वारिंशत्सागरोपमकोटीकोटयः, चत्वारि वर्षसहस्राण्यबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥३५॥

पुंहासरईउच्चे सुभखगतिथिराइछक्कदेवदुगे। दस सेसाणं वीसा एवइयाबाहवाससया ॥३६॥

(स्वो०)–पुरुषवेदहास्यरत्युच्चैर्गोत्रेषु शुभविहायोगतिस्थिरादिषट्कमिति–स्थिरशुभसुस्वरसुभगादेययशांसि देवद्विकमित्येतासां त्रयोदशानां प्रकृतीनां दश कोटाकोटयः स्थितिः, एवमेतासां पट्सप्ततीनां स्थितिरुक्ता, सप्तानां वक्ष्ये, शेषाणां सप्तत्रिंशतां विंशतिसागरोपमकोटाकोटयः ताश्चेमाः–भयजुगुप्से अरतिशोके नपुंसकं नीचैर्गोत्रं च नरकतिर्यगौदारिकवैक्रियद्विकान्यगुरुलघुत्रसादिचतुष्कं अस्थिरादिषट्कं स्थावरातपोद्योतोपघातपराघातोच्छ्वासाशुभविहायोगतिनिर्माणैकेन्द्रियजातिपञ्चेन्द्रियजातितैजसकार्मणशरीराणीति शेषाः।

भ्रष्टेन संयमपदादवलम्बनीयं, सम्यक्त्वमेव दृढमत्र कृतप्रसङ्गाः ॥
चारित्रलिङ्गवियुजोऽपि शिवं व्रजन्ति, तद्वर्जितास्तु न कदाचिदिति प्रसिद्धिः ॥ ८६ ॥

भ्रष्टेनेति मूलम्, तस्य चायमर्थ संयमपदात् अतिदुष्करत्वेन शेषनागरत्नग्रहणकल्पाच्चारित्रमार्गाद्, भ्रष्टेन नरेण, सम्यक्त्वमेव दृढमवलम्बनीयम्, अत्र हेतुः चारित्रलिङ्गवियुजोऽपि चारित्रलिङ्गरहिता अपि, अत्र सम्यक्त्वे, कृतप्रसङ्गाः कृतः प्रकर्षेण सङ्गः परिचयः अभ्यास इति यावत् यैस्ते तथा, शिवं मोक्षं व्रजन्ति गच्छन्ति, तद्वर्जिताः सम्यक्त्वरहिताः, तु पुनः, न कदाचित् न कस्मिंश्चिदपि काले, अत्रावृत्त्या शिवं व्रजन्तीत्यस्यान्वयः, इति एवं प्रकारेण प्रसिद्धिः ख्यातिः, सिद्धान्ते इति शेषः, तदुक्तं "भट्ठेण चरित्ताओ, सुट्ठुयरं दंसणं गहियव्वं। सिज्झन्ति चरणरहिया, दंसणरहिया न सिज्झंति" इति, अन्यत्रापि प्रतिपादिताः सम्यक्त्वाभ्यर्हितत्वार्थवादाः "सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनेकशः, बोधिर्न जातुचित्प्राप्तो भवभ्रमणदर्शनात् ॥१॥ अन्तर्मुहूर्त्तमपि यः समुपास्य जीवः सम्यक्त्वरत्नममलं विजहाति सद्यः। बंभ्रम्यते भवपथे सुचिरं न सोऽपि तद्बिभ्रतश्चिरतरं किमुदीरयामः ॥२॥ तिर्यग्नरकयोर्द्वारे स्थेतत् सम्यक्त्वमर्गला, देवमानवनिर्वाणसुखाप्तौ प्रतिभूः पुनः ॥३॥ मूलं बोधिद्रुमस्यैतत् द्वारं पुण्यपुरस्य च। पीठं निर्वाणहर्म्यस्य, निधानं सर्वसंपदाम् ॥४॥ गुणानामेक आधारो रत्नानामिव सागरः ॥ पात्रं चारित्रवित्तस्य सम्यक्त्वं श्लाघ्यते न कैः ॥५॥ श्लाघ्यं हि ज्ञानचरण–वियुक्तमपि दर्शनम्। न पुनर्ज्ञानचारित्रे मिथ्यात्वविषदूषिते ॥६॥ सम्प्राप्तबोधयो जीवा न रज्यन्ते भवे क्वचित्। निर्ममत्वाद् भजन्त्येक–मुक्तिमार्गमनर्गलाः ॥७॥ तेन ज्ञानचारित्राभ्यां, सम्यग्दर्शनमद्भुतम्। येनार्हतामपि भवाः, मन्नायन्तेऽस्य लाभतः ॥८॥ असंप्राप्ते बोधिरत्ने चक्रवर्त्त्यपि रङ्कवत्। संप्राप्तबोधिरत्नस्तु रङ्कोऽपि स्यात्ततोऽधिकः ॥९॥ इत्यादि

एवं भूयो भूयो यावत् बन्ध इति ॥३७॥

(मलय०)—संप्रत्यायुषामुत्कृष्टं स्थितिमानमाह–सुरायुषो (ग्रन्थाग्रम् ७०००) नारकायुषश्च प्रत्येकमुत्कृष्टा स्थितिरतराणि–सागरोपमाणि त्रयस्त्रिंशत्, नवरं पूर्वकोटित्रिभागाभ्यधिकानीति शेषः। तथेतरयोस्तिर्यग्मनुष्यायुषोरुत्कृष्टा स्थितिस्त्रीणि पल्योपमानि, अत्रापि पूर्वकोटित्रिभागाभ्यधिकानीति शेषः। तथा चतुर्ष्वप्यायुष्केषु पूर्वकोटित्र्यंशः–पूर्वकोटित्रिभागोऽबाधा, पूर्वकोटित्रिभागमध्ये बध्यमानायुर्दलिकनिषेकं न विदधातीत्यर्थः। वेद्यमानस्य ह्यायुषो द्वयोस्त्रिभागयोरपि निष्क्रान्तयोस्तृतीये भागेऽवशिष्टे परभवायुर्बन्धः, ततः पूर्वकोटित्रिभागोऽबाधा लभ्यते ॥३७॥

एवमुक्ते त्वाह परः—

**वोलीणेसुं दोसुं भागेसुं आउयस्स जो बंधो। भणिओ असंभवाओ न घडइ सो गइचउक्के वि ॥३८॥**

(स्वो०)—आयुषो द्वयोस्त्रिभागयोरतीतयोर्यो बन्धो भणितो न घटते स गतिचतुष्केऽप्यसम्भवाद्यत इति ॥३८॥

(मलय०)—एवमुक्ते सति पर आह–वेद्यमानस्यायुषो द्वयोर्भागयोस्त्रिभागयोर्व्यतिक्रान्तयोस्तृतीये भागेऽवशिष्टे परभवायुषो यो बन्ध उक्तः, स गतिचतुष्केऽपि–चतसृष्वपि गतिषु न घटते, कुतः? इत्याह–असंभवात् ॥३८॥

एतदेव भावयति परः—

**पलियासंखेज्जंसे बंधंति न साहिए नरतिरिच्छा। छम्मासे पुण इयरा तदाउ तंसो बहुं होइ ॥३९॥**

उत्तरप्रकृतीनामुत्कृष्टस्थिति प्रमाणं

सम्यक्क्रियेति पद्यं स्वयमेव विवृणोति ग्रन्थकारः—

सम्यक्क्रिया व्यभिचरेन्न फलं विशेषो, हेत्वागतो न परतोऽविनिगम्यभावात् ॥
न द्रव्यभावविषया बहिरन्तरङ्ग-भावाच्च कोऽपि भजनामनुपोह्य भेदः ॥ ८८ ॥

सम्यक्क्रिया फलं न व्यभिचरेत्, तेन शुक्तौ रजतार्थिचेष्टाया निष्फलत्वदर्शनात् सर्वत्र तदनाश्वास इति यद् ज्ञानवादिनोक्तं तन्निरस्तम्। एवं हि तत्र मिथ्याज्ञानेऽपि नैष्फल्यदर्शनात् सम्यग्ज्ञानेऽप्यनाश्वासप्रसङ्गात्, विशेषग्रहस्तूभयोरपि तुल्यः। क्रियायां सम्यक्त्वाख्यो विशेष एव कुत आगत इति चेत्, हेत्वागतः स्वहेतुसामर्थ्यायात इति प्रतीहि। यत एव हेत्वागतो विशेषोऽत एव परतः, परं चात्र ज्ञानमेव, तथा च क्रियागतफलौपयिकसम्यक्त्वाधायकत्वेन ज्ञानं विशिष्यत इति चेत्, न, अविनिगम्यभावात् विशेषनिर्द्धारकप्रमाणाविषयत्वात्। न हि ज्ञानमात्रस्य क्रियागतसम्यक्त्वाधायकत्वं, शुक्तिरजतधीस्थल एव व्यभिचारात्, किन्तु सम्यग्ज्ञानस्य तत्त्वं वाच्यम्, तच्च सम्यगवलोकनादिक्रियापेक्षमेवेति, आगमजं ज्ञानं क्रियानपेक्षमेव सम्यक्त्वं बिभर्तीति चेत्, अनाभोगतोऽपि सदन्धन्यायेन मार्गानुसारिणी क्रिया ज्ञानाऽनपेक्षं सम्यक्त्वं किन्न बिभर्ति, क्रियाऽवञ्चकाख्यस्याव्यक्तसमाधेरेष महिमा।

सम्यक्क्रिया फलं न व्यभिचरेदिति, फलोपधानरूपकारणत्वं सम्यक्क्रियायामेव नतु क्रियामात्रे, तथा च सम्यक्क्रिया नियमेन फलोत्पादिकेति सा फलाव्यभिचारिणीत्यभ्युपगमादेकाशीतिश्लोकोक्तः शुक्तावुदीक्ष्यते इयं रजतभ्रमाद्यदिति दोषो न,

निजाबाधां न मुञ्चति, नैकमपि समयं कर्मदलरहितं विदधातीति भावः, यदनुभूयमानस्याशेषं साऽबाधा यतो नैककालमायुर्द्वयस्यानुभवनम्, भणितं च–'परभविया जेण तस्स उ अबाधा' इति । अन्यच्च यावन्मात्रमनुभूयते, तावन्मात्रमेवोत्कृष्टेनापि बध्यते आयुरिति गाथार्थः ॥४०॥

(मलय०)—अत्रोत्तरमाह–येषां तिर्यक्संज्ञिपञ्चेन्द्रियाणां मनुष्याणां वाऽऽयुः, पूर्वकोटी–पूर्वकोटिप्रमाणं, तान्–परभवायुरुत्कृष्टस्थितिबन्धकानधिकृत्येदं भणितं, यदुत चतुर्ष्वप्यायुष्षु पूर्वकोटित्रिभागोऽबाधा, अनुभूयमानस्य पूर्वकोटिप्रमाणस्यायुषो द्वयोस्त्रिभागयोरतिक्रान्तयोस्तृतीये भागेऽवशिष्टे परभवायुषो बन्धसम्भवात् । 'भणियंपि' इत्यादि, तमपि पूर्वकोटित्रिभागं भणितं, निजाबाधाममुञ्चतो बध्यमानायुःसत्कस्वाबाधारूपत्वेनाऽपरित्यजन्त आयुः परभवायुर्बध्नन्ति । इयमत्र भावना–योऽसौ पूर्वकोटित्रिभागः पूर्वमबाधात्वेन प्ररूपितः, सोऽनुभूयमानभवायुषः सम्बन्धी प्रतिपत्तव्यः, न परभवायुषः, परभवायुषोऽनुभूयमानभवायुर्व्यतिरेकेण प्रथमसमये एव दलिकनिषेककरणात्, अस्मिंश्चार्थे कार तथास्वाभाव्यं, अत एवायुषोऽबाधा न नियता, तथाहि–नारकायुषो देवायुषो वोत्कर्षतस्त्रयस्त्रिंशत्सागरोपमप्रमाणस्थितिबन्धका अपि पूर्वकोट्यायुषः स्वायुस्त्रिभागे बन्धमारभन्ते, तेषां पूर्वकोटीत्रिभागोऽबाधा, ये वा स्वायुस्त्रिभागत्रिभागे तेषां पूर्वकोटिनवभागो, ये तु स्वायुस्त्रिभागत्रिभागत्रिभागे तेषां पूर्वकोटीसप्तविंशतिभागः, ये पुनः पर्यन्तवर्त्तिनि अन्तर्मुहूर्ते तेषामन्तर्मुहूर्त्तमिति ॥४०॥

एतदेव भावयति—

**निरुवक्कमाण छमासा इगिविगलाणं भवाट्ठिइ तंसो । पलियासंखेज्जंसं जुगधम्मीणं वयंतन्ने ॥४१॥**

तत्रापीति, अनाभोगतो मार्गानुसारिक्रियास्थलेऽपीत्यर्थः। क्रियावादी समाधत्ते आगमजेति। तत्र आगमजज्ञाने, न द्रव्यभावविषया कोऽपि भजनामनुपेत्य भेद इत्युत्तरार्द्धं प्रश्नमुखेन विवृणोति अथेत्यादिना, प्रणिधानादयः पुण्योपचयलक्षणपुष्टिपापक्षयजन्यनिर्मलतालक्षणशुद्ध्यनुबन्धकारिणः पञ्चाध्यवसायस्थानविशेषाः, "प्रणिधानं तत्समये, स्थितिमत्तदधः कृपाऽनुगं चैव। निरवद्यवस्तुविषयं, परार्थनिष्पत्तिसारं च ॥१॥ तत्रैव तु प्रवृत्तिः, शुभसारोपायसङ्गतात्यन्तम्। अधिकृतयत्नातिशयादौत्सुक्यविवर्जिता चैव ॥२॥ विघ्नजयस्त्रिविधः खलु, विज्ञेयो हीनमध्यमोत्कृष्टः। मार्गे इह कण्टकज्वरमोहजयसमः प्रवृत्तिफलः ॥३॥ सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया। अधिके विनयादियुता, हीने च दयादिगुणसारा ॥४॥ सिद्धेश्चोत्तरकार्यं, विनियोगोऽवन्ध्यमेतदेतस्मिन्। सत्यन्वयसंपत्त्या, सुन्दरमिति तत्परं यावत् ॥५॥ इति षोडशप्रकरणगतगाथोक्तलक्षणानुसारेण यद्यपि ते सर्वेऽपि कथञ्चित् क्रियारूपास्तथापि परमार्थतः तदुपलक्ष्या आशयभेदरूपा अवगन्तव्याः, अयञ्च पञ्चप्रकारोप्याशयो भाव उच्यते, आशयस्योपयोगरूपतया तस्य च भावलक्षणत्वात्, अनेन ज्ञानरूपभावेन विना कायवाङ्मनोव्यापाररूपा चेष्टा द्रव्यक्रियेति फलाऽजननी, तदुक्तम्, आशयभेदा एते, सर्वेऽपि हि तत्त्वतोऽवगन्तव्याः। भावोऽयमनेन विना, चेष्टा द्रव्यक्रिया तुच्छा ॥१॥ इतीत्थेवं क्रियातो ज्ञानस्य प्राधान्यमिति शङ्काऽऽशयः। ज्ञानविनिर्मुक्ता क्रिया द्रव्यक्रियैवेति क्रियाया अप्राधान्यं, तद्गतभावत्वोपनायकतया ज्ञानस्य च प्राधान्यमित्येकान्तो न कान्तः, स्याद्वादो हि तदतरस्वरूपत्वात्तदुभयस्वरूप इति ज्ञानक्रिययोर्द्वयोरपि स्याद्वादतो द्रव्यभावोभयरूपत्वव्यवस्थितेरिति समाधत्ते—

अत्रमपि भजनां स्याद्वादमनुपेत्यापरिगृह्य भेद एकान्तपक्षो न युक्तः, स्वस्थानसन्निकर्षेणोत्कर्षापकर्षरूप-

संख्येयभागादारभ्य तीर्थकरस्य त्रयस्त्रिंशत्सागरोपमाणि किंचिन्न्यूनपूर्वकोटिद्वयाभ्यधिकानीति शेषः। आहारकद्विकस्य पल्योपमासंख्येयभागमात्रम्। एतदुक्तं भवति-तीर्थकराहारकयोरन्तःसागरोपमकोटीकोटयाः संख्येयभागादारभ्य निकाचयितुमारब्धयोर्यदा सर्वात्मनाऽतीवाऽनयोर्निकाचना कृता भवति, तदा तीर्थकरनाम्न उत्कृष्टा स्थितिः किञ्चिन्न्यूनपूर्वकोटिद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि, तथाहि-तीर्थकरभवादर्वाक् तृतीये भवे पूर्वकोटयायुषा प्रथमत एव निकाचितं, ततोऽनुत्तरसुरेषु त्रयस्त्रिंशत्सागरोपमस्थितिको देवो जातः, ततोऽपि च्युत्वा चतुरशीतिपूर्वलक्षायुस्तीर्थकरो जायत इति। आहारकद्विकस्य तु पल्योपमासंख्येयभागः। संख्येयभागादारभ्येति वदत इदमावेद्यते-अल्पनिकाचितयोस्तीर्थकराहारकद्विकयोरन्तःसागरोपमकोटीकोटयाः संख्येयतमो भाग उत्कृष्टा स्थितिः, सुनिकाचितयोस्तु त्रयस्त्रिंशत्सागरोपमादिकेति ॥४२॥

आह परः—

**अंतोकोडाकोडी ठिइए वि कहं न होइ ? तित्थयरे। संते कित्तियकालं तिरिओ अह होइ उ विरोहो ॥४३॥**

(स्वो०)—अन्तःकोटाकोटी यदि सत्ता तीर्थकरस्य ततः तिर्यग्भवं विना कथं भ्रान्तः ? अथ तिर्यग्गतावपि गतस्ततः आगमविरोध इति ॥४३॥

(मलय०)—सम्प्रति यदुक्तमनिकाचितावस्थायामुत्कृष्टं स्थितिमानं तीर्थकरनाम्नोऽन्तःसागरोपमकोटीकोटीप्रमाणमिति, तदधिकृत्य परः प्रश्नयति-अन्तःकोटीकोटीस्थितिकेऽपि तीर्थकरे-तीर्थकरनामकर्मणि सति-विद्यमाने कथं कियत्कालं कियन्तं कालं यावत्तिर्यग् न भवति ? तिर्यग्भवभ्रमणमन्तरेण तावत्याः स्थितेः पूरयितुमशक्यत्वात्। अथ मन्यसे, भवति कियत्कालं तीर्थकरनामसत्कर्मापि

मोक्षमुद्दिश्य ज्ञानविशिष्टा क्रिया विधेयतया प्राप्ता, येन तदवच्छेदकत्वाज्ज्ञानस्य प्राधान्यं स्यादिति भावः। अभ्यस्तं विधेयमिति अभ्यस्तम् अभ्यासविशिष्टम्, अभ्यासश्च क्रिया, तथा चाभ्यासस्य क्रियात्मकस्य ज्ञानविधौ विशेषणत्वेनावच्छेदकत्वात् क्रियाया अपि क्रियाविध्यवच्छेदकत्वाद् ज्ञानस्येव प्राधान्यं स्यादित्यर्थः। ज्ञानवादी शङ्कते अथेति, यद्व्यतिरेकप्रयुक्त इति यदपरकारण-विरहप्रयुक्तो यस्य कारणस्य शास्त्रोक्तस्याव्यवहितपूर्ववर्तित्वलक्षणजनकतासम्बन्धेन मुख्यकार्याभावः मुख्यकार्योत्पादकत्वाभाव इति यावत्, प्रकृते यद्व्यतिरेक इत्यत्र यत्पदेन ज्ञानं ग्राह्यम्, यस्येत्यत्र यत्पदेन च चारित्रम्, प्रधानफलं चात्र मोक्षः, तद-पेक्षया ज्ञानापेक्षया, यत्तदोर्नित्यसम्बन्धाद् यस्येत्युक्तिबलेन तदित्यध्याहार्यं, तत् चरणम्। एवं सति प्रधानफलसम्बन्धाभावप्र-योजकाभावप्रतियोग्यपेक्षया गौणत्वे द्रव्यत्वे च सति, सम्यक्क्रियात्वं कारणताऽन्यूनानतिप्रसक्तमिति तद्रूपेण कारणतया सम्य-क्क्रियातो मोक्षफलमुत्पद्यत एवेति तत्र प्रधानफलसम्बन्ध एव वर्त्तते, न तदभावः, येन तस्य ज्ञानविरहप्रयुक्तत्वं स्यादिति न सम्यक्क्रियात्वेन रूपेण गौणत्वं द्रव्यत्वं वा, किन्तु क्रियात्वं मिथ्याक्रियायामपि वर्त्तते न च तत्र मोक्षकारणत्वमित्यतिप्रसक्ततया कारणतानवच्छेदकेन क्रियात्वरूपेणैव, तथा सति ज्ञानत्वस्यापि मिथ्याज्ञाने वृत्तेरतिप्रसक्ततया कारणतानवच्छेदकत्वात्तद्रूपेण ज्ञानस्यापि तथात्वं स्यादित्याशयेनाह तस्याश्चोभयत्राऽविशेषादिति, एतदेव भावयति नहीति, एतेन ज्ञानक्रिययोर्द्रव्यत्वप्रसङ्गसाम्येन। प्रतिपदेत्यादि, स्वस्वपदानभिहितं यत्फलजनकतावच्छेदकरूपं तद्वत्त्वमित्यर्थः, पुनः क्रियापेक्षया ज्ञानस्य प्राधान्यं ज्ञानवादी शङ्कते—

अथ प्रणिधानादिविरहे विधिवैकल्येन लौकिकत्वमेव द्रव्यत्वं क्रियायाः, तद्भावे च लोकोत्तरत्वं भावत्व-मित्ययमस्ति क्रियागतो विशेषः, तदुक्तम्—एवंविधेनेत्यादि, ज्ञानं तु स्वत एव भावः, तदुक्तं—तात्त्विकः पक्ष-

कश्चिद्विरोधः ॥४४॥

उत्कृष्टस्थितिसमाप्ता, नियमार्थमाह—

**पुव्वकोडीपरओ इगि विगलो वा न बंधए आउं। अंतो कोडाकोडीए आरउ अभव्वसन्नी उ ॥४५॥**

(स्वो०)—वर्षाणां पूर्वकोटेः परतः पूर्वकोटयभ्यधिकं नायुःकर्म एकेन्द्रियो विकलेन्द्रियो वा बध्नाति। अन्तःकोटाकोटेरारतो हीनतरं संज्ञी न बध्नात्यभव्यः, तुशब्दादनायुषां सप्तानां कर्मणामिति ॥४५॥

(मलय०)—तदेवमुत्कृष्टस्थितिमानमुक्तम्। सम्प्रति जघन्यं स्थितिमानं वक्तव्यं, तत्र मूलप्रकृतीनां जघन्यं प्रागेवोक्तं, अधुना नियमविशेषमाह–इह चतुरशीतिवर्षशतसहस्राणि चतुरशीतिवर्षसहस्रैर्गुण्यन्ते, जातानि वर्षाणां सप्ततिः कोटिलक्षाणि षट्पञ्चाशच्च कोटिसहस्राः, एतावत्पूर्वस्य परिमाणं, उक्तं च—"पुव्वस्स उ परिमाणं, सयरी खलु होंति कोडिलक्खाओ। छप्पन्नं च सहस्सा बोधव्वा वासकोडीणं ॥१॥" एवं परिमाणानां पूर्वाणां कोटी पूर्वकोटी, तस्याः परतः पूर्वकोटीपरतः पूर्वकोट्यभ्यधिकमित्यर्थः। आयुःकर्मैकेन्द्रियो विकलेन्द्रियो वा न बध्नाति, किंतूत्कर्षतोऽपि पूर्वकोटिप्रमाणं, तथाऽभव्यसंज्ञी, तुशब्दस्याधिकार्थसंसूचनादायुर्वर्जानि सप्त कर्माण्यन्तःकोटीकोट्याः–अन्तःसागरोपमकोटीकोट्या आरतो हीनानि हीनतराणि न बध्नाति, किंतु जघन्यतोऽप्यन्तःसागरोपमकोटीकोटीप्रमाणानि ॥४५॥

उत्तरप्रकृतीनां जघन्यां स्थितिमाह—

उत्तरप्रकृतीनां जघन्यस्थिति प्रमाणं

**सुरनारयाउयाणं दसवाससहस्स लघु सतित्थाणं। इयरे अंतमुहुत्तं अंतमुहुत्तं अबाहाओ ॥४६॥**

अथ यज्जातीयापेक्षया यज्जातीयस्य फलं प्रति दूरव्यवधानं तज्जातीयापेक्षया तज्जातीयं द्रव्यमिति ज्ञानापेक्षया क्रियाया द्रव्यत्वमिति चेत्, न, ज्ञानत्वावच्छिन्नापेक्षया चारित्रत्वावच्छिन्नस्य मोक्षं प्रत्यल्पव्यवधानात्, क्रियात्वावच्छिन्नस्याप्यपुनर्बन्धकादिभावानुप्रवेशेन तौल्यात्। एतेन यद्भावापेक्षया यद्भावस्येत्याद्यपि व्याख्यातम्, अवधेरुत्कृष्टत्वेनावधिमतः सामान्यतो ग्रहस्त्वकिञ्चित्करः, विपर्ययस्यापि सुवचत्वात्।

अथेति, यज्जातीयापेक्षया यज्जातीयस्येति, शङ्कापक्षे ज्ञानजातीयापेक्षया चारित्रजातीयस्येत्यर्थः, फलं प्रति मोक्षाख्यफलं प्रति, अल्पव्यवधानादिति, ज्ञानजातीयं केवलज्ञानं न साक्षान्मोक्षाङ्गम्, किन्तु चारित्रजातीयसर्वसंवररूपसर्वोत्कृष्टचारित्रद्वारैव, उक्तचारित्रप्राप्तिमन्तरेण कस्यापि केवलज्ञानिनोऽपि मोक्षाप्राप्तेः, तत्प्राप्तौ चान्तर्मुहूर्त्तमात्रेण तत्प्राप्तेः, व्यापारेण व्यापारिणो व्यवधाने च सति चारित्रजातीयाऽपेक्षया ज्ञानजातीयस्य मोक्षफलं प्रति दूरव्यवधानमिति क्रियाऽपेक्षया ज्ञानस्यापि द्रव्यत्वं स्यादिति भावः। एतेन पूर्वोक्तहेतुना, यद्भावापेक्षया यद्भावस्येत्याद्यपीति यद्भावापेक्षया यद्भावस्य फलं प्रति दूरव्यवधानं तद्भावापेक्षया तद्भावो द्रव्यमित्यपीत्यर्थः। दशवैकालिकसूत्रे ज्ञानस्य क्रियाऽपेक्षया प्रथमोपन्यस्तत्वात्प्राधान्यमित्याशङ्कते—

पढमं णाणं तओ दया इत्यत्र प्रथमोपन्यस्तत्वात् ज्ञानस्य प्राधान्यमिति चेत्, न, सुअं मे आउसं तेणं इत्याद्याचारसूत्रे गुरुकुलवासरूपायाः क्रियाया अप्यादावुपन्यस्तत्वात्। यथा हि ज्ञानेन दयां भावयेत् इति नियमविधिः, तथा गुरुकुलवासक्रियया ज्ञानं भावयेदिति नियमविधिरपि तुल्य एव। अत एव गुरुपर्युपासनायाः श्रवणज्ञानादीनां द्वारत्वमुक्तं प्रज्ञप्तौ। एतेन बहिरन्तरङ्गभावेन विशेषोऽपि निरस्तः। योगरूपेण बाह्यत्वस्यो-

पुंवेए अट्ठ वासा अट्ठ मुहुत्ता जसुच्चगोयाणं। साए बारसहारगविग्घावरणाण किंचूणं ॥४७॥

(स्वो०)—पुरुषवेदेऽष्टौ वर्षाणि जघन्या स्थितिः, अष्टौ मुहूर्त्तानि यशःकीर्त्तिउच्चैर्गोत्रयोः, साते-सद्वेदनीये द्वादश मुहूर्त्तानि जघन्या स्थितिः, आहारकशरीरं तदङ्गोपाङ्गं विघ्न-पञ्चप्रकारमन्तरायं आवरणं-पञ्चप्रकारं ज्ञानावरणं तत्सहचरितं दर्शनावरणचतुष्कमेतासां षोडशानां प्रकृतीनां किञ्चिदूनं मुहूर्त्तं जघन्या स्थितिरिति गाथार्थः ॥४७॥

(मलय०)—पुरुषवेदे पुरुषवेदस्याष्टौ वर्षाणि जघन्या स्थितिः, अन्तर्मुहूर्त्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। 'यशःकीर्त्युच्चैर्गोत्रयोरष्टौ मुहूर्त्ताः जघन्या स्थितिः, अन्तर्मुहूर्त्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। सातवेदनीयस्य जघन्या स्थितिर्द्वादश मुहूर्त्ताः, अन्तर्मुहूर्त्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। तथा 'आहार' त्ति-आहारकद्विकस्य-आहारकशरीराहारकाङ्गोपाङ्गरूपस्य 'विग्घावरणाण' त्ति-पञ्चप्रकारस्य विघ्नस्य-अन्तरायस्य पञ्चविधज्ञानावरणस्य दर्शनावरणचतुष्टयस्य च सर्वसंख्यया षोडशप्रकृतीनां जघन्या स्थितिः किञ्चिदूनं मुहूर्त्तमन्तर्मुहूर्त्तमित्यर्थः, अन्तर्मुहूर्त्तमबाधा, अबाधाकालहीनः कर्मदलिकनिषेकः। अत्राप्याहारकद्विकस्य जघन्या स्थितिरन्तर्मुहूर्त्तप्रमाणोक्ता मतान्तरेणान्यथा सान्तःसागरोपमकोटीकोटीप्रमाणा द्रष्टव्या, कर्मप्रकृत्यादिषु तथाभिधानात्, एतच्च प्रागेव दर्शितम् ॥४७॥

दोमास एग अद्धं अंतमुहुत्तं च कोहपुव्वाणं। सेसाणुक्कोसाओ मिच्छत्तठिईए जं लद्धं ॥४८॥

(स्वो०)—द्वौ मासावेको मासोऽर्द्धं मासोऽन्तर्मुहूर्त्तं च क्रोधमानमायालोभानां यथासंख्येन सञ्ज्वलनानामनन्तरोदितप्रकृत्यधि-

उत्तरप्रकृतीनांजघन्यस्थितिप्रमाणं

गैवास्ति, एवकारः प्रसिद्ध्यर्थः, तेन मन्त्रसन्तुष्टाकर्षकसुरक्रियाऽपि तत्रास्तीत्यभिव्यज्यते, सा च क्रिया पत्युः स्याद्वादिनो मुखं प्रदर्शयति, न तु परस्य ज्ञानैकान्तवादिनो जारस्य, यच्चोक्तं भरतप्रसन्नचन्द्रादौ क्रियाया इष्टफलं प्रति व्यभिचार इति, तत्रोच्यते—बाधे व्यभिचारे सति वैकल्पिकी विकल्पसिद्धा कारणताऽस्तु, तथा च तत्तत्क्रियायास्तत्तन्निर्जराद्वारा तत्तत्पुरुषीयमुख्यफलहेतुत्वात् न दोष इत्युक्तं भवति। उक्तं च—'संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे ॥ रोगचिकित्साविधिरिव कस्यापि कथंचिदुपकारी'इति। द्वारित्वमप्युभयतो मुखमेव ज्ञानक्रिययोर्द्वयोस्तुल्यमेव विद्मः। यथा ज्ञाने प्रधाने क्रिया द्वारं तथा क्रियायां प्रधानायां ज्ञानस्यापि द्वारतायाः क्षायोपशमिकक्षायिकस्थलयोर्दृष्टत्वात्, क्षायोपशमिकज्ञाने सत्यपि यथाख्यातचारित्रं विना केवलज्ञानस्य क्षायिके केवलज्ञाने च सत्यपि शैलेशीकरणक्रियां विना मोक्षस्यानवाप्तेरिति दिग् ॥८९॥

तृपणेति, आकर्पणादीत्यादि श्लोकस्य—आकर्पणादिनियता जपक्रियैवास्ति, सा पत्युः मुखं प्रदर्शयति न परस्य, बाधे न वैकल्पिकी कारणता भवतु. द्वारित्वमप्युभयतो मुखमेव विद्मः इत्यन्वयः, उक्तश्लोकं विवृणोति यदुक्तमिति। "आकर्पणादि कुरुते किल मन्त्रबोधो, ह्रीणेव दर्शयति तत्र न च क्रियास्यम् ॥८१॥" इत्यनेनोक्तमित्यर्थः। यत आकर्पणादिमन्त्रबोधेत्यादि, यतस्त्र्याद्याकर्षणे मन्त्रोपयोगवत् परिजपनादिक्रियाया अपि हेतुत्वमस्त्येवेत्यर्थः, तदुक्तं "परिजवणाई किरिया मंतेसु वि साहणं न तम्मत्तं। तन्नाणओ अ न फलं तन्नाणं जेणमक्किरियं ॥१॥"इति। अथ परिजपनमपि धारावाहिकं मन्त्रज्ञानमेव, न तु वाग्व्यापाररूपा क्रियाऽपि, तूर्ष्णीभावेन मन्त्रं जपतामपि फलसिद्धेरिति चेत्, न, पुरुषार्थे वनिताद्याकर्षणे परिजपनरूपमानसव्यापाराख्याया

स्यासातवेदनीयस्य च प्रत्येकमुत्कृष्टः स्थितिबन्धस्त्रिंशत्सागरोपमकोटीकोटीप्रमाणः, तस्य मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया भागे ह्रियमाणे "शून्यं शून्येन पातयेत्" इतिवचनाल्लब्धास्त्रयः सागरोपमस्य सप्त भागाः ३/७, एतावती निद्रापञ्चकासातवेदनीययोर्जघन्या स्थितिः, एवं मिथ्यात्वस्य सप्त सप्त भागा जघन्या स्थितिः परिपूर्णं सागरोपममित्यर्थः। संज्वलनवर्जानां द्वादशानां कषायाणां चत्वारः सप्तभागाः ४/७ जघन्या स्थितिः, तथा सूक्ष्मत्रिकस्य विकलेन्द्रियजातित्रिकस्य चोत्कृष्टस्थितिबन्धोऽष्टादशसागरोपमकोटीकोटीप्रमाणः, तस्य मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यं शून्येन पात्यते, ततश्छेद्यछेदकराश्योरर्द्धेनापवर्त्तना, ततो लब्धा नव सागरोपमस्य पञ्चत्रिंशद्भागाः ९/३५ एतावती सूक्ष्मत्रिकविकलेन्द्रियजातित्रिकाणां जघन्या स्थितिः। तथा स्त्रीवेदमनुष्यद्विकस्योरुत्कृष्टस्थितिबन्धः पञ्चदशसागरोपमकोटीकोटीप्रमाणः, तस्य मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यं शून्येन पातयित्वा छेद्यछेदकराश्योः पञ्चभिरपवर्त्तनं, ततो लब्धास्त्रयः सागरोपमस्य चतुर्दशभागाः ३/१४ एतावती स्त्रीवेदमनुष्यद्विकयोर्जघन्या स्थितिः। तथा हास्यरतियशःकीर्त्तिवर्जशेषस्थिरादिपञ्चकशुभविहायोगतिसुरभिगन्धशुक्लवर्णमधुररसमृदुलघुस्निग्धोष्णस्पर्शाद्यसंस्थानाद्यसंहननानामुत्कृष्टस्थितिबन्धो दशसागरोपमकोटीकोटीमानः, तस्य मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यस्य शून्येन पातने लब्ध एकः सागरोपमस्य सप्तभागः १/७ एतावत्परिमाणा तेषां हास्यादीनां जघन्या स्थितिः। द्वितीययोः संस्थानसंहननयोरुत्कृष्टस्थितिबन्धो द्वादशसागरोपमकोटीकोटीप्रमाणः, तस्य मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यं शून्येन पातयित्वा छेद्यछेदकराश्योरर्द्धेनापवर्त्तना, ततो लब्धाः षट् सागरोपमस्य पञ्चत्रिंशद्भागाः ६/३५ इयन्मात्रा तयोर्जघन्या स्थितिः। तृतीययोः संस्थानसंहननयोरुत्कृष्टस्थितिबन्धस्य चतुर्दश सागरोपमकोटीकोटीप्रमाणस्य मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यं शून्येन पातयित्वा छेद्यछेदकराश्योश्चतुर्दशकेनापवर्त्तना, ततो लब्ध एकः सागरोपमस्य पञ्च भागः १/५ इयती तयोर्जघन्या

पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥१॥" इति, प्रयोगश्चात्र, न चरणहीनं ज्ञानम् ईप्सितार्थप्रापकं सत्क्रियाऽसहकृतज्ञानत्वात्, दृष्टप्रदीपनकपलायनमार्गस्वदेशप्राप्त्यभिलाषिगमनक्रियाशून्यपङ्गुज्ञानवत्, सौत्रो वा दृष्टान्तः मार्गज्ञनिर्यामकाधिष्ठितेप्सितदिक्सम्प्रापकपवनक्रियाशून्यपोतवत्, तथा चाह "जह छेयलद्धनिज्जामओवि, वाणियग इच्छियं भूमिं। वाएण विणा पोओ न एइ महण्णवं तरिउं ॥१॥ तह नाणलद्धनिज्जामओवि सिद्धिं वसहिं न पाउणइ। निउणोवि जीवपोओ, तवसंजममारुअविहूणो।२।" इति, क्रियाऽपि केवला नेप्सितार्थसाधिका सज्ज्ञानाऽसहकृतक्रियात्वात्, प्रदीपनकभयप्रपलायमानाऽन्धपुरुषक्रियावत् इति, नन्वेवं तर्हि किमीप्सितार्थसाधकमिति चेत्, ज्ञानक्रियोभयसद्भाव एव, तथाहि सम्यग्ज्ञानक्रियावान् भयेभ्यो मुच्यते उभयसंयोगवत्त्वात् प्रदीपनकभीतान्धस्कन्धारूढपङ्गुवत्, तदुक्तं "संयोगसिद्धीए फलं वयंति, न हु एगचक्केण रहो पयाइ। अंधो अ पङ्गू अ वणे समिच्चा ते संपउत्ता नगरं पविट्ठा" इति, यश्च ज्ञाने अर्थवादः "आसक्तिमांश्च चरणे करणेऽपि नित्यम्" ॥८४॥ इत्यादिना प्रागुपदर्शितः तन्निरसनायोत्तरार्द्धमाह ज्ञानार्थवादसदृशाश्चरणार्थवादाः, श्रूयन्त एव बहुधा समये ततः किमिति, समये सिद्धान्ते, तथाहि सामाइयमाइयं सुयनाणं जाव बिन्दुसाराओ। तस्सवि सारो चरणं सारो चरणस्स निव्वाणं ॥१॥ सुयनाणंमिवि जीवो वट्टंतो सो न पाउणइ मोक्खं। जो तवसंजममइए जोए न चएइ वोढुं जे ॥२॥ जह खरो चंदणभारवाही भारस्स भागी न हु चंदणस्स। एवं खु नाणी चरणेण हीणो नाणस्स भागी न हु सोग्गइए ॥ ३ ॥ सुबहुंपि सुअमहीअं किं काही चरणविप्पहीणस्स। अन्धस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥४॥ इत्यादि—

अर्थवादाः स्तुतिवाक्यानि ॥९०॥ चरणार्थवादानेव दर्शयति—

उत्तरप्रकृतीनामुत्कृष्टस्थिति प्रमाणं

मोहनीयवर्गः, चारित्रमोहनीयप्रकृतिसमुदायश्चारित्रमोहनीयवर्गः, नोकषायमोहनीयप्रकृतिसमुदायो नोकषायमोहनीयवर्गः, नामप्रकृतिसमुदायो नामवर्गः, गोत्रप्रकृतिसमुदायो गोत्रवर्गः, अंतरायप्रकृतिसमुदायोऽन्तरायवर्गः। एतेषां च वर्गाणामात्मीयात्मीयोत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोटथादिलक्षणा, तस्या मिथ्यात्वस्योत्कृष्टया स्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया भागे हृते सति यल्लभ्यते, तत्पल्योपमासङ्ख्येयभागन्यूनं सत्, उक्तशेषाणां निद्रादिप्रकृतीनां जघन्यस्थितिपरिमाणमवसेयं, तद्यथा--दर्शनावरणवेदनीययोरुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोटीप्रमाणा, तस्या मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटीकोटीपरिमाणया भागे ह्रियमाणे शून्यं शून्येन पातयेत्, लब्धास्त्रयः सागरोपमस्य सप्तभागाः, ते पल्योपमासङ्ख्येयभागहीना निद्रापञ्चकासातवेदनीययोर्जघन्या स्थितिः। एवं मिथ्यात्वस्य सप्त सप्त भागाः पल्योपमासङ्ख्येयभागहीना जघन्या स्थितिः। सञ्ज्वलनवर्जानां द्वादशानां कषायाणां चत्वारः सप्तभागाः पल्योपमासङ्ख्येयभागहीनाः। पुरुषवेदवर्जानामष्टानां नोकषायाणां वैक्रियषट्काहारकद्विकतीर्थकरयशःकीर्तिशेषाणां नामप्रकृतीनां नीचैर्गोत्रस्य च द्वौ सागरोपमस्य सप्तभागौ पल्योपमासङ्ख्येयभागहीनौ जघन्या स्थितिः इति। जीवाभिगमादौ चाचार्योक्तमेव जघन्यस्थितिपरिमाणं पल्योपमासङ्ख्येयभागन्यूनमुक्तम्। तथा च स्त्रीवेदमधिकृत्य तत्र सूत्रं—"इत्थिवेदस्स णं भंते! कम्मस्स केवइयं कालं बन्धठिई पन्नत्ता? गोयमा! जहण्णेणं सागरोवमस्स दिवड्ढो सत्तभागो पलिओवमस्स असंखेज्जइभागेण ऊणो" इत्यादि ॥४८॥

**वेउव्विछक्कि तं सहसताडियं जं असन्निणो तेसिं। पलियासंखंसूणं ठिई अबाहूणियनिसेगो ॥४९॥**

(स्वो०)—वैक्रियषट्के तत्पूर्वोक्तं स्थितिमानं सागरोपमसप्तभागद्वयं सहस्रगुणितं स्थितिर्भवति $\frac{2000}{7}$, यतो यस्मात्तासां असंज्ञिनो

॥२२७॥

लिताात् चरणसहकृतात्, विभक्तिव्यत्ययेन ज्ञानादित्यनेनास्यान्वयः, तथा एकान्तिकी, सा फलाप्तिः, उक्तार्थदार्ढ्यार्थं निदर्शनान्याह ज्ञातानीति, तदितरे चेष्टाविकलाः त्रयोऽपि, तितीर्षुर्नर्त्तकी मार्गज्ञश्च, उत्तरार्द्धस्य भावार्थमाविष्करोति ज्ञातानि चात्रेत्यादिना, संवदन्ति चात्रावश्यकनिर्युक्तिगाथाः, ताश्चेमे "नाणं सविपयनिययं, न नाणमित्तेण कज्जनिप्फत्ती। मग्गण्णू दिट्ठंतो, सचेट्ठो अचेट्ठोय ॥१॥ आउज्जनट्टकुसला, वि नट्टिया तं जणं न तोसेइ। जोगं अज्जुंजमाणी, निंदं खिंसं च सा लहइ ॥२॥ इय लिङ्ग नाणसहिओ, काइयजोगं न जुंजई जो उ। न लहइ स मुक्खसुखं, लहइ य निंदं सपक्खाओ ॥ ३ ॥ जाणंतोऽवि य तरिउं काइयजोगं ण जुंजइ जो उ नईए। सो वुड्डइ (वुज्झइ) सोएणं, एवं नाणी चरणहीणो ॥४॥ इति ॥९२॥

मुक्त्वा नृपो रजतकाञ्चनरत्नखानी–र्लोहाकरं प्रियसुताय यथा ददाति ॥
तद्वद्गुरुः सुमुनये चरणानुयोगं, शेषत्रयं गुणतयेत्यधिका क्रियैव ॥ ९३ ॥

मुक्त्वेतिमूलश्लोकस्य यथा नृपः प्रियसुताय रजतकाञ्चनरत्नखानीर्मुक्त्वा लोहाकरं ददाति, तद्वद् गुरुः सुमुनये चरणानुयोगं ददातीत्यस्यानुकर्पः, नन्वेवं तर्हि किं द्रव्यगणितधर्मकथानुयोगान् नैव ददातीत्यत आह शेषत्रयं गुणतयेति, ददातीत्यप्यत्र योज्यम्, ततः क्रियायाः प्राधान्यमाविष्करोति, तदेवाह इत्यधिका क्रियैवेति सङ्क्षेपार्थः। चत्तारि उ अणुओगा, चरणे धम्मगणियाणुओगेय। दवियणुजोगे य तहा, अहक्कमं ते महिड्ढीया ॥१॥ सविसयवलवत्तं पुण, जुज्जइ तहवि अ महिड्ढिअं चरणं। चारित्तरक्खणट्ठा, जेणिअरे तिन्नि अणुओगा ॥ २ ॥ चरणपडिवत्तिहेउं, धम्मकहा कालदिक्खमाईया। दविए दंसणसुद्धी, दंसणसुद्धस्स चरणं तु ॥३॥ जह रण्णो विसएसुं, वयरे कणगे अ रययलोहे अ। चत्तारि आगरा खलु, चउण्ह पुत्ताण ते दिन्ना ॥४॥ चिंता

निषेकविषयः, अबाधासमयान् मुक्त्वा परतः कर्मदलिकनिषेको भवतीति भावार्थः, तथा चोक्तं भगवत्यां—"अबाहूणिया कम्मठिई कम्मनिसेगो" इति ॥४९॥

**मोत्तुमबाहासमए बहुगं तयणंतरे रयइ दलियं। तत्तो विसेसहीणं कमसो नेयं ठिई जाव ॥५०॥**

(स्वो०)—अबाधासमयेषु दलनिक्षेपो न भवति, अतः मुक्त्वाऽबाधासमयान् तस्या अनन्तरसमये सर्वप्रभूतं दलं निक्षिपति, तस्मात् परतः प्रतिसमयं विशेषहीनं विशेषहीनं क्रमशः परिपाट्या नेतव्यं–ज्ञातव्यम्, यावदन्तस्थितिरिति गाथार्थः ॥५०॥

(मलय०)—तदेवमुक्तं जघन्यस्थितिपरिमाणम्। सम्प्रति निषेकप्ररूपणावसरः, तत्र च द्वे अनुयोगद्वारे, तद्यथा–अनन्तरोपनिधा-परम्परोपनिधा च। तत्रानन्तरोपनिधाप्ररूपणार्थमाह—सर्वस्मिन्नपि कर्मणि बध्यमाने आत्मीयानबाधासमयान् मुक्त्वा निजनिजाबाधासमयेभ्य ऊर्ध्वमित्यर्थः, दलिकनिषेकं करोति, तत्राबाधासमयेभ्योऽनन्तरे समये बहुकं प्रभूतं दलिकं रचयति, ततस्तस्मात्समयाद् नन्तरं समये समये विशेषहीनं दलिकमारचयति, तद्यथा—अबाधानन्तरसमयात्परतो द्वितीये समये विशेषहीनं, ततोऽपि तृतीये समये विशेषहीनं, तस्मादपि चतुर्थसमये विशेषहीनं, एवं क्रमशः क्रमेण विशेषहीनं तावद्वाच्यं, यावत्तत्समयबध्यमानकर्मणामुत्कृष्टा स्थितिश्चरमसमय इत्यर्थः ॥५०॥

अपवादमाह—

**आउस्स पढमसमया परभविया जेण तस्स उ अबाहा। पल्लासंखियभागं गंतुं अद्धद्धयं दलियं ॥५१॥**

(स्वो०)—आयुष्कर्मणः प्रथमसमयादारभ्य एवमेव दलनिक्षेपः कार्यः, परभविका–अन्यभविका येन कारणेन तस्याबाधा, यद्यपि

दनपेक्षायां सत्यां ततस्तेन प्रियपुत्रेण लोहक्रयनिषेधे कृते अपूर्वोत्पादनिरोधे च कृते रजताद्याकरत्रयप्रवृत्तिर्न भवति, रजतादिनिष्काशकलोहोपकरणाभावात्, यानि च राज्ञा प्राक्प्रदत्तानि लोहोपकरणानि तेषु क्षयं प्रतिपन्नेषु सत्सु नव्यरजतादिनिष्काशनं न भवतीति लोहोपकरणनिष्पादनाय एवं प्राक् प्रदत्तखड्गादिशस्त्रक्षये सति तदतिरिक्तशस्त्राभावे राज्यसंरक्षणमपि न भवतीति तत्संपादनाय च रजतकाञ्चनवज्राकरिकाः पुत्राः स्वस्वाकरोत्खातरजतादिभिः हस्त्यादिभिश्च लोहाकरोत्खातलोहग्रहणं कुर्वन्तीति लोहाकर उपजीव्यः, तत्र यथाऽसौ लोहाकर उपजीव्यत्वेन रजतकाञ्चनवज्राकराणामाधारभूतः, तत्प्रवृत्तौ सत्यामेव तेषामपि प्रवृत्तेः, एवमत्रापि चरणानुयोगः गणितधर्मकथाद्रव्यानुयोगानामाधारभूतः, तत्प्रवृत्तौ तेषामपि प्रवृत्तेः, तथाहि चरणे व्यवस्थितो यस्साधुस्स एव शास्त्रोक्तविधिना शेषानुयोगग्रहणसमर्थो भवति नान्य इति चरणं महर्द्धिकमित्यभिप्रायः ॥९३॥

प्रज्ञापनीयशमिनो गुरुकुलवास एव श्रेयान्, तत एव ज्ञानाद्युपपत्तेः, तत एव च ज्ञाने दर्शने चारित्रे च स्थैर्योपपत्तेरित्युपदर्शयितुमाह—

प्रज्ञापनीयशमिनो गुरुपारतन्त्र्यं, ज्ञानस्वभावकलनस्य तथोपपत्तेः ॥
ध्यान्ध्यं परं चरणचारिमशालिनो हि, शुद्धिः समग्रनयसङ्कलनावदाता ॥ ९४ ॥

प्रज्ञापनीयेत्यादि, प्रज्ञापनीयशमिन इति, गीतार्थेनाऽनन्यगुणाऽऽवासकेन श्रीगुरुणाऽनुग्रहबुद्ध्या प्रज्ञापयितुं संबोधयितुं योग्यस्य शमदमादिगुणशालिनस्साधोरित्यर्थः। ननु किं स्वरूपश्शिष्यः प्रज्ञापनीय इति चेत्, उच्यते, उद्धृतोऽहमनेनाकारणवत्सलेनातिघोरसंसारकूपकुहरे निपतन्निति हेतोर्ममायं परमोपकारी धर्माचार्यो भगवान्, यदाज्ञाराधनप्रभावान्मादृशजना अप्यनभिज्ञाः कुशलानुष्ठानरुचयो भवतारकगुर्वमृतदृष्टिकाङ्क्षिणो भद्रपरिणामिनश्चारित्रभारोद्वहनसमर्था भवन्ति, तदुक्तम्, "गुरुपयसेवानिरओ, गुरुआणारा-

पुनरप्यूर्ध्वं तदपेक्षया विशेषहीनं विशेषहीनतरं दलिकमारभ्यमाणं पल्योपमासंख्येयभागमात्रासु स्थितिषु गतास्वर्द्धं भवति, एवमर्द्धार्द्धहान्या तावद्वाच्यं यावदुत्कृष्टा स्थितिः ॥५१॥

**पलिओवमस्स मूला असंखभागम्मि जत्तिया समया। तावइया हाणीओ ठिइबंधुक्कोसए नियमा ॥५२॥**

(स्वो०)—पल्योपमस्य वर्गमूलासङ्ख्येयभागे यावन्मात्रसमयसङ्ख्याः तावन्मात्रा हानयः स्थितिबन्धे उत्कृष्टे सर्वकर्मसु नियमात्—निश्चयेन भवन्ति, आयुर्मोहनीयोत्कृष्टस्थित्योर्बृहदन्तरं, कथमेतद् भवति? उच्यते—पल्योपमासङ्ख्येयभागस्य वैचित्र्यान्न दोष इति गाथार्थः ॥५२॥

(मलय०)—कियन्ति पुनरेवमर्द्धार्द्धहानिस्थानानि भवन्तीति तन्निरूपणार्थमाह—सर्वेषामपि कर्मणामुत्कृष्टे स्थितिबन्धे क्रियमाणे निषेकमधिकृत्य पूर्वप्रकारेणार्द्धार्द्धहानयः प्रवर्त्तमानाः पल्योपमस्य यत्प्रथमं वर्गमूलं तस्यासङ्ख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणा नियमान्निश्चयेन भवन्ति। आह—ननु मिथ्यात्वमोहनीयस्योत्कृष्टस्थितेः सप्ततिसागरोपमकोटीकोटीप्रमाणत्वादेतावत्यो हानयः सम्भवन्तु, आयुषस्तूत्कृष्टस्थितेस्त्रयस्त्रिंशत्सागरोपममात्रत्वात्कथमेतावत्यो हानयः सम्भवन्ति? उच्यते—इहासङ्ख्येयतमो भागोऽसंख्येयभेदात्मकः, असङ्ख्यातस्यासङ्ख्यातभेदभिन्नत्वात्। ततोऽर्द्धहानौ पल्योपमस्यार्द्धहानिसङ्ख्यायां च पल्योपमप्रथमवर्गमूलस्यासंख्येयतमो भाग आयुष्यल्पतरो गृह्यते, इत्यविरोधः। तथा सर्वाण्यर्द्धहानिस्थानानि स्तोकानि, तेषां पल्योपमप्रथमवर्गमूलासंख्येयभागप्रमाणत्वात्। एकस्मिन्नर्द्धहान्योरन्तरे निषेकस्थानान्यसंख्येयगुणानि, पल्योपमासंख्येयभागगतसमयप्रमाणत्वात्तेषाम् ॥५२॥

**उक्कोसाठिईबंधा पल्लासंखेज्जभागमित्तेहिं। हसिएहिं समएहिं हसइ अबाहाए इगसमओ ॥५३॥**

क्कि गस्स ॥१॥" इति। गुरुपारतन्त्र्यं गुर्वाज्ञावशवर्त्तित्वं गुरुकुलवास इतियावत्, तदेव सर्वगुणमूलभूतम्, तत्सत्त्व एव तत्सत्त्वात्। उक्तञ्च "सव्वगुणमूलभूओ, भणिओ आयारपढमसुत्ते जं। गुरुकुलवासो वस्सं, वसेज्ज तो तथ्थ चरणत्थी" ॥१॥ इति, स एव सुखावासः गुणस्थानत्वात्, यतः कोऽपि मुनिः कर्मोदयेन कदाचिच्चारित्रमार्गान्निर्गतभावो भवेत्तदापि गच्छस्थाः करुणारसन्यासस्वान्तमहामुनयो रक्षन्ति तं मुनिम्, तदुक्तं "जइवि य निग्गयभावो तहा वि रक्खिज्जइ स अन्नेहिं। वंसकडिल्ले छिन्नो वि वेणुओ पावए न महिं ॥१॥" एतस्मिन् परित्यक्ते भगवदाज्ञैव परित्यक्तेत्युभयलोकपरित्यागः कृतस्तेन, तदुक्तं "एसा य परा आणा, पयडा जं गुरुकुलं न मोत्तव्वं। आयारपढमसुत्ते सुत्तोच्चिय दंसियं एयं ॥१॥ एयम्मि परिच्चत्ते आणा खलु भगवतो परिच्चत्ता। तीए य परिच्चागे दोण्हवि लोगाण चाउत्ति" ॥२॥ इति। ज्ञानस्वभावकलनस्य तथोपपत्तेरिति, ज्ञानस्वभावकलनस्य ज्ञानस्वभाववृद्धेर्गुरुपारतन्त्र्यादेवोपपत्तेरित्यर्थः, माषतुषादीनामिव स्वयं विशेषतो ज्ञानविरहेऽपि गुरुपरतन्त्राणामपूर्वज्ञानोत्पत्तिश्शास्त्रेऽपि श्रूयते, तदुक्तं एकादशे पञ्चाशके "गुरुपारतंतनाणं, सद्दहणं एयसंगयं चेव। एत्तो उ चरित्तीणं, मासतुसादीणमुद्दिट्ठम्" इति, गुरुपारतन्त्र्यरहितस्योत्कृष्टचारित्रक्रियावतोपि ध्यान्ध्यमेव, तत्फलाभावादित्याह ध्यान्ध्यमित्यादि, अन्धस्यापि या सन्मार्गे प्रवृत्तिस्सा सञ्जाक्षसहायनरवचनानुवर्त्तित्वादेव, तद्वदगीतार्थस्यापि या मोक्षसन्मार्गे प्रवृत्तिस्सा गीतार्थवचनानुसरणादेव, तद्विपरीतभावे तु उत्कृष्टक्रियाकारिणोऽपि घोरसंसारकान्तार एव पातः, तदुक्तं "छट्ठअट्ठमदसमदुवालसेहिं, मासद्धमासखवणेहिं। अकरिंतो गुरुवयणं अणंतसंसारिओ भणिओ" ॥१॥ इति। शुद्धिः समग्रनयसङ्कलनावदातेति शुद्धिरात्मनः कर्मराहित्यावस्था न केवलं क्रियानयाधीना, नवा केवलं ज्ञाननयाधीना, किन्तु परस्परसापेक्षतदुभयनयाधीनैवेति भावः ॥ ९४ ॥

जा एगिंदिजहन्ना पल्लासंखंससंजुया सा उ। तेसिं जेट्ठा सेसाण संखभागहिय जासन्नी ॥५४॥

एकेन्द्रियादीनां जघन्या स्थितिः

(स्वो०)—यां एकेन्द्रियाणां जघन्या स्थितिः सा पल्योपमासङ्ख्येयभागमात्रसमयैरभ्यधिका तेषामुत्कृष्टा स्थितिर्भवति, शेषाणां द्वित्रिचतुरिन्द्रियाणां यावदसंज्ञी—असंज्ञिपञ्चेन्द्रियपर्यन्तानां पल्योपमसङ्ख्येयभागमात्रसमयैरभ्यधिका उत्कृष्टा स्थितिरिति गाथार्थः ॥५४॥

(मलय०)—तदेवमबाधागतसमयहान्या स्थितिकण्डकहानिप्ररूपणा कृत्वा, संप्रत्येकेन्द्रियाद्युत्कृष्टजघन्यस्थितिबन्धप्ररूपणां चिकीर्षुः प्रथमत एकेन्द्रियाणामुत्कृष्टस्थितिबन्धमानमाह—यैकेन्द्रियाणां जघन्या स्थितिः सा पल्योपमासंख्येयभागमात्रैः समयैः संयुता तेषामेकेन्द्रियाणामुत्कृष्टा स्थितिर्भवति। का नामैकेन्द्रियाणां जघन्या स्थितिः ? इति चेत्, उच्यते—इह स्वमूलप्रकृतेरुत्कृष्टस्थितिबन्धस्य मिथ्यात्वसत्कयोत्कृष्टया स्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया भागे हृते यल्लभ्यते, तत्पल्योपमासंख्येयभागन्यूनं सदेकेन्द्रियाणां जघन्यस्थितेः परिमाणं, तथाहि—ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोटीप्रमाणा, तस्या मिथ्यात्वस्योत्कृष्टया स्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया भागे हृते लब्धास्त्रयः सागरोपमस्य सप्त भागाः, ते पल्योपमासंख्येयभागहीनाः क्रियन्ते, एतावत्प्रमाणां ज्ञानावरणपञ्चकदर्शनावणनवकसातासातवेदनीयान्तरायपञ्चकानामेकेन्द्रिया जघन्यां स्थितिं बध्नन्ति, न न्यूनाम्। एवं मिथ्यात्वस्य जघन्यां स्थितिमेकं सागरोपमं पल्योपमासंख्येयभागहीनं, कषायमोहनीयप्रकृतीनां चतुरः सागरोपमस्य सप्त भागान्पल्योपमासंख्येयभागहीनान्, नोकषायाणां तथा वैक्रियषट्काहारकद्विकतीर्थंकरवर्जानां शेषाणां नामप्रकृतीनां गोत्रप्रकृतिद्वयस्य च द्वौ सागरोपमस्य सप्तभागौ पल्योपमासंख्येयभागहीनाविति। एतच्च कर्मप्रकृत्यादिचूर्णिकारमतेनोक्तं, सूत्रकारमतेन तु

दितिरियाण एमेव ॥१॥ सेसाण नारयाणं, तिरियत्थीणं च तिविहदेवाणं। नत्थि हु खइयं सम्मं, अन्नेसिं चेव जीवाणं ॥२॥" इति, आईपुढवीसुत्ति आद्यासु तिसृषु पृथिवीसु रत्नप्रभाशर्कराप्रभावालुकाप्रभानरकत्रयवर्त्तिनारकाणामित्यर्थः, खय १ उपशम २ वेयगं ३ इति क्षायिकमौपशमिकं क्षायोपशमिकं चेति त्रीण्यपि सम्यक्त्वानि सम्भवन्तीत्यर्थः। वेमाणियदेवाणं वैमानिकदेवानां, पणिंदितिरियाण पञ्चेन्द्रियाणां मनुष्याणां तिरश्चां वा, एवमेव पूर्वोक्तानि त्रीण्यपि सम्यक्त्वानि सम्भवन्तीत्यर्थः ॥१॥ सेसाण नारयाणंत्ति पङ्कप्रभाद्यधस्तनपृथिवीचतुष्टयनारकाणामित्यर्थः। तिरियत्थीणं चत्ति असङ्ख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिरश्चां तत्स्त्रीणां चेत्यर्थः। तिविहेति भवनपतिव्यन्तरज्योतिष्केत्यर्थः, नत्थि हु खइयंत्ति क्षायिकसम्यक्त्वं नास्ति, औपशमिकक्षायोपशमिके तु भवत इत्यर्थः। सम्मं अन्नेसिं चेव जीवाणंत्ति, नत्थि इत्यस्यान्वयात् अन्येषामेकद्वित्रिचतुरिन्द्रियाऽसंज्ञिपञ्चेन्द्रियाणां पुनः सम्यक्त्वमेव नास्तीत्यर्थः, दंसणे नियमा नाणंत्ति वचनात् सम्यक्त्वनियतमेव ज्ञानमिति हेतोरत्र तत्सहचरितं क्षायोपमिकज्ञानमपि तदनुसारि विशुद्धं ज्ञेयमिति सङ्क्षेपार्थः, विस्तरार्थस्तु तट्टीकातोऽवसेयः। सम्यग्दर्शनज्ञानयोश्चतुर्गतिकजीवस्वामिकत्वादैहभविकत्वं पारभविकत्वं तदुभयभविकत्वञ्च भगवत्यामुक्तं सङ्गच्छते, तत्पाठश्चैवं, "इहभविए भंते नाणे परभविए नाणे तदुभयभविए नाणे? गोयमा इहभविए वि नाणे परभविए वि नाणे तदुभयभविए वि नाणे। दंसणंपि एवमेवत्ति," चारित्रं तु सम्यग्दर्शनज्ञानवन्न चातुर्गतिकं, किन्तु मनुष्यगतिकमेव, अतएवैहभविकम्, तत् क्रियानुष्ठानरूपमिति तत्परिणामस्य यावज्जीवावधिकत्वात्, न हि चारित्रवानिह भूत्वा तेनैव चारित्रेण कश्चित्पुनश्चारित्री भवति, उक्तञ्च "इहभविए भंते चरित्ते परभविए चरित्ते तदुभयभविए चरित्ते? गोयमा इहभविए चरित्ते नो परभविए चरित्ते नो तदुभयभविए चरित्ते" इति, एतेनैवाभिप्रायेण ग्रन्थकारोप्याह

गुणिता सती, क्रमात्क्रमेण विकलासंज्ञिनां–द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां ज्येष्ठोत्कृष्टा इतरा वा जघन्या वा जायते। इयमत्र भावना–एकेन्द्रियाणां ज्ञानावरणीयादिसत्का जघन्या स्थितिः पल्योपमासंख्येयभागहीनसागरोपमसप्तभागत्रिकादिरूपा सा पञ्चविंशत्या गुणिता द्वीन्द्रियाणां जघन्या स्थितिर्भवति, पञ्चाशता गुणिता त्रीन्द्रियाणां, शतेन गुणिता चतुरिन्द्रियाणां, सहस्रेण गुणिताऽसंज्ञिपञ्चेन्द्रियाणाम्। तथा या प्रागुक्तस्वरूपा जघन्या स्थितिरेकेन्द्रियाणां, सा पल्योपमसंख्येयभागाधिका क्रियते, ततः पञ्चविंशत्या गुणिता द्वीन्द्रियाणामुत्कृष्टा स्थितर्भवति, पञ्चाशता गुणिता त्रीन्द्रियाणां,शतेन गुणिता चतुरिन्द्रियाणां, सहस्रेण गुणिताऽसंज्ञिपञ्चेन्द्रियाणाम्। कर्मप्रकृतिकारादयः पुनरेवमाहुः–एकेन्द्रियाणामुत्कृष्टः स्थितिबन्धः पञ्चविंशत्या गुणितो द्वीन्द्रियाणामुत्कृष्टः स्थितिबन्धो भवति, पञ्चाशता गुणितस्त्रीन्द्रियाणामुत्कृष्टः स्थितिबन्धः, शतेन गुणितश्चतुरिन्द्रियाणां, सहस्रेण गुणितोऽसंज्ञिपञ्चेन्द्रियाणां, एष एवानन्तरोक्तो द्वीन्द्रियादीनामात्मीय आत्मीय उत्कृष्टः स्थितिबन्धः, पल्योपमसंख्येयभागहीनो जघन्यः स्थितिबन्धो वेदितव्य इति, तत्त्वं पुनरतिशयज्ञानिनो विदन्ति ॥५५॥

**ठिइठाणाइं एगिंदियाण थोवाइं होंति सव्वाणं। बेंदीण असंखेज्जाणि संखगुणियाणि जह उप्पिं ॥५६॥**

(स्वो०)—जघन्यस्थित्यन्तसमयादारभ्य समयवृद्ध्या यावदुत्कृष्टस्थित्यन्तसमयं, किमुक्तं भवति ? जघन्योत्कृष्टस्थित्योरन्तराले समयाः, तानि स्थितिस्थानानि उच्यन्ते। तान्येकेन्द्रियाणां सर्व्वजीवेषु सर्वस्तोकानि भवन्ति, पल्योपमासङ्ख्येयभागसमयतुल्यानि तान्येवासङ्ख्येयगुणानि द्वीन्द्रियाणां, तान्येव सङ्ख्येयगुणानि त्रीन्द्रियाणां, एवं चतुरिन्द्रियासंज्ञिसंज्ञिनामपि नेतव्यानीति गाथार्थः ॥

(मलय०)—कृतैकेन्द्रियादीनामुत्कृष्टजघन्यस्थितिबन्धपरिमाणप्ररूपणा। सम्प्रति स्थितिस्थानप्ररूपणार्थमाह–इह जघन्यस्थितेरारभ्य

दात्मविशुद्ध्या मोक्षो जात इति तस्यापि बाह्यकरणं गुणकरं न जातं, किन्त्वात्मविशुद्धिः, अतो रजोहरणादिकं बाह्यकरणमनैकान्तिकमिति किमनेनेत्यपि निरस्तम्, भरतस्य यद्यपि पूर्वकालावच्छेदेन बाह्यचारित्रं नास्ति तथाप्यभ्यन्तरचारित्रं तु तस्यापि सञ्जातमेव, यतस्तदभावे तथाविधात्मविशुद्धिरेव न स्यात्, तद्रूपत्वात्तस्य, द्रव्यलिङ्गमपि पश्चाद् देवार्पितं सञ्जातमेव, तदभावे प्रणामानर्हत्वेन प्रणाममेवोचितविधिज्ञः सुरेन्द्रोऽपि न कुर्यात्, उक्तञ्च श्रीजम्बूद्वीपप्रज्ञप्तौ "तएणं से भरहे केवली सयमेवाभरणालंकारं ओमुअइ" इति सूत्रटीकायां केवलज्ञानानन्तरं स भरतः आसनप्रकम्पावधिना शक्रेण केवलिन्! द्रव्यलिङ्गं प्रपद्यस्व यथाऽहं वन्दे विदधे च निष्क्रमणोत्सवमित्युक्तस्सन् स्वयमेवाऽऽभरणभूतमलङ्कारं वस्त्रमाल्यरूपमवमुञ्चतीत्यादि। आवश्यकवंदनकाध्ययनचूर्णावप्युक्तं "जदा वा दव्वलिंगं नत्थित्ति न कोइ तेण पणमति, भणितं च–किह लिंगं न पमाणं उप्पण्णे केवलंमि जं नाणे। न नमंति जिणं देवा सुविहितणेवत्थपरिहीणं, जदा दव्वलिङ्गं गहितं ताहे नमिज्जति" इति, प्रसन्नचन्द्रस्यापि यत्पश्चादात्मविशुद्धिस्सञ्जाता सापि रजोहरणादिबाह्यलिङ्गदर्शनबलादेवेति द्रव्यलिङ्गमप्यात्मविशुद्धिकारणत्वादवलम्बनीयमेव। ननु मरुदेवामाता देवार्पितवेषरूपद्रव्यचारित्रमन्तरेणैवान्तकृत्केवली भूत्वा मोक्षं गतेति तत्र व्यभिचारान्न चारित्रं कारणमिति चेत्, न, यत आहत्य भावमात्रेण न कारणभावो विघटते, तथाहि भरतादीनां केवलज्ञानानन्तरमव्यवधानेन न मुक्तिरिति स्वायुर्दीर्घकालसद्भावेन द्रव्यचारित्रमपि तैर्गृहीतम्, मरुदेव्यादीनां तु द्रव्यचारित्रग्रहणेच्छामन्तरेण भावचारित्रमपि न स्यादिति द्रव्यचारित्रग्रहणेच्छाप्राबल्येऽपि केवलज्ञानानन्तरमन्तर्मुहूर्तकालमात्रेण मुक्तिसौधाऽऽरोहणाद् दीर्घकालस्य कारणीभूतस्याभावादेव द्रव्यचारित्रग्रहणाऽभावः, न तु द्रव्यचारित्रस्य कारणत्वाऽभावात्, तथा सति स्वायुषो दीर्घकालं पश्यन्तोऽपि केवलिनो न तं गृह्णीयुः, न चैवम्, अत एव यथाऽन्यलिङ्गिनामपि भावतः

तेभ्योऽपि पर्याप्तसूक्ष्मस्यासंख्येयगुणानि, तेभ्योऽपि पर्याप्तबादरस्यासंख्येयगुणानि, तेभ्योऽप्यपर्याप्तद्वीन्द्रियस्यासंख्येयगुणानि, एवं पर्याप्तद्वीन्द्रियापर्याप्तपर्याप्तत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां यथोत्तरमसंख्येयगुणानि वक्तव्यानि। कथमेवं गम्यते सर्वत्राप्यसंख्येयगुणानि संक्लेशस्थानानि ? इत्युच्यते–इह सूक्ष्मस्यापर्याप्तस्य जघन्यस्थितिबन्धारम्भे यानि संक्लेशस्थानानि तेभ्यः समयाधिकजघन्यस्थितिबन्धारम्भे यानि संक्लेशस्थानानि तानि विशेषाधिकानि, तेभ्योऽपि द्विसमयाधिकजघन्यस्थितिबन्धारम्भे विशेषाधिकानि, एवं तावद्वाच्यं यावत्तस्यैवोत्कृष्टा स्थितिः। उत्कृष्टस्थितिबन्धारम्भे च यानि संक्लेशस्थानानि तानि जघन्यस्थितिसंक्लेशस्थानापेक्षयाऽसंख्येयगुणानि। ततो यदि तदेवं तदा सुतरामपर्याप्तबादरस्य संक्लेशस्थानान्यपर्याप्तसूक्ष्मसंक्लेशस्थानापेक्षयाऽसंख्येयगुणानि भवन्ति। तथाहि–अपर्याप्तसूक्ष्मस्थितिस्थानापेक्षयाऽपर्याप्तबादरस्य स्थितिस्थानानि संख्येयगुणानि, एतच्च प्रागेवोक्तम्। स्थितिस्थानवृद्धौ च संक्लेशस्थानवृद्धिः, ततो यदाऽपर्याप्तसूक्ष्मस्यापि स्थितिस्थानेष्वतिस्तोकेषु जघन्यस्थितिस्थानसत्कसंक्लेशस्थानापेक्षयोत्कृष्टस्थितिस्थाने संक्लेशस्थितिस्थानान्यसङ्ख्येयगुणानि भवन्ति, तदा बादरापर्याप्तस्थितिस्थाने सूक्ष्मापर्याप्तस्थितिस्थानापेक्षया सुतरां भवन्ति। एवमुत्तरत्राप्यसंख्येयगुणत्वं भावनीयं। यथा च संक्लेशस्थानानि प्रत्येकमसंख्येयगुणान्युक्तानि, एवं विशोधयोऽपि प्रत्येकमसंख्येयगुणा अभिधातव्याः। यतो यान्येव संक्लिश्यमानस्य संक्लेशस्थानानी तान्येव विशुध्यमानस्य सतो विशुद्धिस्थानानि सम्भवन्ति, एतच्च पुरस्तात्सप्रपञ्चं भावयिष्यते, ततः संक्लेशस्थानानीव विशोधिस्थानान्यपि प्रत्येकमसंख्येयगुणानि वाच्यानि ॥५६॥

स्थितिस्थान प्ररूपणा संक्लेशविशुद्धिस्थान प्ररूपणा च

**सव्वजहन्ना वि ठिई असंखलोगप्पएसतुल्लेहिं । अज्झवसाएहिं भवे विसेसअहिएहिं उवरुवरिं ॥५७॥**

(स्वो०)—सर्वेषां कर्मणां सर्वजघन्या स्थितिः साऽप्यसंख्येयलोकाकाशप्रदेशप्रमाणैरध्यवसायैः क्रियते निष्पाद्यते बध्यत इति

नागारं सर्वमनुष्ठानमुपयोगपुरस्सरमेव कर्तव्यं, यस्मादप्रमादकृताः सर्वेऽपि साधुव्यापारा उत्तरोत्तरसंयमकण्डकारोहणेन केवलज्ञानलाभाय भवन्ति, तथा चागमः "जोगे जोगे जिणसासणम्मि दुक्खक्खया पउज्जंते। एक्केक्कंमि अणंता, वट्टंता केवली जाया ॥१॥ तथा कम्ममसंखिज्जभवं, खवइ अणुसमयमेव उवउत्तो। अन्नयरंमि वि जोए, सज्झायंमि य विसेसेण" ॥२॥ इति, इत्यलं पल्लवितेन।

आद्धश्चरित्रपतितोऽपि च मन्दधर्मा, पक्षं त्रयोऽपि कलयन्त्विह दर्शनस्य ॥
चारित्रदर्शनगुणद्वयतुल्यपक्षा, दक्षा भवन्ति सुचरित्रपवित्रचित्ताः ॥ ९७ ॥

आद्धश्चरित्रपतितोऽपीत्यादिश्लोकः, आद्धः अर्हत्तत्त्वविषयकमतिज्ञानापायांशरूपसम्यग्दर्शनवान् चारित्रमोहनीयकर्मोदयवत्त्वेन भोगवृत्तिश्श्रावकः, चरित्रपतितोऽपि शैलेशगिरिभारवद् अल्पसत्त्वैर्दुर्वाह्यं चारित्रभारमल्पवीर्यत्वेन वोढुमशक्तत्वाच्चारित्रभ्रष्टोऽपि, मन्दधर्माः प्रमादग्रस्तत्वेन शिथिलाचाराः पार्श्वस्थादयः इत्येते त्रयोऽपि दर्शनस्य पक्षं कलयन्तु, निर्मलतरचारित्रभारवहनेऽशक्तत्वेन दर्शनं मे निश्चलतरं भवत्वित्येवं दर्शनमात्रेण सन्तोषवन्तो मुख्यवृत्त्या दर्शनपक्षमेव मन्यन्ते, गौणवृत्त्या तु चारित्रपक्षमिति, ननु के दर्शनपक्षं चारित्रपक्षञ्च समवृत्त्या मन्यन्त इत्यत आह चारित्रदर्शनगुणेति, चारित्रदर्शनगुणद्वये तुल्यः पक्षो येषां ते तथा, अत्र दर्शने सति नियमाज्ज्ञानमिति दर्शनपदेन तत्सहचरितं ज्ञानमपि ग्राह्यम्, तथाच दर्शनपक्षस्य उपलक्षणतया ज्ञानपक्षस्य चारित्रपक्षस्य च समवृत्तितयाऽभ्युपगन्तारः, दक्षाः सम्यक्क्रियासु निपुणाः, सुचरित्रपवित्रचित्ताः सुष्ठु भगवता यथा भाषितं तथा चरित्रं सुचरित्रं, तेन पवित्रं चित्तं येषां ते तथा, भवन्ति सुसंयमिनो भवन्तीत्यर्थः। एतत्संवादिनी चेयमावश्यकगाथा "दंसणपक्खो सावय, चरित्तभट्ठे य मंदधम्मेय। दंसणचरित्तपक्खो, समणे परलोग कंखिम्मि" ॥ १ ॥ आवश्यकव-

न्यायात् षष्ठ्यर्थे प्रथमाविभक्तिः, तस्याश्च स्थितेर्जघन्याया अप्यसंख्येया विशेषाः, एतदेकेन्द्रियस्थितिमभिदधता दर्शितमेव, ये स्थितिबन्धाध्यवसाया हीना मध्यमा उत्कृष्टाश्च ते प्रत्येकं असंख्येयलोकाकाशप्रदेशतुल्याः, तेषामसंख्येयलोकानां वैचित्र्यान्न दोषः, तस्याश्च स्थितेरसंख्येया विशेषाः प्रतिसमयमुच्यमानाः, सर्वोत्कृष्टापि स्थितिरसंख्येयसमयात्मिका नानन्तसमयात्मिका इति गाथार्थः ॥५८॥

एकैकस्थितिस्थाने बन्धहेतुभूताध्यवसायसंख्या

(मलय०)—एतदेव किञ्चिद्भावयति–इह 'सुपां सुपो भवन्ति'इति प्राकृतलक्षणवचनात् षष्ठ्यर्थे प्रथमा, ततोऽयमर्थः–स्थितेर्हीनाया मध्यमाया उत्कृष्टायाश्च प्रत्येकं बन्धाध्यवसाया बन्धहेतवोऽध्यवसाया असंख्यलोकखप्रदेशतुल्याः, संख्यातीतेषु लोकेषु ये आकाशप्रदेशास्तत्प्रमाणाः, तस्याश्च स्थितेर्जघन्याया मध्यमाया उत्कृष्टायाश्च प्रत्येकमसंख्येया विशेषाः, ते च स्थितिहेतुभूताध्यवसायवैचित्र्यनिबन्धनाद्देशकालरसविभागवैचित्र्यादवसेयाः । अथवा जघन्यापि स्थितिरसंख्येयसमयात्मिका, एवं मध्यमोत्कृष्टा च । तत्र जघन्या स्थितिः समयसमयमात्रापगमनेन प्रतिसमयमन्यथात्वं प्रतिपद्यते इति तस्या असंख्येया विशेषाः । एवं मध्यमाया उत्कृष्टायाश्च भावनीयम् ॥५८॥

**सत्तण्हं अजहन्नो चउहा ठिइबंधु मूलपगईणं । सेसा उ साइअधुवा चत्तारि वि आउए एवं ॥५९॥**

(स्वो०)—सप्तानामजघन्यश्चतुर्द्धा साद्यादिः स्थितिबन्धो मूलप्रकृतीनां भवति । शेषास्तु जघन्योत्कृष्टाऽनुत्कृष्टाः साद्यध्रुवा एव । चत्वारोऽपि जघन्याऽजघन्योत्कृष्टाऽनुत्कृष्टा आयुष्येवमेव साद्यध्रुवा इति। आयुषः पृथग्भणनाच्छेषाः सप्तप्रकृतयो व्यक्ता एव। तुशब्दादुभयश्रेणी ज्ञापयति, क्षपकबादरान्तसमये मोहनीयस्य, षण्णां सूक्ष्मरागान्तसमये जघन्यः समयमेकं स्थितिबन्धः, स चाप्राप्त-

न्तायप्रकर्षात्क्षपकरूपाऽपूर्वकरणादिश्रेण्यवलम्बनेन निकाचितमपि कर्म प्रणिहन्ति, यत उक्तं महाभाष्ये "सव्वपगइणमेवं परिणामवसा-दुवक्कमो होज्जा। पायमनिकाइयाणं तवसा उ निकाइयाणंपि" ॥१॥ इति, अध्यात्मसारेऽप्युक्तम् "ज्ञानयोगस्तपः शुद्धमित्याहुर्मुनिपुङ्गवाः। तस्मान्निकाचितस्यापि, कर्मणो युज्यते क्षयः" ॥१॥ इति, तपश्च बाह्याभ्यन्तरभेदेन द्विविधं, बाह्यत्वं चास्य बाह्यद्रव्यापेक्षत्वात्, प्रायो बहिःशरीरतापकत्वात्, लौकिकैरपि तपस्तया ज्ञायमानत्वात्, कुतीर्थिकैरपि स्वाभिप्रायेणासेव्यमानत्वाच्च, अभ्यन्तरत्वं च लौकि-कैरनभिलक्ष्यत्वात्, तत्रान्तरीयैश्च भावतोऽनासेव्यमानत्वात्, मोक्षावाप्तावन्तरङ्गत्वात्, अभ्यन्तरशरीरस्य कार्मणलक्षणस्य तापकत्वा-च्चेति। तत्र बाह्यं षड्विधं तपोऽभ्यन्तरषड्विधतपस उपबृंहकमिति तदुपबृंहणफलकतत्कर्त्तव्यताप्रदर्शनार्थमुत्तरार्द्धमाह बाह्यं तप इत्यादि। बाह्यं तप आचरणीयम् अभ्यन्तरतपोवृद्धिहेतुत्वात्, यदभ्यन्तरतपोवृद्धिजनकं तदाचरणीयमेव, प्रतिलेखनादिक्रियावत्, न च हेतोरसिद्धिः, आगमप्रमाणसिद्धत्वात्, यत उक्तमध्यात्मसारे प्रकृतग्रन्थकृता "ज्ञानमेव तपः प्राहुः, कर्मणां तपनात्तपः। तदाऽभ्यन्तरमेवेष्टं, बाह्यं तदुपबृंहकम्" ॥१॥ इति। एतेनाभ्यन्तरमेव तपः कर्त्तव्यं न बाह्यं तप इत्यारेकाऽपि निरस्ता। न च जिनै-रनाचरितत्वात्तपोऽनाचरणीयं, यज्जिनैरनाचरितं तदन्यैरप्यनाचरणीयं, यथा प्रलीमसवृत्तिरिति प्रत्यनुमानेन सत्प्रतिपक्षो हेतुरिति वाच्यम्, यत्के तीर्थंकरैस्स्वयं निजगदे तैरेव तीर्थेश्वरैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारकं। सद्यो विघ्नहरं हृषीकदमनं माङ्गल्यमिष्टार्थकृद्, देवाकर्षणमारदर्पदलनं तस्माद्विधेयं तपः ॥१॥ इत्यादिश्लोकेन "जो अ तवो अणुचिन्नो वीरवरेणं महाणुभावेणं छउमत्थकालियाए अहक्कमं कित्तइस्सामि" ॥१॥" इति "निव्वाणं संपत्तो चउदसभत्तेण पढमजिणचन्दो। सेसा उ मासएणं वीर-जिणिन्दो य छट्ठेणं" ॥ २ ॥ इति चागमनिस्यन्दरूपेण तपसो जिनाचरितत्वप्रतिपादनात् प्रत्यनुमानहेतोरसिद्धत्वात्, न च तपः

स्थितिबन्धाः सप्तानामपि मूलप्रकृतीनां साद्यध्रुवा ज्ञातव्याः, तत्र जघन्याः साद्यध्रुवतया प्रागेव भाविताः। उत्कृष्टः स्थितिबन्धः
सर्वसंक्लिष्टे संज्ञिनि मिथ्यादृष्टौ कियत्कालं प्राप्यते, तदनन्तरं तस्यैवानुत्कृष्टः, ततो भूयोऽपि कालान्तर उत्कृष्ट इति द्वावप्येतौ पर्यायेण
लभ्यमानत्वात्साद्यध्रुवौ। आयुष्यायुःसंज्ञके कर्मणि चत्वारोऽपि जघन्याजघन्योत्कृष्टानुत्कृष्टरूपाः स्थितिबन्धाः एवं–साद्यध्रुवतया
प्रतिपत्तव्याः। आयुर्बन्धो हि प्रतिनियतकालभावी, ततस्तद्विशेषा जघन्यादयः सर्वेऽपि साद्यध्रुवा एव घटन्ते, न प्रकारान्तररूपाः ॥५९॥

**नाणंतरायदंसणचउक्कसंजलणठिई अजहन्ना। चउहा साई अधुवा सेसा इयराण सव्वाओ ॥६०॥**

(स्वो०)—सम्पूर्णज्ञानान्तरायदर्शनावरणचतुष्कसंज्वलनानामेषामष्टादशानां अजघन्या स्थितिश्चतुर्द्धा भवति, शेषा जघन्योत्कृष्टा-
नुत्कृष्टा साद्यध्रुवा स्थितिः। इतरासां–अष्टादशशेषाणां सर्वाः–जघन्याऽजघन्योत्कृष्टानुत्कृष्टाः स्थितयः साद्यध्रुवा भवन्तीति गाथार्थः।

(मलय०)—कृता मूलप्रकृतिविषया साद्यादिप्ररूपणा। संप्रत्युत्तरप्रकृतिविषयां तां विधित्सुराह–पञ्चानां ज्ञानावरणप्रकृतीनां,
पञ्चानामन्तरायप्रकृतीनां, दर्शनावरणचतुष्कस्य चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपचतुष्टयस्य, चतुर्णां संज्वलनानां सर्वसंख्ययाष्टादशानां
प्रकृतीनां स्थितिरजघन्या चतुर्धा चतुष्प्रकारा, तद्यथा–सादिरनादिर्ध्रुवा अध्रुवा च। तथाहि–ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरण-
चतुष्टयानां जघन्यस्थितिबन्धः क्षपकस्य सूक्ष्मसंपरायस्य स्वगुणस्थानकचरमसमये वर्त्तमानस्य, संज्वलनचतुष्टयस्य क्षपकस्यानिवृत्तिबा-
दरसंपरायस्य स्वस्वबन्धव्यवच्छेदसमये, स चैकसामयिक इति सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्यजघन्यः, स चोपशान्तमोहगुणस्थानके
न भवति, ततः प्रतिपाते च भूयः संजायते इति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। शेषा जघन्यो-
त्कृष्टानुत्कृष्टा च स्थितिः साद्यध्रुवा। तत्र जघन्याऽनन्तरमेव भाविता, उत्कृष्टानुत्कृष्टा च संज्ञिनि मिथ्यादृष्टौ पर्यायेण लभ्यते। तथाहि-

शाऽभिन्नां ज्ञानदर्शनचारित्रत्रयीं प्रमाणसिद्धां विधेयतया कथयति, स्यादेतत् केवलज्ञानानन्तरमेव न मुक्तिः, किन्तु सर्वसंवररूप-क्रियाऽनन्तरमेवेति ज्ञानस्य परंपरया हेतुत्वात् गौणं हेतुत्वं, क्रियायास्त्वनन्तरत्वाद् मुख्यं हेतुत्वमिति क्रियानयो विशिष्यते, ज्ञाननयस्तु हीयते, तदिदमुक्तं भाष्यकृतापि "नाणं परंपरमणंतरा उ किरिया तयं पहाणयरं, जुत्तं कारणम्" इति,तथा च कथं नाःपसिद्धान्तप्रसङ्ग इति चेत्, मैवम्, प्रवृत्तिकाले तज्जनकज्ञानस्यापि सत्त्वेनानन्तरत्वाऽविरोधात्, न ह्युत्तरविशेषगुणेन पूर्वविशेषगुण-नाश इत्यभ्युपगमो नः। न चैवं क्रियाया द्वारत्वविरोधः, द्वारिणोऽनाशेऽपि स्वफलयोर्नियतमध्यभावेन तदविरोधात्, द्वारत्वे द्वारि-नाशविशिष्टत्वाऽप्रवेशात्, तदिदमुक्तं भाष्यकृतैव "अहवा समयं तो दोन्नि जुत्ताइं" इति, एतेन "जम्हा दंसणनाणा संपुन्नफलं ण दिंति पत्तेयं। चारित्तजुआ दिंति हु विसिस्सए तेण चारित्तं ॥१॥" इतीयमागमोक्तिर्व्याख्याता, घनतराऽज्ञानाऽन्धकारविनि-गूनिसञ्चितकर्मकचवरदूरीकरणाऽभिनवकर्मकचवरागमनप्रतिरोधैरात्मगृहशुद्धये प्रदीपदीपन-संमार्जनीमार्जन-वातायनजालकपिधान-स्थानीयज्ञान-तपः-संयमानामेकदैव व्यापारात्,फलोपयोगितया ज्ञानक्रिययोर्द्वयोरपि मुख्यत्वाविशेषात्,यदागमः,"नाणं पयासयं सोहओ तवो संजमो अ गुत्तिकरो। तिण्हंपि समाओगे मुक्खो जिणसासणे भणिओ" ॥१॥ इति सङ्क्षेपार्थः ॥९९॥ सकलशास्त्रा-र्थोपनिषद्भूतं निश्चयनयत आत्मस्वरूपं विभणिषुराह—

अशुद्धिः शुद्धिं न स्पृशति वियतीवात्मनि कदा-प्यध्यारोपात्कोपाकुणिमकणिका कातरदृशाम् ॥
स्वयुक्ताः पर्याया घनतरतरङ्गा इव जवा-द्विवर्त्तव्यावृत्तिव्यतिकरभृतश्चिज्जलनिधौ ॥ १०० ॥

अशुद्धिरित्यादि, वियति आकाश इव, आत्मनि निश्चयनयेन स्वतश्शुद्धे जीवे, शुद्धिम् अनाद्यनन्तविशदज्ञानादिज्यो-

संज्वलनचतुष्टयस्यानिवृत्तिबादरः, शेषाणां सूक्ष्मसंपरायः । एता हि प्रकृतयोऽशुभाः, अशुभानां जघन्यः स्थितिबन्धो विशुद्धपरिणामे सति भवति । क्षपकश्चात्यन्तविशुद्धपरिणामः, ततो जघन्यस्थितिबन्ध आसामुक्तरूपे क्षपके प्राप्यते नान्यत्र, स चैकसामयिक इति साद्यध्रुवः, शेषाणां च ध्रुवबन्धिनीनां प्रकृतीनां बादरैकेन्द्रियः पृथिव्यम्बुप्रत्येकवनस्पतिरूपः पर्याप्तस्तद्योग्यविशुद्धिपरिणामोपेतो जघन्यं स्थितिबन्धं कियत्कालं विधत्ते न शेषस्तथास्वाभाव्यात् । ततः क्षणान्तरे स एवाजघन्यमारभते इति तासामपि द्वाविमौ साद्यध्रुवौ ॥६१॥

अट्ठाराणऽजहन्नो उवसमसेढीए परिवडंतस्स । साई सेसवियप्पा सुगमा अधुवा धुवाणंपि ॥६२॥

(स्वो०)—अष्टादशानामजघन्यो भवत्युपशमश्रेण्याः प्रतिपततः सादिः, सादिश्चाध्रुवोऽवश्यं भवति, तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुव इति । शेषविकल्पाः (अष्टादशानां) अध्रुवबन्धिनीनां चत्वारोऽप्यध्रुवबन्धित्वादेव सुखेनैव भाव्यन्ते साद्यध्रुवा इति, ध्रुवबन्धिनीनामप्युत्कृष्टानुत्कृष्टौ साद्यध्रुवौ भावितावेव संज्ञिनि मिथ्यादृष्टौ तयोर्भावादिति गाथार्थः ॥६२॥

(मलय०)—साम्प्रतमष्टादशानामजघन्यं चतुष्प्रकारं, शेषाणां च ध्रुवबन्धिनीनामुत्कृष्टानुत्कृष्टौ साद्यध्रुवावध्रुवबन्धिनीनां चतुरोऽपि साद्यध्रुवान् भावयति–ज्ञानावरणपञ्चकादीनामनन्तरगाथोक्तानामष्टादशानां प्रकृतीनामजघन्यः स्थितिबन्धः सादिरुपशमश्रेणीतः प्रतिपततः प्राप्यते । ततोऽसौ चतुष्प्रकारस्तथाहि–उपशमश्रेणीतः प्रतिपाते सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया । शेषास्तु विकल्पा जघन्यादय आसामेवाष्टादशानां प्रकृतीनां, तथा 'अधुवा इति' अत्र षष्ठ्यर्थे प्रथमा, अध्रुवबन्धिनीनामपि च चत्वारोऽपि विकल्पाः साद्यध्रुवाः ॥६२॥

अस्यैवार्थस्य भावनाय स्वामित्वमाह–

पोत्तरोत्तरपर्यायरूपेण परिणममानास्समुद्ररूपतामेव यान्ति एवमेव पूर्वपूर्वमत्यादिज्ञानपर्याया उत्तरोत्तरज्ञानपर्यायरूपेण परिणममाना अन्ततः क्षायोपशमिकभावं परित्यज्य क्षायिकभावमापन्नाः केवलज्ञानात्मकात्मसमुद्ररूपतामेव यान्ति। ननु यदि सकलवस्तुस्तोमप्रकाशकस्वभावो जीवः,तस्य तथाभूतस्वभावः केवलज्ञानमिति व्यपदिश्यते,तर्हि स स्वभावः पूर्वं केनावृत इति चेत्,सर्वघातिना केवलज्ञानावरणेनेति जानीहि,अथैवं सति केवलज्ञानावरणस्य सर्वघातित्वात् कार्त्स्न्येनैव ज्ञानाच्छादने व्याप्रियमाणत्वान्मन्दोऽपि प्रकाशो नैव स्यादिति चेत्,मैवम्,यतो घनतराभ्रपटलावृतस्यापि दिनकरस्य दिनरजनीविभागजनकमन्दप्रकाश इव तथाविधावरणस्वभावादेवाक्षरानन्ततमो भागोऽव्यक्तज्ञानलक्षणोऽनावृत एव सदाऽवतिष्ठते,अन्यथा जीवाजीवविभागाभावप्रसङ्गः,तदुक्तम् "सव्वजीवाणं पि य णं अक्खरस्स अणंतमो भागो, निच्चुग्घाडिओ चिट्ठइ, सोवि अ जइ आवरिज्जा तेणं जीवो अजीवत्तणं पाविज्जा" इति। ननु प्रतियोगिव्यधिकरणो य उपयोगाभावस्तदभाववत्त्वमेवोपयोगलक्षणो जीव इत्यत्रोपयोगपदार्थतया विवक्षितं, तच्च यदा कदाचिदुपयोगमादाय निगोदजीवेऽव्यक्तज्ञानाऽभावेऽपि सङ्गतिमञ्चतीति तत्र निर्जीवत्वप्रसङ्गो नेति चेत्, स्यादेतत्, यदि देवदत्तस्य दण्डित्वलक्षणवत् तटस्थलक्षणं स्यात्, नत्वेवम्, उक्तलक्षणस्य स्वरूपलक्षणत्वात् आशुशुक्षणेरौष्ण्यलक्षणवत्, न ह्यौष्ण्यं स्वस्वरूपं परित्यज्य कदाप्यग्निरनुगतत्वं याति, तथा सति स्वसंज्ञामेव परिजह्यात्, एवमेवात्रापि। अथास्तु "सुट्ठवि मेघसमुदए होंति पभा चंदसूराणं" इति वचनप्रामाण्यात् घनतरमेघाच्छन्नस्य निशाकरस्येवात्मनस्तथास्वाभाव्याज्जीवाजीवविभाजको मन्दप्रकाशः, तथापि तत्र को हेतुरिति चेत्, केवलज्ञानावरणमेव, केवलज्ञानावृत्तिज्ञानत्वव्याप्यजातिविशेषावच्छिन्ने तद्धेतुत्वस्य शास्त्रार्थत्वात्, अत एव केवलिनो न मतिज्ञानाद्युत्पादनप्रसङ्गः, मतिज्ञानादिकार्यस्य केवलज्ञानावरणात्मककारणाऽऽयत्तत्वेन तदभावे तदभावात्,अत एव चास्य विभागगुणत्वमिति

त्कृष्टां स्थितिं कुर्वन्ति संज्ञिनः, केवलं तीर्थकराहारकद्विकदेवायुर्वर्जितानां मिथ्यादृष्टयः, तीर्थकरादीनां तु सम्यग्दृष्ट्यादयः, कथमेतदवसेयम्? इति चेत्, उच्यते—इह तीर्थकरनाम सम्यक्त्वप्रत्ययं, आहारकद्विकं तु संयमनिमित्तम्। उक्तं च—"सम्मत्तगुणनिमित्तं, तित्थयरं संजमेण आहारं" इति। देवायुषश्चोत्कृष्टा स्थितिरवाप्यते सर्वार्थसिद्धौ, तत्र च गमनं संयमवशात्, ततस्तदपि संयमनिमित्तं, अतो मिथ्यादृष्टेर्मूलत एतद्बन्धासम्भवात्सम्यग्दृष्ट्यादयस्तदुत्कृष्टस्थितिबन्धका वेदितव्याः, केवलं "सव्वाण ठिई असुभा उक्कोसुक्कोससंकिलेसेणम्" इति वचनप्रामाण्यात् तद्बन्धकेषु संक्लिष्टाध्यवसानाः प्रतिपत्तव्याः, तत्र यो मनुष्योऽसंयतो वेदकसम्यग्दृष्टिः पूर्वं नरकेषु बद्धायुष्को नरकं प्रत्यभिमुखो मिथ्यात्वमनन्तरसमये प्रतिपत्स्यत इत्यन्तिके तीर्थङ्करनामकर्मस्थितिबन्धे वर्त्तते, स तद्बन्धकेषु सर्वसंक्लिष्ट इति तीर्थकरनाम्न उत्कृष्टस्थितिबन्धं करोति। तथा चोक्तं शतकचूर्णौ—"तित्थयरनामस्स उक्कोसठिइं मणुस्सो असंजओ वेयगसम्मदिट्ठी पुव्वं नरगबद्धाउगो नरगाभिमुहो मिच्छत्तं पडिवज्जिहदी इति अंतिमे ठिईबंधे वट्टमाणो बंधइ, तब्बंधगेसु अइसंकिलिट्ठो त्ति काउं। जो सम्मत्तेणं खाइगेणं नरगं वच्चइ सो तओ विसुज्झयरोत्ति काउं तम्मि उक्कोसो न हवइ त्ति"। आहारकद्विकस्यापि योऽप्रमत्तसंयतः प्रमत्तभावाभिमुखः, स तद्बन्धकेषु सर्वसंक्लिष्ट इत्युत्कृष्टं स्थितिबन्धं करोति। देवायुषोऽपि पूर्वकोट्यायुः पूर्वकोटित्रिभागादिसमये वर्त्तमानः प्रमत्तसंयतोऽप्रमत्तभावाभिमुख उत्कृष्टां स्थितिमादधाति। इहैकान्तेनाप्रमत्तः सर्वविशुद्ध आयुर्बन्धमेव च नारभते, केवलं प्रमत्तेनारब्धं सदप्रमत्तो निर्वाहयति, उक्तं च—'अपमत्तो बन्धिउं नाढवेइ, पमत्तेणाढत्तमप्पमत्तो बन्धेइ' इति। देवायुषश्चोत्कृष्टस्थितिबन्धः पूर्वकोट्यायुषः पूर्वकोटित्रिभागप्रथमसमय एकं समयं प्राप्यते परतोऽबाधा हानिसम्भवात्, तदानीं च प्रमत्त इति प्रमत्तोऽप्रमत्तभावाभिमुख इत्युक्तम्। शेषाणां तु शुभानामशुभानां वा प्रकृतीनामुत्कृष्टस्थितेर्बन्धकाः सर्वसंक्लिष्टाः संज्ञिनो मिथ्यादृष्ट्यादयः, तत्राऽप्ययं

जघन्योत्कृष्टस्थितिबन्धस्वामित्वं

॥२३६॥

संसारादितरत्वाकरत्वात् तदभावे केवलिनो न भवन्ति, उक्तञ्च "जमिह छउमथ्थधम्मा, जम्माईया न होन्ति सिद्धाणं। इय केवलीण-माणिणि, चोदियमाणम्मि को दोसो" ॥१॥ इति। आत्मनि ज्ञानांशमादाय मत्यादिपर्यायवद् द्रव्यांशमादाय जन्ममरणनरनैरयिकादयो बालयौवनादयश्च पर्याया व्यवहारनयापेक्षया ज्ञातव्याः, अतति सातत्येन गच्छति तांस्तान् पर्यायानित्यात्मेति व्युत्पत्तेर्मत्यादिपर्यायवद् मनुष्यादिपर्यायान् अनुभवत्येवात्मा, कथमन्यथैक एवात्मा देवो मनुष्यो नारकस्तिर्यङ् च कथ्यते इति सङ्क्षेपार्थः॥१००॥

जैनमार्गो हि निश्चयव्यवहारोभयनयात्मकः, तत्र निश्चयनयस्तत्त्वभूतं युक्तिसिद्धमर्थं कथयति, व्यवहारनयश्च लोकाभिमतग्राहीति लोकव्यवहारमिदं वक्ति, तत्र यदैकनयस्य प्राधान्यं तदा तदितरनयस्य गौणत्वमिति निश्चयनयस्य प्राधान्ये तन्नयेनात्मस्वरूपं विभणिषुराह—

न बद्धो नो मुक्तो न भवति मुमुक्षुर्न विरतो, न सिद्धः साध्यो वा व्युपरतविवर्त्तव्यतिकरः ॥
असावात्मा नित्यः परिणमदनन्ताविरतचि-चमत्कारस्फारः स्फुरति भवतो निश्चयनये ॥ १०१ ॥

न बद्ध इत्यादि, व्यवहारनयतः कर्मपाशैर्बद्धोऽप्यात्मा निश्चयनयेनासङ्ख्यातप्रदेशो निरञ्जनोऽनन्तज्ञानादिगुणो कर्मदोषैरगम्य इति तेनैव बद्ध इत्याह न बद्ध इति, कर्मपाशैरबन्धनान्न मुक्तः, य एव प्राक् बद्धस्स एव पश्चान्मुच्यते, बन्धमोक्षयोस्सामानाधिकरण्यात्, बन्धाभावे मुक्त्यभाव इत्याह नो मुक्त इति, विषयतासम्बन्धेनेच्छादिकं प्रति तादात्म्यसम्बन्धेन विषयस्यापि कारणत्वेन मुक्तिरूपविषयाऽभावे न तद्विषयकेच्छाऽपीति न मुमुक्षुरित्याह न भवति मुमुक्षुरिति, आकाशवदनन्तोऽहं, घटवत्प्राकृतं जगत्। इति ज्ञानं तथैतस्य, न त्यागो न ग्रहो लयः ॥१॥ महोदधिरिवाऽहं सः, प्रपञ्चो वीचिसन्निभः। इति ज्ञानं तथैतस्य, न त्यागो न ग्रहो लयः ॥२॥ अहं स शुक्तिसंकाशो, रूप्यवद्विश्वकल्पना। इति ज्ञानं तथैतस्य, न त्यागो न ग्रहो लयः॥३॥ इत्यादि-

जघन्योत्कृष्टस्थितिबन्धस्वामित्वं

एकेन्द्रिया जघन्यां स्थितिं निर्वर्त्तयन्ति, कासाञ्चिदसंज्ञिनः क्षपकाश्च। इयमत्र भावना–देवत्रिकनरकत्रिकवैक्रियद्विकाहारकद्विकतीर्थकरपुरुषवेदसंज्वलनचतुष्टयज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयोच्चैर्गोत्रसातवेदनीययशःकीर्त्तिवर्जानां शेषाणां सप्ताशीतिसंख्यानां प्रकृतीनामेकेन्द्रियाः पृथिव्यम्बुप्रत्येकवनस्पतयः पर्याप्तबादरास्तत्प्रायोग्यविशुद्धपरिणामपरिणता जघन्यस्थितिबन्धस्वामिनः, देवत्रिकनरकत्रिकवैक्रियद्विकानामसंज्ञिनः, आहारकशरीराहारकाङ्गोपाङ्गतीर्थकराणामपूर्वकरणः क्षपकः, चतुर्णां संज्वलनानां (पुरुषवेदस्य च) अनिवृत्तिबादरसंपरायः क्षपकः, पञ्चविधज्ञानावरणपञ्चविधान्तरायदर्शनावरणचतुष्टयसातवेदनीयोच्चैर्गोत्रयशःकीर्त्तीनां क्षपकः सूक्ष्मसम्परायः ॥६३॥

**सव्वाण ठिई असुभा उक्कोसुक्कोससंकिलेसेणं। इयरा उ विसोहीए सुरनरतिरिआउए मोत्तुं ॥६४॥**

(स्वो०)—सर्वासां प्रकृतीनां(उत्कृष्टा)स्थितिरशुभा भवत्यशुभहेतुत्वादशुभवृक्षस्याशुभफलवत्। तमेवाशुभहेतुं दर्शयति–उत्कृष्टा सर्वोत्कृष्टसंक्लेशतस्तीव्रकषायोदयाद् भवति, अशुभानां तीव्ररसा कटुविपाका, शुभानामपि संसारनिवासमात्रफलैव, न शुभानुभावा नीरसत्वाद्वालुकाकवलवदतोऽशुभा इति। 'इतरा' जघन्या, सा 'विशुद्ध्या' प्रतिपतमानकषायोदयेन भवति। एतदेवापवदति–सुरनरतिरश्चामायूंषि मुक्त्वा, यतस्तेषां विशुद्ध्या स्थितेर्बृहत्त्वं तीव्रशुभानुभावत्वं च व्यक्तम्। संक्लेशतोऽतोऽशुभता सिद्धैव द्रष्टव्या इति गाथार्थः ॥६४॥

स्थितिबन्धः समाप्तः

१ 'स्वभावानुभावत्वं वा' इत्यपि पाठः।

न्यरूपो विशेषरूप इत्येवं परस्परविलक्षणस्वरूपः एकनयविषयीकृतात्स्वरूपादन्यनयविषयीकृतो भिन्न एव, असावात्मा प्रशमव-
पुषां प्रशम एव वपुः तदेकतानतयाऽभेदमापन्नत्वाच्छरीरं येषां तेषां प्रशमवपुषां योगिनां ध्याने परिस्फुटतयाऽवभासमानोऽद्वय-
निधिः अद्वैतस्वरूपः, एवं सति भिन्नोऽप्यभिन्न इति दर्शितम्, पुण्यानां मोक्षरूपपरमपुरुषार्थसाधनत्वेन पुण्यानां सम्यग्दर्शनज्ञा-
नचारित्राणां,प्रसूतिः कारणम् आत्मन एव तत्तद्रूपेण परिणमनात्,अत एव च गलितपृथुपुण्येतरकथः, गलिता विनष्टा, पृथ्वी
अनादिकालीनतया महती,पुण्येतरस्य संसारात्मकबन्धकारणत्वेन पापस्याष्टविधकर्मणः,कथा उत्तरोत्तरकर्मबन्धनस्वभावतयाऽवस्थि-
तिर्यस्मात्स तथा, स्वस्वरूपाऽवाप्तिरूपस्य मोक्षस्य स्वस्वरूपत्वादेव सदातनत्वेनावाप्तस्यैवाङ्गुलीयकस्यानावाप्तत्वभ्रान्त्यवगमेऽवाप्तिरिति
कृत्वा मोक्षस्वरूपोप्यात्मा फलं नो, न कस्यचित्कार्यं, परिणामस्य स्वाभाविकस्य स्वस्मादभिन्नत्वादेव न कार्यत्वम्, औपाधिकस्य
तूपाधिकार्यत्वम्, न तु निरुपाधिस्वरूपकार्यत्वमिति कृत्वा न कस्यचिच्छुद्धात्मस्वरूपकार्यत्वमतोऽसौ हेतुर्नो,कस्यचित्कार्यस्य कारण-
मपि न भवति, विशिष्टस्वरूपतया तु विशेषणस्य कार्यत्वात्कारणत्वाच्च विशिष्टमपि तथेति तदुभयम्,अपेक्षाभेदेन फलमपि हेतुरपि,
एवम् सविकल्परूपतायाम्, आत्मनो निर्विकल्परूपत्वे त्वनुभयरूपतैवेत्यावेदयितुमुक्तमनुभयस्वभाव इति,एवम्भूतानल्पधर्मात्मा
त्वज्ज्ञाने केवले जयति सर्वोत्कृष्टतया वर्त्तते, अनेन दृष्टान्तेन सर्वेऽपि भावास्तथा प्रतिपत्तव्या इत्यावेदयितुमुक्तं जगदादर्शच-
रित इति, जगता अनुकरणीयस्वस्वरूपाविष्करणरूपाचार इत्यर्थः ॥ १०२ ॥

गुणैः पर्यायैर्वा तव जिन समापत्तिघटना–दसौ त्वद्रूपः स्यादिति विशदसिद्धान्तसरणिः ॥
अतस्त्वद्ध्यानाय ध्ययनविधिनाम्नागममनिशं, समाराध्य श्रद्धां प्रगुणयति बद्धाञ्जलिरयम् ॥ १०३ ॥

(स्वो०)–अनुभागोऽनुत्कृष्टो नामवेदनीययोः, घातिनां ज्ञानदर्शनावरणमोहान्तरायाणामजघन्यो, गोत्रस्य द्वावप्येतौ चतुर्विधौ भवतः साद्यनादिध्रुवाऽध्रुवा इति। उक्तशेपभेदाः साद्यध्रुवा, आयुपश्चत्वारोऽपीत्यक्षरार्थः। भावना तु मोहनीयस्य जघन्यानुभागवन्धं बादरक्षपको, ज्ञानदर्शनावरणान्तरायाणां जघन्यानुभागवन्धं सूक्ष्मः स्वान्तसमये एकं समयं करोति, नामगोत्रवेदनीयानां स एव सूक्ष्म उत्कृष्टानुभागबन्धं समयमेकं करोति, एवमेतौ द्वावप्यप्राप्तपूर्वकत्वात् सादी तदनन्तरमेवाभावादध्रुवौ, एवमेवोपशमश्रेण्यां घातिनाम-जघन्यो, नामगोत्रवेदनीयानामनुत्कृष्टः साद्यध्रुवौ, भव्येष्वनादि ध्रुवोऽभव्येष्विति। घातिनामुत्कृष्टानुभागवन्धं संज्ञिमिथ्यादृष्टिः करोत्येकं समयं स च साद्यध्रुवः, अनुत्कृष्टोऽपि तद्भ्रष्टाद् भवति स (तस्य) एव। नामवेदनीययोः मिथ्यादृष्टिर्जघन्यानुभागवन्धं समय-मेकं करोति, मध्यमपरिणामः प्रकृत्योः शुभाशुभयोः संक्रममाणः,अतः साद्यध्रुवोऽसौ, भूयस्तत्सम्भवात्, अजघन्योऽप्येवमेव, गोत्रस्य सप्तमपृथिव्यां मिथ्यात्वस्य प्रथमस्थित्यन्तसमये जघन्यानुभागवन्धोऽसौ साद्यध्रुवः, अतस्तस्माच्च्युतस्याजघन्योऽसावपि साद्यध्रुवः, अप्राप्ततद्गुणस्यानादिः, अभव्यस्य ध्रुवश्चेति। आयुषोऽध्रुवत्वाच्चत्वारोऽपि भाविता एवेति गाथार्थः ॥६५॥

(मलय०)—तदेवमुक्तः स्थितिवन्धः, सम्प्रत्यनुभागवन्धो वक्तव्यः, तत्र च त्रीण्यनुयोगद्वाराणि, तद्यथा–साद्यनादिप्ररूपणा, स्वामित्वप्ररूपणा, अल्पबहुत्वप्ररूपणा च। साद्यनादिप्ररूपणापि द्विधा, तद्यथा–मूलप्रकृतिविषयोत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयां तां चिकीर्पुराह–नामतृतीययोः–नामकर्मवेदनीयकर्मणोरनुत्कृष्टोऽनुभागो, घातिकर्मणां–ज्ञानावरणदर्शनावरणमोहनीयान्तरायाणां अजघन्यश्च चतुर्विधस्तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–नामवेदनीययोरुत्कृष्टोऽनुभागः क्षपकस्य सूक्ष्मसंपरायस्य स्वगुणस्थानकचरमसमयेवर्त्तमानस्य भवति स च द्वितीयसमये व्यवच्छेदमुपयातीति साद्यध्रुवः, ततोऽन्यः सर्वोऽप्यनुत्कृष्टः स चोप-

